Kashmir Series of Texts and Studies.

No. LXII.



# THE
# ĪSVARAPRATYABHIJÑĀ VIVRITIVIMARŚINĪ

BY

## ABHINAVAGUPTA

EDITED

BY

PANDIT MADHUSŪDAN KAUL SHĀSTRĪ,
Superintendent Research Department,
His Highness' Government,
JAMMU & KASHMIR,
SRINAGAR.



Published under the Authority of the Government of
His Highness Rājarājes'vara Mahārājādhirāja
S'ri MAHĀRĀJA HARISINGHJI BAHĀDUR,
G. C. S. I., G. C. I. E., K. C. V. O., LL. D.
MAHĀRĀJA OF JAMMU AND KASHMIR.

Volume II




BOMBAY:
PRINTED AT THE 'NIRNAYA SAGAR' PRESS.
1941. A. D.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्प्रथिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेशान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्सवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६२

# ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तविरचिता ।



श्रीराजराजेश्वर-महाराजाधिराज-काश्मीरनरेन्द्र-श्रीहरिसिंहजी-बहादुराज्ञया

रिसर्च-कार्यालयाध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य

मुम्बय्यां 'निर्णयसागर'मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता ।

( द्वितीयो भागः )




संवत् १९९८. काश्मीर-श्रीनगर खैस्ताब्दः १९४१.

अथ

# ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी ।

श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादरचिता ।

## अथ चतुर्थो विमर्शः ।

ईश्वरमशेषतापप्रशमनममृतद्रवं सदा वन्दे ।
अप्रतिघातिस्वेच्छाविकासविश्रान्तममृतकरमौलिम् ॥

एवं ज्ञानम्, ततः स्मृतिः, तद्व्यान्तःप्राणिका अपोहनशक्तिरिति यद्यपि क्रमः; तथापि

'अथानुभवविध्वंसे स्मृति..................।' (१।२।३)

इति पूर्वपक्षे

'सत्यं किन्तु स्मृतिज्ञानं.............।' (१।३।१)

इति सिद्धान्ते स्मृतिरेव पूर्वप्रक्रान्ता **'न चेत्'** इति सूत्रितेन प्रसङ्गेन सूचितात् प्रसङ्गविपर्ययादात्मेश्वरसिद्धौ सातिशयमभिज्ञानम् । अत एव गीतासु सा एव प्रथमसुपात्ता । तदस्याः स्वदर्शने उपपत्तिरभिधीयते

'स हि पूर्वानुभूतार्थोपलब्धा.............।'

इत्यादिना

'.........अर्थो भातः प्रमातरि ॥'

इत्यन्तेन श्लोकाष्टकेन । अन्यथाहि कश्चित् ब्रूयात्—मास्तु परदर्शने स्मृतिरुपपादिता, भवद्दर्शनेऽपितु कथं सा उपपद्यते इति । तत्र एकेन तदुपपत्तिरुक्ता । एकेन स्मृतेरनुभूतार्थप्रकाशनसाम-

र्थ्येमुक्तम् । अन्येन अनुभवतद्विषयाभ्यामेकतापर्यन्त आवेशः । तुर्येण स्मृतावनुभवो विषयतया पृथक् न भातीति । योगिज्ञानेनापि परानुभवो न पृथक्तया विषयवत् प्रकाश्यते इति ब्रुवता पञ्चमेन तदर्थ एव द्रढितः । अन्येन स्मृत्या ज्ञानस्य पृथग्विषयीकरणं शङ्क्यमानं काल्पनिकं, न वास्तवमिति उक्तम् । स्मृतिप्रसङ्गेन विकल्पस्य अपि अनुभवेन तादात्म्यं सप्तमेन उक्तम् । अन्त्येन स्मर्तव्यस्मृतिस्मर्तॄणां प्रसङ्गतश्च दृश्यदर्शनद्रष्टॄणां पारमार्थिकैकसंवित्तत्त्वविश्रान्तिर्दर्शितेति तात्पर्यम् । तत्र प्रथममुपोद्घातः समस्तशास्त्रार्थपीठबन्ध इत्यभिप्रायेण आह अवतरणिकायाम् '**इदानीं ज्ञानप्रकरणेन**' इति । ज्ञानं स्मृत्यादिरूपं स्वदर्शने घटते इत्येव विचार्यत्वेन प्रक्रियतेऽधिक्रियतेऽस्मिन्, तेन । '**निरूपयिष्यन्**' इति क्रियाया क्रियार्थायामुपपदे भविष्यति लृट् । तेन अयमर्थः—स्मृत्यादीनां सर्वेषां स्वरूपं निरूपयिष्यामीति हृदये गृहीत्वा '**स्मृतेरेव**' इति यस्याः पूर्वोपक्रान्तता तस्या एव ईश्वरशक्तिरूपतां प्रतिपादयितुमिच्छन् परदर्शने सर्वथैव अघटमानत्वमभिदधत् प्रथमं पूर्वं संभवमाह अनेन श्लोकेन ग्रन्थकृत् ग्रन्थकृदभिन्न एव वा तद्विमर्शपरिस्पन्दस्वभावः श्लोकः । तावद्ग्रहणं ज्ञानापोहनादेरपि अनन्तरं निरूपयिष्यते स्वरूपमिति क्रमं द्योतयति । ननु कुतोऽयमेवंभूतः क्रमः । आह सुस्पष्टं कृत्वा ईश्वरस्वभावस्य आत्मनः सिद्धौ हेतुता स्मृतेर्यतोऽस्ति, ततोऽयं क्रमः । कथं सुस्पष्टतेति । आह '**अशेषकालानुगत**' इति पूर्वानुभवकालः स्मरणकालश्च यावत् बोधेन न व्याप्तः, तावत् कथं स्मरणम्, तौ च न नियताविति अशेषकालानुगमस्तद्द्वारेण आयातः इति नित्यप्रकाशस्वभावो यो बोधः, तदात्मतत्त्वमिति लभ्यम् । एवमपिच यदि तदविनिर्भागेन अनु-

भूतवस्तुसंभवो न भवेत्, कथं स्मरणमिति सर्वाकारतालक्षणं स्वातन्त्र्यमुक्तम् । यदाह भट्टदिवाकरः

'सर्वेऽनुभूता यदि नान्तरर्थास्त्वदात्मसात्कारसुरक्षिताः स्युः ।
विज्ञातवस्त्वप्रतिमोपरूपा काचित्स्मृतिर्नाम न संभवेत्तत् ॥'

इति । नच इयदेव, यावत् विश्वाकारतायामपि प्रकाशरूपत्वापरिहाणिः । कस्यचिदेव भावभागस्य उन्मज्जना, अन्येषां निमज्जनेति बहुशाखे वैचित्र्ये यदस्य नित्यबोधस्वभावस्य आत्मनः स्वातन्त्र्यमेतदैश्वर्यमनन्तशाखमिति यावत् साधयितव्यं, तत् स्मृतिशक्त्या सिध्यतीति युक्तं स्पष्टत्वम् ।

स हि पूर्वानुभूतार्थोपलब्धा परतोऽपि सन् ।
विमृशन्स इति स्वैरी स्मरतीत्यपदिश्यते ॥ १ ॥

अत्र च '**पूर्वानुभूत**' इति सूत्रार्थमशेषकालानुगतशब्देन संक्षेपार्थनिरूपणेन अवतारितं '**स्वतन्त्रावबोध**' इत्यादिना । स महेश्वरः प्रत्यगात्मतां स्वात्मनि भासयमानो यद्विवृतिर्भविष्यति '**चिन्मयस्य ईश्वरस्यैवहि**' इति । अत्र प्रत्यगात्मतादशायां तथा अनेककालतोपचारोपचर्यमाणः परतोऽपि पूर्वानुभवकालादन्यस्मिन्नपि स्मरणवर्तमानकाले संस्कारप्रबोधधामनि पूर्वानुभूतार्थोपलब्धैव यतो भवति—नतु तदस्य पूर्वार्थोपलब्धृत्वं विच्छिद्यते—ततो भवनात् हेतोस्तथैव पूर्वापरोभयकालावलम्बनौचित्यादागतेन सइत्यनेन विमर्शनेन तमर्थं विमृशति । अनन्तभावानुभवितृत्वेऽपि तमेव कस्मादिति न वाच्यम्, यतः स स्वैरी स्वतन्त्रः । सदृशादृष्टप्रणिधानाद्यपि हि तस्यैव स्वातन्त्र्यात् नियतिविजृम्भा । सइत्यस्य विमर्शस्य पूर्वापरौ कालौ परस्परगलितावपि चिद्रूपे च अनिमग्नावपि सन्तौ परस्परं चिद्रूपे च निमग्नौ तं च अर्थं

र्थ्यमुक्तम् । अन्येन अनुभवतद्विषयाभ्यामेकतापर्यन्त आवेशः। तुर्येण स्मृतावनुभवो विषयतया पृथक् न भातीति । योगिज्ञानेनापि परानुभवो न पृथक्कृया विषयवत् प्रकाश्यते इति ब्रुवता पञ्चमेन तदर्थ एव द्रढितः। अन्येन स्मृत्या ज्ञानस्य पृथग्विषयीकरणं शङ्क्यमानं काल्पनिक, न वास्तवमिति उक्तम् । स्मृतिप्रसङ्गेन विकल्पस्य अपि अनुभवेन तादात्म्यं सप्तमेन उक्तम् । अन्येन स्मर्तव्यस्मृतिस्मर्तॄणां प्रसङ्गतश्च दृश्यदर्शनद्रष्टॄणां पारमार्थिकैकसवित्तत्त्वविश्रान्तिर्दर्शितेति तात्पर्यम् । तत्र प्रथममुपोद्घातः समस्तशास्त्रार्थपीठबन्ध इत्यभिप्रायेण आह अवतरणिकायाम् **'इदानीं ज्ञानप्रकरणेन'** इति। ज्ञानं स्मृत्यादिरूप स्वदर्शने घटते इत्येवं विचार्यत्वेन प्रक्रियतेऽधिक्रियतेऽस्मिन्, तेन । **'निरूपयिष्यन्'** इति क्रियाया क्रियार्थायामुपपदे भविष्यति लृट् । तेन अयमर्थः—स्मृत्यादीनां सर्वेषा स्वरूप निरूपयिष्यामीति हृदये गृहीत्वा **'स्मृतेरेव'** इति यस्याः पूर्वोपक्रान्तता तस्या एव ईश्वरशक्तिरूपता प्रतिपादयितुमिच्छन् परदर्शने सर्वथैव अघटमानत्वमभिदधत् प्रथमं पूर्वं सभवमाह अनेन श्लोकेन ग्रन्थकृत् ग्रन्थकृदभिन्न एव वा तद्विमर्शपरिस्पन्दस्वभावः श्लोकः। तावद्ग्रहण ज्ञानापोहनादेरपि अनन्तरं निरूपयिष्यते स्वरूपमिति क्रमं द्योतयति । ननु कुतोऽयमेवंभूतः क्रमः । आह सुस्पष्टं कृत्वा ईश्वरस्वभावस्य आत्मनः सिद्धौ हेतुता स्मृतेर्यतोऽस्ति, ततोऽयं क्रमः । कथं सुस्पष्टतेति । आह **'अशेषकालानुगत'** इति पूर्वानुभवकालः स्मरणकालश्च यावत् बोधेन न व्याप्तः, तावत् कथं स्मरणम्, तौ च न नियताविति अशेषकालानुगमस्तद्द्वारेण आयातः इति नित्यप्रकाशस्वभावो यो बोधः, तदात्मतत्त्वमिति लभ्यम् । एवमपिच यदि तदविनिर्भागेन अनु-

भूतवस्तुसंभवो न भवेत्, कथं स्मरणमिति सर्वाकारतालक्षणं स्वातन्त्र्यमुक्तम् । यदाह भट्टदिवाकरः

'सर्वेऽनुभूता यदि नान्तरर्थास्त्वदात्मसात्कारसुरक्षिताः स्युः ।
विज्ञातवस्त्वप्रतिमोपरूपा काचित्स्मृतिर्नाम न संभवेत्तत् ॥'

इति । नच इयदेव, यावत् विश्वाकारतायामपि प्रकाशरूपत्वापरिहाणिः । कस्यचिदेव भावभागस्य उन्मज्जना, अन्येषां निमज्जनेति बहुशाखे वैचित्र्ये यदस्य नित्यबोधस्वभावस्य आत्मनः स्वातन्त्र्यमेतदैश्वर्यमनन्तशाखमिति यावत् साधयितव्यं, तत् स्मृतिशक्त्या सिध्यतीति युक्तं स्पष्टत्वम् ।

स हि पूर्वानुभूतार्थोपलब्धा परतोऽपि सन् ।
विमृशन्स इति स्वैरी स्मरतीत्यपदिश्यते ॥ १ ॥

अत्र च **'पूर्वानुभूत'** इति सूत्रार्थमशेषकालानुगतशब्देन संक्षेपार्थनिरूपणेन अवतारितं **'स्वतन्त्रावबोध'** इत्यादिना । स महेश्वरः प्रत्यगात्मतां स्वात्मनि भासयमानो यद्विवृतिर्भविष्यति **'चिन्मयस्य ईश्वरस्यैवहि'** इति । अत्र प्रत्यगात्मतादशायां तथा अनेककालतोपचारोपचर्यमाणः परतोऽपि पूर्वानुभवकालादन्यस्मिन्नपि स्मरणवर्तमानकाले संस्कारप्रबोधधामनि पूर्वानुभूतार्थोपलब्धैव यतो भवति—नतु तदस्य पूर्वार्थोपलब्धृत्वं विच्छिद्यते—ततो भवनात् हेतोस्तथैव पूर्वापरोभयकालावलम्बनौचित्यादागतेन सइत्यनेन विमर्शनेन तमर्थं विमृशति । अनन्तभावानुभवितृत्वेऽपि तमेव कस्मादिति न वाच्यम्, यतः स स्वैरी स्वतन्त्रः । सदृशादृष्टप्रणिधानाद्यपि हि तस्यैव स्वातन्त्र्यात् नियतिविजृम्भा । सइत्यस्य विमर्शस्य पूर्वापरौ कालौ परस्परगलितावपि चिद्रूपे च अनिमग्नावपि सन्तौ परस्परं चिद्रूपे च निमग्नौ तं च अर्थं

चिद्रूपे स्फुरन्तमपि अधिकमिव अबाह्यमपि बाह्यमिव परामृशतः । परमेश्वरस्वातन्त्र्यमेव जीवितमित्यपि स्वैरिपदम् । स्मरणशक्तिरेव हि परमं स्वातन्त्र्यम् । यदाह दिवाकरवत्सः

'ध्यानादिभावं स्मृतिरेव लब्ध्वा चिन्तामणिस्त्वद्विभवं व्यनक्ति।'

इति । '**हिः**' इति सकलं स्मरणप्रकरणं हेतुतया द्योतयति । यस्मात् स स्वैरी महेश्वरः एवंभूतः सन्नुच्यमानवक्ष्यमाणन्यायात् '**स्मरति**' इत्येतद्व्यवहारभाजनमिति अन्वयोऽयमुपपन्नः, तस्मात् '**न चेत्**' इति पूर्वसूत्रोक्तः प्रसङ्गरूपत्वेन व्यतिरेको युक्तः । अन्यथा आत्माभावप्रयुक्तोऽयं तेषां स्मृत्यादीनामभाव इति कथं भवेत्। नहि भवति घटाभावादङ्कुराभाव इति। तस्मात् युक्तः प्रसङ्गरूपतया अयं व्यतिरेकः इति । हिशब्देन समस्तस्य एतत्प्रकरणार्थस्य हेतुतां द्योतयन् पूर्वप्रकरणेन सह एतत् प्रकरणं संगमितं करोति,—इति सूत्रार्थः। '**तस्य एकस्य पूर्वानुभूतत्वेन यः प्रत्यवर्शः स इति**' उभयकालसंस्पर्शी '**अत्र**' इति प्राणपुर्यष्टकदेहादौ सकुचितस्य '**पूर्वानुभूतार्थसंप्रमोषरूपा स्मृतिर्नाम व्यापारः**' इति संबन्धः। एकत्वात् हि स उभयकालस्पृक् । कर्तृतैव च विभुता स्वैरित्वमिति वृत्तियोजना । ननु बोधात्मनो नित्यस्य कालयोगो नास्ति, तत्कृतश्च अयं व्यवहारः परतोऽपि अस्तीति तदाक्षिप्तश्च पूर्वमपि अस्तीति तौ कथं बोधात्मनि स्यातां, येन '**परतोऽपि सन्**' इति सूत्रं तद्वृत्तिश्च '**पश्चादपि**' इति । अथ उच्यते '**पूर्वानुभूतार्थोपलब्धा**' इत्येतद्विशेषणके परतोऽस्तीति व्यवहारो विशेष्येऽनुपपद्यमानो विशेषणाश्रमाश्रियिष्यति यथा सततवाहित्वेनान'''तथामन्यपि भूमण्डले व्यपदिश्यते महदाश्चर्यं सततमपि इदं प्रवहत् कृतयुगोचितशास्त्रव्यवहार भूमण्डलं तिष्ठतीति । भवेदेवम्, यदि उप-

लब्धृतारूपमपि विशेषणं कालव्यवहारं सहेत । नच सहते बोधाव्यतिरेकादेव । एतदाशङ्कमानः परिहरति सौत्रं च अर्थपदं विवृणोति । अपिशब्दः पूर्वपक्षतां सप्तम्या अनूद्यमानस्य सूचयति । अनूद्यमाने च हेतुतया अनूदितमपि आत्मनो नित्यत्वमर्थात् पूर्वपक्षोपयोगित्वेन आक्षिप्तं मन्तव्यम् । अन्यथा बोधैकरूपस्य अपि अर्थानुभवस्य चेति निपातद्वयेन उभयनिष्ठं पूर्वपक्षात् व्यवहारं कथं सिद्धान्ते समर्थयेत । न्याय्यं च एतत् प्रमातर्यपि कालव्यवहारस्य लोकेऽवलोकितस्य अवश्यसमर्थ्यत्वात् । तेन निपातद्वयमसंभावनाद्योतकं व्याख्याय अर्थानुभव एव कालव्यवहारसमर्थनमिदमिति न भ्रमितव्यम् । **'तेन'** इति बोधेन । **'ते'** इति अनुभूयमानाः । **'तथा'** इति स्वरूपादविभक्ता अपि बोधस्वातन्त्र्यप्रकारेण निर्मितविभक्ततामिव आपादिताः, अत एव विचित्रं कृत्वा भिन्ना बोधाच्च अन्योन्यं च, तत एव देशकालविशेषणा ये अर्थाः, तैः प्रकाशमानैर्यः उपरागः, तेन हेतुना अहमित्यन्तर्मुखतया इव नीलबोद्धा अहमित्येवं बहिर्मुखता अपि अवभासते । अनुभवश्च तदीय एव बहिर्मुखः स्वभावो नीलबोध इति । तत्र बोधस्वातन्त्र्यात् नीलं पश्येयं तावदिति अन्तःकल्पनापूर्वकं बाह्यनीलावभासनम् । तत्पूर्वं च अन्तःकल्पनमिति बीजाङ्कुरवदेतत् । ततश्च अर्थोपरागादर्थगतौ देशकालौ प्रमातारं च अनुभवं च आविशन्तौ लक्ष्येते । तत्र अहं नीलं तदा अपश्यमिति हि त्रितयमपि तदाविष्टं भाति । **'अत एव'** इति शङ्कितं पूर्वपक्षसर्थशब्दोपादाने हेतुत्वेन उपजीवति । ननु अर्थस्य तौ भवन्तौ तत्साक्षिभूतं संवेदनसाक्षिण्यतः इति का भाषा । आह **'अर्थविषय'** इति अपिच अस्य अनन्तरं यद्यपि उपलब्धृताया अर्थो विषयः, तथापि सा विषयतैव प्रकाशमानताख्या

स्वयमसती प्रकाशमननुप्रविशतः कथमिति प्रकाशोऽनया स्वीकर्तव्यः, नच तन्मुखप्रेक्षितया शुद्धविद्योचितेन वपुषा येन देशकालोचितं शम्बरमुज्झन्ती सती भासेत, किन्तु वेश्यया इव मायाप्रभावेण स्वमुखप्रेक्षिणं त कुर्वत्या येन तद्देशकालव्याजं सोऽपि न न अङ्गीकुर्यादिति दर्शयति **'अर्थाकार'** इति ननु अनुभवितृरूपता अर्थस्य शङ्क्येति यावत्। **'तृचापि'** इति प्रतिपिद्धोऽपि समासोऽत्र वक्तव्यवस्तुश्रद्धया कृतः। समासे हि वृत्तिपदार्थो वृत्त्यर्थे पांसुरिव उदके मिश्रीभवन् तत्कालुष्यरूपणां तत्र अवभासयति। नच अत्यन्तमलाक्षणिकोऽय शब्दः, येन अपशब्दत्वादवाचकत्वे कापुष्कलत्वकथा वक्तव्यस्य । तदाह **'ज्ञापकात्'** इति सूत्रापेक्षात् 'तत्प्रयोजको जातिवाचकत्वात्' इत्यादेः। **'क्वचित्'** इति शिष्टप्रयुक्ते। **'सार्वत्रिक'** इति ज्ञापके 'तृजकाभ्याम्' इति (२।२।१५) निषेधोऽनवकाशः स्यात्। ननु शिष्टप्रयुक्तोऽयमिति कुतो निश्चयः,—इत्याशङ्क्य आह **'तृन्नन्तेन वा'** इति ताच्छील्यादिना हि मायापदमवद्योतिततरं स्यात्। भर्त्रीश्वराचार्यस्तु वचनवार्तिके शेषषष्ठीसमासस्य न निषेधः इति न्यरूपयत्। अर्थोपरागत्वे कालव्यवहार इत्येतत् विपर्यासयितुमाक्षिपति **'ननु'** इति

'क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः।' (२।१।४)

इति वक्ष्यते। तत्र च अयमर्थः—तिष्ठति स्थास्यति तस्थौ घट इत्यत्र कालव्यवहारे आभासनस्य अविच्छेदः इत्ययं हेतुः संभावनाविच्छेदे। आभासनं च अनुभवः। तदनुभवो द्वारमत्र। स एव यावत् न कालेन स्पृष्टः, तावत् क्रियान्तरनिबन्धनोऽपि कालव्यवहारो न भवति। इह तु अनुभवक्रियायां साक्षादेव असावुपक्रान्तः—अनुभूतः पूर्वमर्थ इति। तदनुभव-

स्यैव मुख्यः कालस्पर्शो वक्तव्यः, तन्मुखेन च विषयस्य, नतु विपर्ययो युक्तः । साध्यस्वभावे क्रियात्मनि तिङन्तवाच्ये विश्रान्तः कालो निर्भासते, तदेतदङ्गीकारपूर्वकं समर्थयते **'सत्यम्'** इति । ननु यदि सत्यमेतदसदुक्तं, कथं तर्हि त्वया उक्तम्—अर्थोपरागकृतौ संवेदने देशकालौ—इत्याशङ्क्य आह **'किन्तु'** इति । न एतावदेतत्, अन्योऽपि अस्ति विशेषः, स प्रश्नयोग्यः । तं दर्शयति **'अनादिनिधनस्य'** इति । यद्यपि अनुभव एव कालप्रथाया बीजम्, तथापि न असावन्तर्मुखेन संविदेकरूपेण वपुषा तथासरूपतायास्तत्र अभावात् । बहिर्मुखं च अस्य रूपमेषणीय–ज्ञेय–कार्यरूपमर्थमेव प्रधानीकृत्य भवतीति तात्पर्यम् । पदार्थस्तु—चिद्रूपस्य प्रकाशमात्रैकरूपस्य आद्यन्तव्यवहारो न उपपद्यते प्रकाशाभावे तस्य असिद्धेः, तत्सिद्धौ वा प्रकाशाभावायोगात् । यथोक्तं

'ननु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम् ।
तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात् ॥' (स्प० का० १६)

इति । तस्य हि लोपे सति अकर्तृक एव उपलम्भो न संभवति इति स लोप एव कथं व्यवहार्यः, अन्येन चित्तत्त्वेन व्यवह्रियते इति चेत्, चिद्रूपत्वे कथमन्यत् तत् भवेत् । अन्यत्वे वा तस्य अप्रकाशत्वात् तत्कर्तृकमुपलम्भनं कुतः । तदेतदाह एकग्रहणेन । ननु अहं पूर्वं न अभूवमिति अस्ति धीः, सत्यम् । तच्चित्तत्त्वादन्यस्य देहादेरनुपलभ्यमानत्वं चित्तत्त्वस्य कथमादिनिधने व्यवस्थापयेत् । नच चिद्रूपं सांख्यदर्शने इव उदासीनप्रायं युक्तं परिच्छिन्नप्रकाशत्वेन नीलादिवदचिद्रूपताप्रसङ्गात् । यथोक्तं मयैव—

'परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम् ।
जडाद्विलक्षणो बोधो यतो न परिमीयते ॥' (बो० पं० ८)

इति। अपरिच्छिन्नप्रकाशत्वं च प्रकाशने स्वातन्त्र्यमहमिति महत्संरम्भात्मा प्रतिघातशून्यो विमर्शः, तदेवच अस्य सर्वशक्तित्वम्। सर्वशक्तित्वादेव अन्तर्व्यवस्थितमपि चिन्मात्ररूपं भावजातं स्वशक्तिप्रपञ्चमय स्वरूपसंकोचनावभासनपुरःसरं स्वतश्च अन्योन्यतश्च विभक्तमिव निर्भासतामिति अमुना अपि रूपेण प्रकाशमानः स्वातन्त्र्याप्रतिघातात् भावभेदनिर्मातेति उच्यते। तदस्य निर्मातृत्वं माया नाम शक्तिः। तस्याः पदं विषयो निर्मेयलक्षणः प्रमातृप्रमेयराशिरूपः संसारः। 'तत्र' इति मायाविषये भगवतः संविन्याः कर्तृशक्तेः कालक्रमावभासनं नाम व्यापारः, ननु शुद्धसंविन्मात्रत्वे तदवभासनम्। तथाहि यः कालक्रमो व्यवहारसिद्धः—इदं भातं, न भाति, भास्यकरस, भासिष्यते—इत्यादिर्भूतादिरूपो भावानामन्योन्यासहभावेन उपलभ्यमानत्वं, तत्त्वस्य यदवभासनम्; यत् संविद् इत्थं विमर्शनमप्रतिहतं, यदहममुना अपि रूपेण इत्थं प्रकाशयेयेत्येवंरूपश्च व्यापारः कर्तव्यं यस्याः परमेश्वरस्वातन्त्र्यशक्तेः, सा कालोत्थापकत्वात् भगवतः कालशक्तिरिति उच्यते

'अव्याहतकलां यस्य कालशक्तिमुपाश्रितः।'

इत्यादौ। ततः सोपानपदपङ्क्त्या सैव स्वातन्त्र्यशक्तिरवरोहन्ती एतेन असहप्रथनेन प्रमातृप्रमेयराशिना अहं प्रकाशे इत्येवंरूपतां प्राप्ता अर्थराशौ कर्मणि कृतपदबन्धा अवभासयति स्मरतीत्येवंप्रायेण क्रियात्मना प्रथते। सच क्रियात्मा प्राधान्येन प्रतिभासमानः कालशक्तिरूपेण प्राच्येन वपुषा अनुविद्ध एव भाति उत्तररूपस्फुटस्फुरणेऽपि पूर्वस्य रूपस्य जीवकल्पस्य अवश्यं स्फुरणात्। केवलमप्रधानतया तस्य प्रथनमिति विशेषणत्वमुपसर्जनत्वात्। तेन कालाख्यया शक्त्या यः समुत्थापितः प्रथायामस-

हभावो नाम क्रमः, तेन विचित्रीकृता भूतादिकालानुविद्धा अवभासनालक्षणा क्रिया। ननु अवभासनं सृष्टिर्निर्माणक्रिया कर्तृशक्तिश्च कथं सृष्टिक्रमा क्रिया स्यात्। नैतदाशङ्कनीयं यस्मात् कर्तृशक्तिरेव अवभासना। स्वातन्त्र्यादेव हि भगवतो भासन्ते भावाः। सा च मायाप्रमातृसंवेदनोपदेशनादिषु अवश्यंभाविना क्रमेण निरूप्यमाणा क्रियेति उच्यते। एवं हि तत्स्वातन्त्र्यं निरूप्यते—भगवान् अहमिति अन्तारूपात् संवेदकात्मनः इच्छाशक्त्यावेपणीयत्वेन स्थितान् भावनया हि स्फुटतया परामृश्यत्वेन श्रीमत्सदाशिवभुवि यत्तच्छब्दवाच्यान् पदार्थान् बहीरूपतया प्रकाशपृथक्त्वेन इदमिति अवभासयितुमिच्छति। न च सा अस्य इच्छा प्रतिहन्यते, अपितु तथा प्रकाशयति। एवमन्तर्बहीरूपत्वेन असहभावप्रकाशनात् क्रमिका अवभासना यतः, तेन निरूपणावसरे सा क्रियेति उच्यते। कुम्भकृतापि च एतदेव कुम्भकरणं—यद्भिनवत्वेन अवभासनम्। तदपि च कर्तृशक्तेरेव इच्छोपक्रमत्वेन अप्रतिहतबहिरवभासनावसानत्वेन क्रमिकताप्रथनम्। तदाह **'नान्यत्'** इति। **'वक्ष्यते'** इति

'इत्थं तथा घटपटाद्याभासजगदात्मना।

तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया॥' (२।४।२१)

इति। कुम्भकारादेरपि च एतदेव करणम्—यत् परमेश्वरस्य संविद्रूपस्य तथा अवस्थानं, न अन्यत् कुम्भकारसंविदोऽपि भगवतोऽनन्यत्वात्। न केवलमनुभवनिर्माणलक्षणमनवरतया परमार्थाहन्तारसप्रत्ययमय्या इदन्तया भासनं परमेश्वरसंवेदनशक्त्या, यावत् स्मरणरूपमपीति प्रकृतमनुसरति **'स्मृतिक्रियापि'** इति **'अस्यैव'** इति सर्वशक्तिचित्तत्त्वस्यैव। अस्यामपि कर्तृ क्रियात्वं च क्रमिकतयेति तां दर्शयति **'अन्तःस्थित'**

इति तमःपटलेन अवच्छादित इव। अन्तरिति प्रत्यगात्मरूपे देहप्राणपुर्यष्टकशून्यावच्छेदिनि संवित्तत्त्वे यः स्थितः पूर्वानुभूतः प्राक्तनप्रकाशपरामर्शरूपया इदन्तया उपलक्षितोऽर्थस्तस्य यो विमर्शस्तमोऽपसारणेन स्फुटीकरणं, तत्र या इच्छा, सैव उपक्रमः प्रारम्भो यस्या बहिरिति, तत एव सङ्कुचितसंविद्रूपात् वेदकात् पृथग्भावेन स्फुटवेद्यत्वेन योऽधुना विमर्शः, स यतः प्राक्कालभाविना विमर्शेन प्रत्यानुभवस्वभावप्रकाशजीवितेन मिलितः, ततः सइत्येवंरूपेण शब्देन आविष्टः उभयकालस्पर्शितायामपि पूर्वकालस्पर्शप्रधानः प्रकाशते, ननु न प्रकाशते इत्येवंस्वभावः, सोऽवसान पर्यन्तो यस्याः, सा स्मृतिक्रिया अपि भगवत्कर्तृकैवेति प्रत्यगात्मापेक्षया अत्र अन्तर्बहिर्भावो मन्तव्यः, नतु ईश्वरसदाशिवशिवापेक्षया। तत्र या अहन्ताप्राधान्येन विश्वस्य स्फुरणे तद्बहिर्भावावभासे स्मृतिर्नियतविषया, सा कथं भवेत्। निर्माण च तत् स्यात्, न स्मरणम्। पूर्वानुभूतस्य अर्थस्य यः प्राच्य एव प्रकाशः, तदर्थविषया बोधस्य बहिर्मुखता, तस्य प्रमुषितस्य अपि तमसा अवच्छादितस्य इव सम्यक् निर्मूलत्वेन अप्रमोषणं नात्यन्तमपहारणम्। ननु असंप्रमोप इति तत्रभवदनन्तभट्टारकादिप्रयुक्त यत्न त्यक्त्वा ल्युटि क आदरः। आह—'**कर्तृव्यापारता**' इति। अत एव हि नपुंसकत्वमस्य सिद्धताधर्मयोगेऽपि साध्यरूपानपह्नवेन मध्यमपदविश्रान्तेः क्रियाविशेषणपदवत्। ननु '**यस्तस्य सिद्धता**' इति सामान्योक्तौ कुतोऽयमस्य विशेषः। '**रूढेः**' इति। कर्तर्यपि हि दृजादिवदाख्यात विधीयमानं साध्यमानतांश प्रधानीकरोति शक्तिवैचित्र्यात्। तथाहि अव्ययकृतां साध्यांशप्राधान्यात् तद्योगे कृत्वोऽर्थप्रयोग इत्यादि निर्णीत परमगुरुणा पतञ्जलिना।

तथाच 'कृदभिहितः' इत्यत्र द्रव्यवत् क्रियावत् चेत्येतत् बहुतरगुणविमर्दवैचित्र्यवत् विभजनीयम्,–इति अलमवान्तरेण। ननु स्मराम्यहं कृशो बुभुक्षितो दुःखी कश्मीरोपभोगसुभगं स्थूलं शरीरं दध्योदनस्य तृप्तिं निरातङ्कतासुखं चेति शरीरादेरेव स्मर्तृत्वं भाति, तत् कथं सूत्रवृत्त्योर्भगवतः स्मर्तृत्वमुक्तम्, तदनुसारेण टीकायामपि। आह **'चिन्मयस्यैव हि'** इति। हिशब्दोऽस्य अर्थस्य हेतुतामाचक्षाणः साध्यत्वं पूर्वोक्तस्य दर्शयन् पूर्वपक्षाशङ्कां द्योतयति। पूर्वोक्तश्च अर्थः **'स्मृतिक्रियापि'** इत्यादिः **'अवसाना'** इत्यन्तः, शिष्टं तु वृत्तिव्याख्यानम्। **'चिन्मयस्य'** इति शरीरादावपि वेद्यांशे जडे स्वातन्त्र्यरहिते का स्मर्तृता, चिदंशस्तु न भगवतो भिद्यते इति एवकारः। ननु चिद्रूपं सर्वतःप्रकाशरूपं सर्वार्थक्रोडीकारि, तत्रापि कथं स्मरणम्, अनुभूतमवच्छादितं प्रबुद्धमिति हि अर्थतत्त्वस्य प्रकाशैकसारतायां कथं भवेत। उच्यते **'समारोपितस्वातन्त्र्ये'** इति शरीरस्य अवस्थापरिणामपाकजोत्पत्त्यादिना अत्यन्तभेदात् न स्मर्तृत्वेन उपादानम्। शून्यस्य अपि व्यवहारातीतस्य स्मर्तृता न भाति, प्रमातृत्वेन हि न अदोऽभिमन्यते लोके। प्राणपुर्यष्टकयोस्तु असंवेद्यभेदत्वादनुयायित्वे स्मर्तृत्वमुचितम्, तत्संबन्धात् तु शरीरादेरपि तथा स्मर्तृत्वेन अस्तु अवभासः, समारोपितं स्वातन्त्र्यं यत्र पुर्यष्टकादौ, तत्र सति तद्रूपतामात्मनि स्वीकुर्वन्ननुभवस्मरणविकल्पनानि ज्ञानस्मृत्यपोहनशब्दवाच्यानि संपादयति,–इति सप्तमीप्रयोगेण **'अत्र'** इति वृत्तिपदं व्याख्यातम्। प्रथमपाठस्तु अनार्षत्वादुपेक्ष्यः। ननु मा भूत् देहादेः स्मर्तृत्वम्, अनुभवः संस्कारः स्मृतिरिति तु ज्ञानमालैव उपादानोपादेयभावेन भविष्यतीति आह **'ननु'** इति **'वस्तूनाम्'** इति स्वलक्ष-

णरूपत्वेन अन्योन्यरूपविषयसंस्पर्शशून्यानामित्यर्थः । 'येन' इति कार्यकारणभावेन हि विषयस्य भेदः पूर्वं चोदितः

'दृक्स्वाभासैव.....................।' (१।३।२)

इति। तदिह चोद्यं न अवतरति । 'अत एव' इति एतमेव विषयभेदचोदनावकाशाभाव हृदये अभिसन्धायेत्यर्थः । स्वेनैव ईरणं यस्य, स्वस्यैव ईरणं येन, स्वमेव ईरणमस्येति व्यतिरिक्तापेक्षानिरासः । मायाप्रमाता हि यदि स्मरेत्, स मूर्च्छितमपि जातु कथं न स्मरेत्, अन्यदपि च कथं स्मरेत्। प्रणिधानेच्छाद्यपि च निर्विषयमस्य उपपन्नम्, मन्दतादृक्त्त्ववेदनमपि च तस्य अस्मार्यस्य अवेदनेऽसवेद्यम् । असवेदने च सर्वं सर्वेण तादृगिति नियमायोगः। एव नियम्यविरोधादिसम्बन्धेषु अपि विषयालाभे तदसंवेदनं वाच्यम्, स्मरणादेव विषयलाभे अन्योन्याश्रयम्। अदृष्टस्य नियामकत्वे प्रणिधानाद्यनुपयोगः। दृष्टकारणमध्य एव अदृष्टं, न शुद्धमिति चेत्, अस्तु तावदेव, तथापितु भेदवादेऽपि अदृष्टस्य जडस्य अधिष्ठापक चित्तत्त्वरूपमीश्वरमङ्गीकृतमेव । यत् घोष्यते

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेववा ॥'

इति । नच चित्तत्त्वस्य देशकालरूपभेद इति स परमात्मैव स्मृतेः कारणम् । तन्नियतिप्रभावप्रदर्शितस्तु दृष्टादृष्टकारणः प्रतिभासः, अत एव तस्य अनियतत्वमपि उपपन्नम् । सुखमूर्घावसरे च जानात्येव अयं शरीराद्यसङ्कुचितचित्तत्त्वान्तःप्रवेशम्, येन अयमिन्द्रियार्थदेशात् पराङ्मुखीभवन् गुहान्तर्निवेशमिव आत्मनो मन्यते। तद्गुहाप्रविष्टस्तु परमात्मरूप एव भूत्वा स्वतन्त्रस्तुर्यातीतपदनिविष्टस्वातन्त्र्यशक्तिमुन्मयन् तुर्यपदमधिशेते । ततः समवच्छादितार्थप्रकाशरूपा सुषुप्तात्मिका बीजभुवमध्यास्ते । ततो बी-

जादर्थप्रकाशनमसाधारणं सत्तारूपमेव । वहीरूपतां तत्रैव प्राणवृत्त्यादौ तत्प्राणबुद्ध्यादिसंविदपेक्षया अस्य निर्भासयत् स्वप्रभुविविमृशति यत्, तदेतत् 'स्मरति' इति उच्यते । ननु बीजभुवि न स एव अर्थः स्थितः, तत् कथं नियतस्य स्मरेत् । उच्यते । तत्रापि हि सुस्पूर्णरूपं स्वातन्त्र्यमिच्छाशक्तिलक्षणमेव प्रपतति ।

'..............प्रणयस्यानतिक्रमात् ।

यथेच्छाभ्यर्थितः..................॥' (स्प०का०३३)

इति उक्तम् । तथा इच्छा अपि तस्यैव स्वातन्त्र्यमिति । तदेतदुक्तं भट्टदिवाकरवत्सेन

'संप्रेषिते चेतसि हारितार्थ-
ज्ञप्त्यै महाज्ञान भवत्प्रकाशम् ।
युक्त्या यदावेदयसि त्वमन्त-
स्तत्तत्त्वविद्वेत्ति विजृम्भितं ते ॥'

इति । स्वैरित्वं च संवेद्यमानप्रणिधिपूर्वके स्मरणे मायाप्रमातुरवलोकितम्, असंवेद्यमानेऽपि प्रणिधावभ्यस्तविनाभावादिवन्मायाप्रमातुरेव मन्तव्यम्, तस्यैव च कर्तृशब्देन वृत्तावभिधानम् । एकत्वं च अस्यैव उभयकालव्यापित्वात् । एवं स्वातन्त्र्यैकत्वकर्तृत्वानि प्रमुखे मायाप्रमातरि निर्भासमानानि अपि संकुचितसंविदोऽपि असंकोचपरमार्थसंविन्मयतया परमेश्वररूपपर्यवसितानि,—इत्येतत् सूत्रे दर्शितं **'सहि'** इतिवचसा **'महेश्वरः'** इति पूर्वसूत्रावमर्शिना, वृत्तौ च उक्तं **'विभोः'** इति । तदेतत् विवृतिकृदाह **'कर्तृतैवच'** इत्यादिना । विविधं कृत्वा भवतीति विभुत्वं, ननु इह व्यापकत्वं देशभेदाभावात् तस्य इह अनुपयोगात् । ननु देशान्तरगतमपि एतद्देशेन स्मर्यते, तत् कथं व्यापकत्वस्य अनुपयोग इह । सत्यं, सतु वेद्ये शरीरादावनुप्रविष्टो

देशभेदः। ननु कालभेदोऽपि तथैवेति को विशेषः। इदमपि सत्यम्, किन्तु क्षणिकत्वे संविदां न उपपद्यते स्मरणमिति उपक्रान्तम्। क्षणिकत्वं च क्षणभेदात्मा कालभेद एव, ननु संविदामवयविन इव देशभेदमुखेन सौगतो भेदं ब्रूते। तदभिप्रायेण अयं कालभेद एव अपाकृतो वर्तते, वस्तुतस्तु देशकालौ वेद्यशरीरप्रविष्टौ वेद्यविषयेण स्मरणेन क्रोडीकृतावेव। यद्यपि देहदेशे एव देहकाले एव च स्मरणमवभासते यथाहुः

'अन्तःशरीरवृत्तित्वान्मनस·· ······ ।'

इति, तथापि संविदो न वस्तुतो देशवत् कालोऽपि कश्चित्। वेद्यमुखेन कालस्पर्शे देशस्पर्शोऽपि समानः, तत एव सर्वदेशस्पर्शित्वात् व्यापकत्वसिद्धिरदुर्लभेत्युक्तं भट्टदिवाकरवत्सपादैः

'दूरान्तिदेशादिगतार्कचन्द्र-
तारादिवाह्यप्रथयैव विद्धः।
व्याप्य स्थितं विश्वमिदं विभु त्वा
स्वदेहविच्छेदविमोहभङ्गात् ॥'

इति। एतदपि च विभुत्वमैश्वर्येण स्वीकृतमेव। नहि प्रतिहन्यमानो देशतः कालतः स्वरूपतो वा ईशने ताच्छील्यताद्धर्म्यतत्साधुकारित्वभागिति। ननु अनुभवस्यैव चेदसंप्रमोषणं स्मरणम्, तर्हि अनुभव एव स्यात्, न स्मरणम्। नहि निर्वृत्ताच्छादनो घटो गौर्भवति। विषममेतत्। गोर्हि घटादर्थान्तरत्वमेव जीवितम्। ननु न एवं स्मरणमनुभवादन्यदेव किंचित् भवति, अपितु अनुभवस्यैव पुनरुन्मेषः। तत् पुनरुन्मेषेऽपि अनुभवामीत्येव न किं व्यवहारः। उच्यते 'केवलम्' इति, प्रवृत्तस्तस्मिन् नीलादिकेऽर्थेऽवभासो येषां प्रमात्रन्तराणां सर्वज्ञक्रिमिप्रभृतीनां, तैः सह तस्मिन् नीलाभासासामात्रे, ननु परस्परं शरीराद्यहन्ताभासे,

य एकीभावस्तन्नीलाभासप्रकाशमात्ररूपत्वं; तस्य प्राक् पीतवेदन-दशायामभावात् तत्पीतप्रमात्रेकतोपसंहारपूर्वकतया निर्माणं संपादनं, तदेव मुखं द्वारमुपायः, तेन उपायेन यदा असौ चैत्रः प्रमाता मैत्रादिप्रमातृभिर्नीलाभासप्रकाशनमयैर्नीलसंकोचिते प्रकाशभागे अहं नीलं भासयामि, मम नीलमवभातीत्येवंरूपे नीलानुभवोपलक्षिते अनुभवितृरूपे प्रत्यगात्मनि मायाप्रमातरि तादात्म्यलक्षणेन सायुज्येनैव प्रविशति तत्कालभाविनि एव, नतु प्राणपुर्यष्टकादिप्रकाशभागे अनुभवोपलक्षितेऽपि पूर्वापरकालानुवर्तिनि। नहि अस्य तत्र प्रमातृत्वेन संवित्तिः, नापि परमात्मभागे भेदानवभासप्रसङ्गात्। एतच्च वक्ष्यते

'तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन्।
भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ॥' (१।६।७)

इत्यत्र। सोऽयं तदाभासमात्रप्रथनात्मा तत्प्रवेशोऽस्य प्रमातुरपूर्वावभासरूपः स्वशरीरप्राणादिस्थैर्येऽपि पूर्वमभावात् गर्भात् निष्क्रान्तस्य इव इदानीं जात इति निर्माणतया चकासदपि न निर्माणरूपः पूर्वं प्रमात्रन्तररूपतया भावात्। इहशब्दोऽनुभवितुरभिमानोऽयमिति द्योतयति। आभासैकीभावेऽपि न निरपेक्षीभवति असौ प्रमाता निर्विकल्पके निःशेषाभाससंवेदिनि सदाशिवादिपदे हठादेव प्रवेशेन मायौचित्यानुदये सत······ हाभिप्वक्तस्य प्रमातुरभिन्नेन अर्थेन हानादेः परप्रत्ययनादेश्च तावता संपत्तेः। तदयं ग्राम्य इव लास्यमन्दिरात् निर्जिगमिषन् द्वारपालेन विकल्पेन अनुगृह्यते मायाप्राङ्गणे निक्षिप्यते। तत्र हि अयमभिलषितात् नीलादन्यस्य अतद्रूपस्य शङ्काकृतं समारोपमपोहमानस्तदपोहनार्पितं भेदमेव बहु मन्यमानः, तथा अपोहनप्राणेन निश्चयेन स्वयं च परैश्च स्वोचि-

तया गोष्ठया व्यवहरन् कृतकृत्यमात्मानं मन्यते । तथ अपोहनरूप निश्चयन यद्यपि सर्वमनुभवकालपश्चाद्भावि, तथापि किंचित्कालभेदापहस्तनेन तदनुभवतादात्म्येनैव स्फुरति येन अनुभवोऽपि असौ भेदिनि एव अर्थ इति अभिमानः—इदमहमिदानीमेव अनुभवामीति । अन्यथाहि सर्वो विकल्पः स्मृतिरेव भवेत् । एन तदिति चेत्, अनुभवे खलु व्यवहृते साध्यरूपस्य अनुभवस्यैव अरूढौ कथमस्य सिद्धतया परामर्शो भवेत्—अन्वभूवमिति । नच कालभेदापरामर्शने भ्रान्तता कालभेदस्य अवास्तवत्वात् । यथापरामर्शं हि वस्तुतथात्वमिति वक्ष्यामः । तेन यदाह भट्टशङ्करनन्दनः 'अनुभवायन्ते विकल्पाः' इति धर्मोत्तर दूषयितु

'सिद्धं सिद्धतया वस्तु निरूप्यं न तथा ततः ।'

इति, तत् स्वानुभवनाह्यमनोऽङ्गार्यमति दर्शयति । केवलमनुभयायमानस्व पृथक् स्वप्रकाशसंवेदनसंतानवादी समर्थयितुमशक्तः कारशङ्कामवलम्बमानोऽनेन अनुमाह्य इति आस्ताम् । यदा तु तमनुभवमाच्छादनविच्छिन्नं मध्ये अभिमन्यते प्रणिधानादिना च पुनः प्रबोधितम्, तदा कालभेदाभावात् द्वयोरपि प्रमातृप्रमेययोस्तुल्यकालतायामपिवा कालवैचित्र्यमुल्लासयति । तथाहि अनुभवं तत्काल परामर्शस्य अर्थनिष्ठत्वात् मन्यमानः एतत्कालपरामर्शस्य प्रमातृनिष्ठता प्राधान्येन स्पृशति इदानीं भवत इव मम नीलानुभवोऽभूदिति । तदेतदुच्यते स्मृति परामर्शनम् । योगी तु अतीतज्ञानेऽर्थ एव प्राच्य कालमधिरोपयति, न अनुभवे । तदानीतनप्रमातृकालस्पृगेव हि असौ तस्य । यदा तु द्वयमेतत्समील्य विकल्पयति, तदा प्रत्यभिज्ञान सोऽयमिति । तत्र च एकतरानुवादैकतरविधेश्च भेदद्वयम्, सममनुवादात्

समं विधेश्च भेदद्वयम्,—इत्यलं बहुना । न तत्र अपूर्वनिर्माणयोगे तदनुभव उच्यते, निर्माणकल्पस्य तु अनुभवस्य प्राच्यकालस्पर्शे स्मरणमिति । यद्यपि अनुभवननिश्चयनस्मरणप्रत्यभिज्ञानविकल्पनशक्तिस्वातन्त्र्यलक्षण एव वस्तुतः प्रमाता, तथापि तत्र तत्र भागे तथा व्यपदेश इति न किंचित् दुःस्थम् । अपिशब्दश्चशब्दश्च उत्तरोत्तराकाङ्क्षां सूचयन्तावसमाप्तप्रवाहमेकमेव चित्तत्त्वमिति सूचयतः । तुशब्दः पूर्वोत्तराभ्यां मध्यमस्य परामर्शस्य स्मरणतानिदानं विशेषं द्योतयति । एतत् सर्वं वृत्तिं व्याचक्षाण उपसंहरति '**तत्**' इति । यदेवंभूतमनुभूतप्रकाशासंप्रमोषणं व्याख्यातम्, तत् व्यक्तीकर्तुम् '**आह**' इति इति संबन्धः । '**अत्र**' इति मायाप्रमातरि । यदि तु सङ्ख्येतत् स्वीकृतौ पूर्वौ देशकालौ न अस्य परामृशति, अपितु नीलं पीतमित्येतावन्मात्रं, तत्, निश्चयनस्मरणप्रत्यभिज्ञानादिविशेषव्यपदेशनिबन्धनायोगादपूर्वतानवभासाच्च शुद्धमेव विकल्पनमिति उच्यते । '**उत्तरत्र**' इति

'दीर्घवृत्तोर्ध्व················ ।' (२।३।४)

इत्यादौ हि आभासमात्रं वस्तु,—इति व्यवस्थापयिष्यामः ॥ १ ॥

ननु च निर्विषयास्तावत् विकल्पाः स्वलक्षणात्मनोऽननुगामित्वेन अजनकत्वेन च तत्र अनवभासात्, सामान्यादेश्च अवास्तवत्वात्, ग्राह्याकारस्य च ज्ञानैकविश्रान्तस्य ग्राहकाकारवदविकल्प्यत्वात् । विकल्पविशेष एव च स्मृतिरिति सापि निर्विषयैव । एकविषयतया च एकं संवेदनतत्त्वमुपपिपादयिषितमत्र । अनुभवस्मृत्योरेकं स्वसंवेदनरूपमेकविषयतोपलम्भात् । भिन्नसंवेदनरूपतायां हि पृथक् स्वप्रकाशमात्ररूपत्वमेकविषयतोपलम्भस्य विरुद्धमिति स्वभावविरुद्धोपलब्ध्या भिन्नसंवेदनरूपत्वात् विपक्षात्

व्यावृत्त एव स्वसंवेदनरूपत्वेन व्याप्यते इति व्याप्तिसिद्धौ स्व-भावहेतुः। स च अय निर्विषयत्वे अत्यन्तासिद्ध इत्याशङ्क्य सूत्रं

भासयेच्च स्वकालेऽर्थात्पूर्वाभासितमामृशन्।
स्वलक्षणं घटाभासमात्रेणाथाखिलात्मना ॥ २ ॥

'**सहि**' इति पूर्वसूत्रात् स महेश्वरो भगवान् चिदात्मा पूर्वावभासितमर्थं तावत् स्मृतौ परामृशति विकल्पयतीति उपगम्यम्। तथोपगमे च तस्य अर्थस्य पूर्वदेशकालाभ्यामव-च्छेदात् देशकालसङ्कोचसारत्वाच्च स्वलक्षणात्मनः स्वलक्षणरूपं समर्थं परामृशतीति आयातम्। परामर्शन च प्रकाशनान्तरीय-कम्। अप्रकाशमानताया हि किं परामृष्टं स्यात्। अप्रकाशित विमृष्टं चेति हि अन्धपदम्। परामर्शश्च प्रकाशस्य स्वभाव इति स्वभाविनोऽसम्भवे कस्य स्वभावो भवेत्। परामर्शनेन हेतुना उपलक्षणेन वा तस्य स्वलक्षणस्य अवश्यंभाविनी भासना। अर्थात् सामर्थ्यात् परामर्शनान्यथानुपपत्त्या घटा-भास एव एकाकी मार्त्तिकत्वौन्नत्याद्यनेकाभासयोगित्वेन वा बहुप्रकारः समस्तपूर्वाभाससभिन्नो वा अवमृश्यते। सर्वश्च असौ देशकालाभाससंभेदात् स्वलक्षणीभूतः। '**अथ**' इति वि-कल्पं द्योतयति। ननु यदि सोऽर्थः प्रकाशते, तदनुभवात् को भेदः। क एवमाह प्रकाशते इति। प्रकाशते किल असौ। सहि प्राच्यः कालोऽस्य अवभासांशो वेद्यसीकारिणि स्वालक्षण्य-हेतुः, इदानींतनश्च स्मर्तृदेहप्राणादिगतो वर्तमानो विमर्शभागे। तदेतदुभयकालस्पर्शनं विमर्शस्य–सइति। तेन भगवत इव अहमिति, सदाशिवस्य वा अहमिदमिति, अनुभवसुवि वा इद-मिति न स्मर्तुः स्मरणपरामर्शप्रसङ्गो वेद्यस्य उन्मेषात् पृथ-क्त्वात् प्राक्कालत्वाच्च। यदाह '**स्वकाले**' इति। पूर्वावभासितं

च स्वकालत्यागेन तद्देशत्यागेन च घटाभासमात्रतया परामृशन् संकोचाभासवान् सामान्यात्मकमर्थं प्रकाशयत्येव स्मृतिव्यतिरिक्तं विकल्पमात्रमित्यपि अथशब्दः। तथाच अवतारिण्यां विकल्पोऽपि स्वीकृत एव। तस्मात् वैलक्षण्येन वा सामान्यलक्षणेन वा विषयवत्त्वेव स्मृतिविकल्पादाविति निर्विषयत्वासिद्धौ स हेतुः स्थित एव—एकविषयत्वोपलम्भादिति सूत्रार्थः। तं संक्षेपेण अवतारयति **'स्मृति'** इति स्मृतिरूपपरामर्शे पूर्वकालदेशाद्यवच्छेदवान् सोऽर्थोऽन्तरिति इन्द्रियभूमिमतिक्रम्य स्थितोऽपि बहिरिति संविद्भागात् व्यतिरिक्तत्वेन अहन्ताविभक्तः, अत एव तदित्यनेन वपुषा परामृश्यो योऽर्थः, तस्य सामार्थ्यादिति परामर्शानान्यथानुपपत्त्यैव भवति प्रकाशः शुद्धविकल्परूपविमर्शावसरे पुनः पूर्वदेशकालानवच्छेदेन इदमितिनिर्देश्यस्य। आदिग्रहणात् प्रत्यभिज्ञोत्प्रेक्षणाध्यवसायादिविकल्पेषु अपि यथायोगं तदिदमिति इदं तदिति तदिव इदमिति तदेव इदमित्यादिनिर्देश्यता मन्तव्या उभयतः। तन्मुखौ च विचित्रौ देशकालावच्छेदौ। **'नियतरूपतया'** इति अवश्यंभावेनेत्यर्थः। स्मृतौ हि प्राग्देशकालयोगोऽवश्यं स्फुरति। अन्यथा विकल्पमात्रं तत् भवेत्, नतु स्मृतिः। तत्स्फुरणे च एकाभासस्य आभासनिकुरम्भस्य वा स्वलक्षणतैवेति स्मृतौ स्वलक्षणस्यैव परामर्शस्तावत् सिद्धः। **'स हि'** इति पूर्वसूत्रादनुवृत्तं प्राक्तनीं स्मर्तृतामाहेति वृत्तौ **'स्मृतिशक्त्या'** इति उक्तम्। सिद्धेन परामर्शेन हेतुना प्रकाशनमर्थस्य साधयितुमाह **'प्रकाशस्वभावश्च'** इति। चकारोऽत्र समुच्चयेन नान्तरीयकतां हेतुं प्रति साध्यस्य द्योतयन् हेतुहेतुमद्भावे विश्राम्यति। यस्य परामर्शोऽर्थस्य, तस्य अवश्यं प्रकाशः। सहि परामर्शः प्रकाशनस्य स्वभावभूतो धर्मः प्रकाशनाभावे निरवल-

म्वन एव कथं भवेत्। यथाहि कृतकस्य अनित्यत्वं स्वभाव इति अनित्यत्वे निर्भासमाने कृतको न निर्भास इति भवति, तथा परामर्शे निर्भासमाने प्रकाशः। स्वभाविनो हि अभावे अस्य अयं स्वभाव इति कथम्। ततश्च स्वभावरूपत्वविरुद्धमस्वभावत्वमापतेदिति स्वभावविरुद्धोपलब्धिप्रसङ्गभीत्या स्वभाव्यनाभासात् विपक्षात् व्यावृत्त स्वभावत्व व्यापक परामर्शस्य स्वभाव्याभासे निविशमानं स्वव्याप्य परामर्शमपि तत्रैव निवेशयतीति। नच वक्तु युक्तमबोधस्यैव परामर्शः स्वभावो भवतु,— इति। एवहि स्मृतिविकल्पादेर्नीलादिवदस्वप्रकाशत्वं स्यादिति बोधस्यैव स्वभावः परामर्शः, बोधश्च प्रकाशात्मा। तदयं स्वभावहेतुरर्थस्य परामर्शः प्रकाशात्मा तत्स्वभावत्वादिति। **'अत एव'** इति विवादाभावात्। यद्यपि भावकर्मकर्तृसंख्याद्यर्थाभिधायिनलिटः, तथापि 'भावमाख्यातेन आचष्टे' इति साध्यरूपता धात्वर्थस्य प्राधान्येन उद्रेचयन्तस्तथा भवन्ति। तेन क्रियैव तेषां मुख्यमभिधेयम्। विध्यादौ च लिङ् विधीयमानो धात्वर्थोपाधिभूतान् विध्यादीनवगमयति। प्रत्ययार्थकर्तृकर्माद्युपाधित्वमपि तेषां धात्वर्थोपाधिताद्वारेणैव कारकशक्तियोगात्, नतु द्रव्यस्य सर्वतो निरंशस्य विध्यादिधर्मान्तरसंबन्धः स्वत उपपद्यते। तेन विध्युपाधिकधात्वर्थसाध्यमानतोद्रेचनं लिङर्थ इति दर्शयति **'नियोगकरणलक्षण'** इति। नियोगेन नियमेन यत् करणं साध्यमानत्वं, तत् लक्षणं स्वरूपं यस्य। आज्ञारूपस्य अपि नियोगस्य नियमरूपतयैव करणस्वभावनानिरासाभिप्रायवेदनमेव भाणितम्। मर्यादावेदनमेव हि आज्ञात्वम्। स्वयं मर्यादा जानन् परस्य तत्परस्य तत्प्रत्ययमुत्थापयन्नाज्ञापयतीत्युच्यते। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र हि स्वर्गकामस्य अयं

नियमो जुहोत्येवेति । अन्यथाहि न स स्वर्गकामः स्यात् परमार्थतः । पथ्यमनुपयुञ्जानो हि शक्तः शास्त्रा निरस्तश्च न तत्त्वत आरोग्यकामः । कामनायां भवन्त्यामुत्तरोत्तरप्रयत्नक्रियाप्रभृतिकार्यपरम्परा अवश्यं भवेदिति तत्कामः पथ्यमुपयुङ्क्ते एवेति लिङर्थः । यावज्जीवमित्यत्रापि प्रत्यवायपरिहारकामो न स्यात् यदि जुहोतीत्यर्थोऽवतिष्ठते । फलकल्पनदैन्यं न नियोगस्येत्यपि पक्षे यावज्जीवनविशिष्टब्राह्मणरूपतैव अस्य हीयेत यदि न जुहोति, तस्मात् जुहोत्येवेत्येवं मर्यादाया नियमरूपाया आवेदनमेव नियोगतत्त्वम् । कालविशेषं च अभिव्यङ्क्तुं यद्यपि लिङः सामर्थ्यं नास्ति, तथापि क्रियायाः कालेन नियोगायोगात् कर्तृभेदेन देशभेदेन च अनभिधानात् नित्यप्रवृत्तवर्तमानस्पर्शो भाति । नच इयता प्रमाणान्तरागोचरत्वं यत्र धूमस्तत्राग्निरेवेति अविशेषोपक्रमायामपि व्याप्तौ कालभेदास्पर्शेऽपि प्रत्यक्षानुपलम्भविकल्पस्य उल्लासात् । तद्वदेव आरोग्यकामं पथ्योपयोगयोगिनं पश्यन् देशकालकर्त्राभासविशेषान्तरतिरस्कारेण तत्कामनायोगतदवश्यंकरणयोः कार्यकारणभावमवगच्छतीति अलमवान्तरेण बहुना । ननु यदि स्मृतौ प्रकाशते एव सोऽर्थः; तर्हि सोऽनुभव एव स्यात्, नतु स्मृतिरिति । मैवम् । प्रकाशते हि तदा प्रकाशः, प्रकाशते इति तु अनुभवे । यद्यपि प्रकाशे कालयोगो नास्ति, तथापि वेद्यदेहादौ निषिक्तोऽसौ प्रकाशस्तदनुकारी मायापदे निर्भासते इति अतीतवर्तमानदेहादिसहभावात् भूतवर्तमानव्यवहारपात्रतां स्पृशति । प्राच्यदेहादिसहभूतोऽसौ स्मर्यमाणवस्तुगतो विमर्शमयोऽपि प्रकाशो देहप्रमातृमानिनामस्फुटत्वेन अभिमानगोचरत्वमेति, स्फुटत्वेन तु वर्तमानदेहोपाधिविश्रान्तो वर्तमानो द्वितीयो विमर्श इति तेनैव अस्य व्यपदेशो

भवति स्मृतिर्विकल्प इति। 'विमर्शविशेष एव हि विकल्पः' इति वक्ष्यते। तदेतदाह **'केवलम्'** इत्यादिना। केवलपरादयः शब्दाः इयदधिकमत्र अवश्यपरिमाह्यमित्यनेन नियमधर्मेण वाक्यार्थे सत्त्वभूते विशेषणता गच्छन्तो लिङ्ग–सङ्ख्या–सर्वनामनपुंसकैकत्वाभ्या व्यवहार्या इति प्रथमान्ता मन्तव्याः, यदिवा वाक्यार्थोऽपि क्रियैव कारकादिविशेषणाभ्यां स्थपितशरीरेति क्रियायामेव श्रुतायामभ्याहृतायां वा विशेषणतामुपयन्तो द्वितीयान्ताः शक्तित एव क्रियायाः साध्यत्वात्। कर्मतायामपि आख्याते तत्संस्कारासभवात् सत्त्वभूतार्थाभिधायिनि तद्विशेषणे एव तत्संस्कारसक्रान्तौ द्वितीया। सख्यालिङ्गसर्वनामयोगश्च सत्त्वभूते अर्थे। सत्त्वभूतार्थस्य विश्रान्तियुक्तिमद्धिद्धिस्तु वचनमारब्धम् 'क्रियाविशेषणानां कर्मत्वम्' इत्यादि। **'तदाह'** इति **'अनुभूतस्यावश्यं प्रकाशः'** इति **'पूर्वावभासितत्वेनैव प्रकाशः'** इति च यत् व्याख्यातम्, तत् वृत्तिकृदनेन ग्रन्थेन आह **'अन्यथा'** इति न स्यात् प्रकाशनम्। पूर्वप्रकाशितत्वेन तत्प्रकाशनानुलग्नः कथं परामर्शो भवेत्। यद्विच न भवेत् पूर्वप्रकाशितत्वेन परामर्शनं, तत् सइति भूतप्रकाशपरामर्शो न स्यात्। तेन **'प्रकाशितस्य'** इति वृत्तौ प्रकृत्यर्थे च प्रत्ययार्थे च भरः कर्तव्यः। प्रत्ययस्वीकृतोऽपिच भूतार्थः **'स्वसत्ताकाल एवच'** इत्यनेन वृत्तौ स्फुटीकृतः। तेन स्मृतिकाले एवच आभासयतीति वृत्तियोजना। ननु चिरन्तनैर्भगनत्पतञ्जलिप्रभृतिभिरियत् न चक्तमित्याशङ्का आह **'एष एवच'** इति। पूर्वप्रकाशितविमृष्टत्वेनैव प्रकाशो यो विमर्शने वार्तमानिके अन्तर्वर्ती समर्थितः, स एव अनुभूतस्य विषयस्य असम्प्रमोषोऽनपहारः उच्यते। अनुभवोऽतीतो हि अत्र प्रकाशभावेन विषयस्य उक्तः, असंप्रमोषश्च वार्त-

मानिकं तथापरामर्शनम्। ननु प्रकाशस्य कालयोगाभावात् कथमतीततेत्याह **'पूर्वप्रकाशितत्वं च'** इति। तत्र देशे ह्यः पिपासितेन मया तेन मित्रेण सह अपक्वाकारतया घटोऽयं दृष्टः,— इति संघातविगृहीततया देशादिभिरुपाधिभिः प्रकाशोऽवच्छिद्यते। मायापदे च स्मरणव्यवहारो न भवति। औपाधिकरूपसंकोच एव च प्रकाशस्य मायापदम्। उक्तमर्थं वक्तव्येऽर्थे **'तेन'** इत्यनेन वृत्तौ हेतुतां तावत् नयति। तेनेति पदं विवृणोति **'तदेवम्'** इति यदुक्तं तस्मात् हेतोरित्यर्थः। किं तदुक्तमिति स्फुटयति **'अन्यथा'** इति अनुपयोगस्य विचारनिष्फलत्वे। हेतुता तत्र समर्थनस्य, समर्थने च प्रसङ्गस्य हेतुतेति। तथाहि नाशे अर्थेन स्मृतेर्न दोषः, सद्भावे न पोषः—इति तात्पर्यं वृत्तिटीकयोः। इयता स्मृतेः स्वरूपमुक्त्वा तदेव परिशोधयति **'एतावता च'** इति। अतः प्रमेयात् मनागपि न्यूनतायां न स्मृतित्वमुपपन्नमिति यावत्। पूर्वस्य अर्थावभासस्य अनुन्मेषे, पूर्वप्रकाशितत्वेन अपरामर्शे, अनुभवेन अतीतेन अवच्छिन्नेऽर्थमात्रे यो ज्ञानविशेषः; सोऽभिनव एव अनुभव एवेत्यर्थः। ननु योगः परमार्थप्रमात्रा विद्यते यस्य, स परमार्थप्रमातृतत्त्वनिमग्नमायाप्रमातृताभागी

'योगमेकत्वमिच्छन्ति.............।' (मा० वि० ४।४)

इत्यागमे निरूप्यते योगी। तस्य च सर्वेऽर्थाः स्वात्मनि अकालकलितेऽहमित्येव तादात्म्यभाज उन्मिषन्तोऽपि वा अहमिदमिति भासनोचिताः। तत्र कथं कस्यचिदेव अवभासः, कथंच पूर्वकालविशिष्टता तस्येत्याशङ्क्य आह **'यस्य'** इति। हिशब्दो हेत्वर्थ आशङ्कां सूचयति। तदभावे समर्थविताव्याभावात् समर्थकस्य हेतोरनुपयोगप्रसङ्गादिह आभासानाभासात्मा क्रम एव तावत् कालः। तत्र शरीरस्य प्रतिक्षणमपि वैलक्षण्येन आभास-

नमनाभासनं च प्रतिफलं प्रथद्दलन्वं कालभेदं वितरति। तेन शरीरप्रमातृमानिनां तत एव तदनुलग्नग्राह्येन्द्रियायत्तप्रायसवेदनक्रियाणां गाढगाढं कालशृङ्खलाबद्धानां

'सम्बद्धं वर्तमानं च गृह्यते……………।'

इति न्यायेन न अतीतानागतकालदर्शने मनागपि योग्यता। यदा तु प्रसंख्यानोपदेशविशेषाभासात् देहे प्रतनूकरोति प्रमातृताभिमानं, तदा आत्यन्तिकः कालभेदोऽनवरतस्फुटभेदत्वात् देहस्य अवश्यभावी यः स यद्यपि अस्य विगलति, तथापि वेद्यरूपत्वादख्यातिप्रधाने मायामय एव पुर्यष्टके वा प्राणे शून्ये वा प्रमातृताभिमानोऽस्य स्फुटः। तत्र च कालकृतावस्थाभेदो देह इव स्फुटो न सम्भवति यद्यपि, तथापि तद्देहसहकार्यभिमानाविच्छेदादौपाधिकः स्फुरति कोऽपि भेदः। ततश्च अस्य पूर्वानुभूतेषु अर्थेषु स्मरणं तावदस्ति। देहात्मकनिविडतरावरणाभिमानविषमा च तनुकरणप्राणबुद्धिशून्यावरणान्तर्वर्तिनी संविदमला शरदभ्रोपहितरविप्रकाशवत् क्वापि अंशे आभिमुख्येन धारणापूर्वकतया यो योगो ध्यानं तस्य वशः सामर्थ्यं तेन समाधिस्थलब्धप्रकाशकभावलक्षणनिरावरणस्वरूपोन्मेषा तमर्थमपूर्वावभासमेव तत एव स्मरणायोग्यमपि पूर्वस्मर्यमाणसाहित्यात् पूर्वतया अनुभवत्येव संस्कारसाक्षात्करणादिना पूर्वजातीरिव। ननु स्मृतावद्भविकल्पमेतत् प्रत्युदाहरणं पूर्वानुभवबोधयोगांशस्य। स्मृतेर्हि शब्दारूषितत्वं रूपम्। तच्च अत्र नास्ति निर्विकल्पकत्वात् योगिप्रत्यक्षस्य। सत्यम्, किन्तु शब्दारूषणे विद्यमानेऽपि पूर्वानुभवस्य अनाभासनादेव स्मृतिराभावः स्वतन्त्रविकल्पे। तेन उक्तेऽपि विषये तथैव युक्तमिति निरूपयति **'पूर्वानुभव'** इत्यादि। **'स्वेच्छया'** इति

'या तु व्याक्षेपसारत्वाच्चेतसः स्वरसोद्गता।'

इति न्यायेन न तत्र पूर्वानुभवोल्लेखः। यदा च अस्य सत्यत एव पिता राजा, नच आगमादेव अवगतं व्याक्षेपवलोत्पन्ना सा विकल्पमध्येऽपिच असत्यविकल्पात् काकतालीयेनैव समुन्मिपति, तदा इदमुदाहरणं पूर्णम्, आगमादवगमे तु पुनः स्मरणमेव। असत्यविषयत्वे च तदानीन्तनसत्त्वादिसर्वज्ञप्रमात्रन्तरसंलग्नता कथमुपपद्येतेति उक्तोदाहरणद्वयविषये स्मृतित्वं निराकरोति। तदानीन्तनत्वेन ये प्रमातारः सर्वज्ञा यदिवा संसारिणोऽपि अनुमानागमादिप्रमाणान्तरायाततद्विषयप्रकाशा अपूर्वत्वेन पश्यन्ति विमृशन्ति तेषां यो ज्ञानाभासः, तेन सह तत्र अंशे भगवदिच्छया स एकीभवति। स्मरणे तु पूर्वप्रमातॄणां यो ज्ञानाभासस्तस्य स्मर्तुः पूर्वानुभवेन सह मिलितोऽभूत्, स एव इदानीमुन्मिषतीति विशेषः। एतदुपसंहरति **'तस्मात्'** इति तदनुन्मेषे स्मृत्यभावस्य दर्शितत्वात्। स्मृतौ पूर्वानुभवोन्मेषविपक्षे स्मृतिविरुद्धेन स्मृतित्वाभावेन व्याप्तस्य साक्षात्करणस्वतन्त्रविकल्पनरूपत्वस्य प्रसङ्ग इति विरुद्धव्याप्तोपलब्ध्या विपक्षात् व्यावृत्तो हेतुः साध्येन तदुन्मेषवत्त्वेन व्याप्यते इति व्याप्तिसिद्धौ स्वभावहेतुः। एवं **'न दुष्यति'** इत्यन्तं सौत्रे पादे वृत्तिग्रन्थं व्याख्याय **'घटाभासमात्रेण'** इत्यन्ते सूत्रांशे या वृत्तिः **'अवभास'** इत्यन्ता, तां विवृणोति **'अर्थित्वाच'** इति। आ समन्तात् भोगः संवेदनान्तर्लुडितानन्तभावसंस्कारमध्यनिमग्नस्य चिद्भावस्य उन्मेषणात्मकपालनचर्वणव्यापारोऽन्वेषणात्मा, आभोगश्चिन्तासन्ततिलक्षणं प्रणिधानम्। सोऽर्थित्वात् यावति अंशे भवति, तावन्तमेव स्मरति यथा घटेन मार्त्तिकेन उदकानयनार्थी शैशवपरिदृष्टं नृपसदनसुलभं सौवर्णमपि घटं तत्कारिणमधुना पृथुबुध्नोदराकारमा-

त्रेण स्मरति, यथा वा निष्पन्नपण्डितः खण्डिकोपाध्यायकथितानन्त-प्रक्रियासरणमनाद्रियमाण एव ब्राह्मणशब्दे साधुत्वमात्रं स्मरति तावतैव अभीष्टप्रयोगसिद्धेः। अन्यस्मरणादरणे प्रत्युत अभिसंहितगङ्गास्रोत.सततसरकृतवचनविरचनप्रत्यूहाय तत्। तदाह **'यथोपयोगम्'** इति। स्वलक्षणरूपता च सामान्यस्य व्यापकत्वनियत्त्वापह्नवेन देशकालाभ्यामेव वितीर्यते इति एकाभासस्य आरोपमात्रतया आभासान्तरसम्पर्कविरहात् पूर्णार्थक्रियासंपादनवैकल्येन अस्फुटस्यापि सा उक्ता यथा सततमसे दूरादूर्ध्वमिदं किमपीति। स्मृतितत्त्वेन अभिमन्यमानं विकल्पमथशब्देन सूत्रे सूचितमत्रैव आभासपारिमित्याभिधानप्रसङ्गेन विवृणोति **'पूर्वदेशकालादि'** इति। आदिग्रहणेन वर्तमानभविष्यद्देशकालावच्छेदविरहमपि आह। एवंभूतश्च सामान्यस्वलक्षणविभागो न अन्यत्र प्रसिद्धः इत्याशयेन हेतुमत्र घटयति **'सामान्यान्येवहि'** इति। **'संभूय'** इति परस्परं समिश्रीभूय। नच द्वन्द्वपदार्थन्यायेन तुल्यकक्ष्यतया, अपितु परस्परं विशेषणविशेष्यभावेन पर्यायतो गुणप्रधानभावेनेति यावत्। तथाहि आवरणार्थित्वे पटत्वं प्रधानं, शुक्लत्वादि पुनरवच्छेदकम्, चित्तप्रसादार्थितायां शुक्लत्वमवच्छेद्यम्, इतरत्तु विशेषणमिति पर्यायतोऽवच्छेदेऽपि तत्समुदायाशयेन अन्योन्यावच्छेदभणितिः। युगपदपिच अवच्छेद उपकारी। घटो लोहितत्वे व्यापके अपि अन्योन्यावच्छेदात् देशकालाभ्यां सङ्कोच्यते। एवं बहुभिः सामान्यैर्मिलितैरेकं स्वलक्षणमिति उक्तम्। तत्र यः शङ्कते—ननु एवं धव, खदिरः पलाशः इति भिन्नान्येव स्वलक्षणानि, तत्र वृक्ष इति एकबुद्धिः कथमिति, तं प्रति आह **'एवमपिच'** इति। वर्णसंस्थानग्रहणेन रसवीर्य-

स्पर्शादिकमुपलक्षयता धवत्वादीनां स्वरूपमुक्तम्, अवान्तरभेदश्च सूचितः। ननु आभास एव वस्तु । स च प्रकाशमस्त्वाय यतते । प्रकाशश्च विमर्शजीवितः । विमर्शश्च मायापदे विकल्पात्मा प्रत्याभासं विश्रान्तः शब्दनैकशरीरत्वात् शब्दस्य प्रत्याभासं संकेतनात् । तत् कथं स्वलक्षणं नाम प्रकाशते । सत्यम्, अन्यदर्शने दूषणमेव एतत् निर्विकल्पकप्रकाशस्य अपि विकल्पकेनैव व्यवहार्यविषयत्वेन उपगमात्; इह तु नैवमिति दर्शयति **'स्वयम्'** इत्यादिना । सामान्यान्येव अनन्तस्वलक्षणतामापद्यन्ते । तत्र च हेतुः परस्परभेदः पर्यायेण च अन्योन्यावच्छेदः । तथाहि सत्तैव द्रव्यं गुणः कर्म च । सत्ता हि द्रव्यत्वादिभ्यो भिद्यते, तानि च ततः । अन्योन्यं च अवच्छेदः सत् द्रव्यं, सत् गुण इति । देशकालाभासावपि न भावस्य स्वरूपं यथा सौगता मन्यन्ते संकुचितात्मैव भाव इति, प्रत्युत विकसितस्वभाव एव भावो विकल्पेन व्यवह्रियते । संकोचस्तु अन्येन देशाभाससामान्येन कालाभाससामान्येन च मिलित्वा निर्भास्यते । तयोरपिच देशकालाभासयोस्तदवच्छेदात् संकोच इति षड्रससंपाद्यमाने पानके यथा अन्योन्यशक्तिनियन्त्रणया अपूर्वपाडवादिरसोदयः, तथा इहापि स्वलक्षणाभासोदयः इति यौगपद्येन अपि अन्योन्यावच्छेद उपकारी । रसे च यथा कुशलसूदव्यापारः प्रधानतया उपयोगी, तथा स्वलक्षणोदये भगवन्नियतिशक्तिर्या सर्वं नियच्छति । तदुल्लङ्घने हि सर्वं सर्वत एव पूर्णमिति आस्तां तावत् । एवं द्रव्यं घटः, द्रव्यं पटः, घटः स्थूल इत्याद्यपि मन्तव्यम् । तत्र च स्वलक्षणे वाक्यपरामर्शजीवित एव योजनात्मा प्रकाशः । ननु एवं घटाभासपटाभाससामान्ये मिलित्वा कथमेकं स्वलक्षणं न उत्थापयतः । आह

'**आनुगुण्येनैव**' इति । परमेश्वरनियतिशक्तिमहिमा हि आभासाना समीलने व्याप्रियते, न स्वमहिमा । यथाच धवत्ववृक्षत्वयोरेव अन्योन्यमेलनम्, न धवत्वखदिरत्वयोरिति अपार्थे भगवन्नियतिर्विजृम्भते, तथा क्वचिद्व्यभिचारनियमोऽपीत्याह '**किञ्चिच्च**' इति । अन्येन व्यतिरिक्ततया परामृष्टेन आभासान्तरेण अविशेषितत्वेऽपि स्वेनैव शुद्धेन रूपेण निर्भासमानमपि सत् स्फुटं सामान्यम् । यतोऽस्य आत्मा सामान्यरूप एकोऽपि स्वभावोऽनेकसामान्यमयोऽनेकसामान्य न व्यभिचरति, यथा धवत्व सामान्यं सत्त्वद्रव्यत्वपार्थिवत्ववृक्षत्वानि अव्यभिचरत् तदपेक्षया स्फुटमेव सत्त्वादीनामपि पूर्वं पूर्वमस्फुटमुत्तरोत्तरस्फुटत्वेनेति मन्तव्यम् । ननु एवं तत् स्वलक्षणमेव भवेत् स्फुटत्वात् । आह '**सामान्यतां तु**' इति । सामान्यशब्दोऽयमव्युत्पन्नः साधारणार्थः, ननु भावप्रत्ययान्तः,–इति युक्त एव भावप्रत्ययः । भावप्रत्ययेन च स्वे वाच्ये सामान्यशब्दस्य प्रवृत्तिनिमित्तं सामान्यानां यदेकं लक्षणं समाख्या अनेकत्र एकधीहेतुत्वमसमवायेऽपि इह बुद्धिजनके यत् असभवि, तदुच्यते अनेकसामान्यशब्दसमवेता सामान्यशब्दत्वलक्षणा शब्दजातिर्वा यया शब्दमुपरञ्जयन्त्या तद्वाच्यमपि उपरज्यते यतोऽसौ शब्दवाच्योऽर्थो विमर्शमुखप्रेक्षितया स स्वरूपीक्रियते, न अन्यथा । जातिष्वपिवा व्यक्तितया स्वातन्त्र्येण सृष्टासु जातिरपरा सभवत्येव आत्मादिविकल्पेषु इव आद्यन्तरम् । तथाह तत्रभवान्

'अनुप्रवृत्तिधर्मो वा जातिः स्यात्सर्वजातिषु ।' (वा०प० ३।१४)
इति,

'जातिशब्दैकदेशे सा जातीना जातिरिष्यते ।' (वा०प० ३।९)
इति,

'अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।
व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः ॥' (वा०प०२।११)

इति च । सामान्यतायां हेतुः **'देशकाल'** इति । अत्र अधुनेति गृहीतो य एककोऽपि आभासः, स व्यापकत्वनित्यत्वात्मसामान्यलक्षणतिरस्कारात् संकुचितः स्वलक्षणमुच्यते अत्रेदं सदिति । तावतापि च हृद्यङ्गपरिहाराद्यर्थक्रिया भवत्येवेति वक्ष्यते

'तथैव सद्घटद्रव्य·············· ।' ( २।३।५ )

इत्यत्र । घटाभासशब्दः सूत्रे केवलाभासोपलक्षणार्थः इति वृत्तौ व्याख्यातमन्यतमपदेन । **'अखिलात्मना'** इति सूत्रे बह्वाभासोपलक्षणम् । असमग्रत्वे, समग्रत्वेऽपिवा आभासनम्, तत्र असमग्राभासतां व्याख्यातुं **'अन्यदा तु'** इति वृत्तिः । तां विवृणोति **'यदा पुनः'** इति । समग्राभासतां व्याकर्तुं वृत्तिः **'अतिशय'** इति । तां व्याचष्टे **'कदाचित्'** इति साक्षात्कारसमये यावद्भिराभासैः पूर्णोऽर्थः प्रत्यभासिष्ट, तावद्भिरेव स्मर्यते यदा । किं बहुना यमहमिममिदानीं पश्यामि विमृशामीति, अयमपि आभासो विशेषणमध्ये प्रविष्टः; तेनापि तदा पुर इति अनुभवितुरग्रे एव वर्तमानदेशकालयोस्तद्देशकालतया आच्छुरितयोस्तद्देशकालीभूतयोरेव सोऽर्थः स्फुरति येन अधुनैव अग्र एव इममहं पश्याम्येवेति प्रतिपत्तिर्भवति । अनेन **'प्रत्यक्षीकारः'** इति विवृतम् । अप्रत्यक्षस्य स्मर्यमाणस्य प्रत्यक्षाभासतया आच्छुरितस्य अतदवस्थायाः स्मर्यमाणतायाः परमार्थतो विद्यमानाया अपि न्यक्कार इति यावत् । अत एव भगवता पतञ्जलिना 'स्वप्नो भावितः स्मर्तव्या स्मृतिः' उक्ता । भावितो भवत्त्वं प्रापितः, स्मर्तव्यः स्मरणयोग्यत्वेन अभवन्नपि अर्थोऽस्यामिति । अन्तरयति सान्तरं करोतीति

अन्तरं निजातीयांशो मलं, तदभावो नैरन्तर्यम्। ननु तदानीं सङ्कल्पविमर्शात् कथं स्मृतित्वमित्याह **'तदा न'** इति **'पूर्वदृष्टतयैव'** इति। नहि योगिज्ञानवदपूर्वार्थावभासोऽसौ वर्तमानप्रमातृस्वरूपैकीभावाभावात्। पूर्वदृष्टतैव सविमर्शा सती इदानीन्तनविमर्शभूमिपतिता सदतिविमर्श उच्यते इति तेन अत्र अवश्यभाव्यमेव। भावनातस्तु उद्रेचितत्वात् प्रकाशांश एव अत्र स्फुट इति सन्नपि विमर्शो न्यक्कृतः स्थितः। तत उच्यते

'शब्दसङ्केतस्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रा निर्वितर्का'

(यो॰सू॰ १।४३)

इति। तत एव सहजविमर्शाद्युत्थाने विकल्पे सङ्कल्पनंविमर्शः। **'सुतराम्'** इति अनुभवांशस्य अपि दृष्टताव्यपदेशकृतः स्फुरणेन अप्रमोषादिति भावः। तदाहि स्मरणानुभवयोरेकस्वसंवेदनीभावेऽपि अनुभवांशस्य उद्रिक्ततया स्मरणम्। अथ सूत्रसूचिते स्वतन्त्रविकल्पेऽपि स्फुटतां व्याख्यातुममुमेव वृत्तिं योजयति **'स्वतन्त्रेऽपि'** इति। अनुमानागमादिकं विचित्रधर्मधर्मिविषयं यत् प्रमाणं मिश्रं वा केवलं वा, तेन यः परिशुद्धः सत्यतया हृदयानुप्रविष्टो ननु कामशोकादिप्रभावितविकल्पग्राह्यतुल्योऽनेकेन विशेषणेन विशिष्टोऽर्थाभासो ब्रह्मादिस्तत्र उन्मुखः स्फुटीकरणैकव्यग्रः। अनेन दृष्टार्थशब्दो व्याख्यातः। **'तदुक्तम्'** इति शिवसूत्रवृत्त्योर्मधुराहितीतस्वार्थचिन्तामण्योर्भट्टश्रीकल्लटपादैः। ननु योगिप्रत्यक्षमविकल्पकमिति उक्त

'.......... तत् स्फुटा कल्पधीः फलम्।'

इति, तत् कथं विकल्पता उक्तेत्याह **'तदा च'** इति

'शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का। स्मृतिपरिशुद्धौ स्वरूपशून्येव अर्थमात्रा निर्वितर्का।' (यो॰सू॰ १।४२)

इति नीता । तेन वाशब्दोऽत्र न संशये, अपितु संभवविकल्पे । ननु यदा निर्विकल्पकता,तदा कथं **'स्वतन्त्रविकल्पोऽपि'** इति उक्तिर्वाचकीभवेदित्याह **'पूर्वावस्थायामतिभाव्यते'** इति । अस्यां भावनापरिनिष्पत्तिफलायां विकल्पत्वस्य संभवादिति अदोषः । ननु निर्विकल्पकत्वस्य परामर्शस्य अभावात् परामर्शनान्यथानुपपत्त्या **'परामृशन्'** इति सूत्रोक्त्या यदर्थावभासनं समर्थितं, तत् कथमित्याशङ्क्य आह **'परामर्शशून्यता तु'** इति । परामर्शस्य हि प्रतियोगिशङ्कानिराकरणकारणतायोगे विकल्परूपताविशेष इति वक्ष्यते

'तदतत्प्रतिभाभा················ ।' (१।६।३)

इत्यादौ । नच विशेषाभावे सामान्याभावः । सद्भावेऽपि अस्य तर्हि किं प्रमाणम् । आह **'तादात्म्यात्'** इति

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।' (१।५।११)

इति हि वितत्य समर्थयिष्यते । ननु स्वलक्षणं स्मृत्या भासते इति सूत्रे वृत्तौ च वक्तव्यम्, किं शब्दगौरवकारिणा णिच्प्रयोगेण तदनुसारायातेन च **'आभासितम्'** इत्यादौ णिजर्थव्याख्यानप्रयत्नेनेत्याशङ्क्य आह **'सर्वत्र च'** इति । चित्तत्त्वस्यैव अन्तःस्वसंवेदनरूपस्य स्वातन्त्र्यं रूपान्तरतिरोधाने रूपान्तरस्वीकृतौ तत्संयोजनवियोजनादौ । यत्तु समनन्तरप्रत्ययात् विपर्येण तद्वासनया वा सहकृतात् पूर्वस्मादुत्तरं ज्ञानमुदेतीति शुष्ककार्यकारणभाववादिनां मतम्, तत् न संभवतीति णिचा निरूपितम् । **'पूर्वाभासितम्'** इति सूत्रांशत्वात् व्याख्येयणिजर्थमपि पूर्वं पठितम्, ततो वृत्तिकृतं णिजन्तम् । तेनैव सौत्रो णिच्प्रयोगो व्याख्यात इति न पठितः । व्याख्येयणिजर्थतया वृत्तिगततया पृथक् प्रघट्टकेन पठितम् **'प्रकाशितस्य'** इति ॥ २ ॥

ननु परामर्शस्य अन्धपदप्रख्यता मा भूदिति स्मरणेऽपि अर्थस्य प्रकाश उपगम्यते। ततश्च अनुभूयमान इव स्मर्यमाणोऽपि बहिरयमिति कथं न व्यवहार्यः। तद्व्यवहारकारणं हि तस्य अर्थस्य प्रकाशनम्। तच्च अविकलमस्तीत्याशङ्क्य आह

नच युक्तं स्मृतेर्भेदे स्मर्यमाणस्य भासनम्।
तेनैक्यं भिन्नकालानां संविदां वेदितैष सः ॥ ३ ॥

स्मर्यमाणस्य अर्थस्य यत् प्रकाशनं, तदिदानीन्तनं न भवति, अपितु प्राच्यमेव तत्। तदपिच प्राच्यं प्रकाशनं स्मृतिलक्षणे स्वसंवेदनेऽधुनातनं विमर्शरूपं प्रधानीकृत्य निर्भासमानमभेदेनैव, नतु भेदेन, आभाति। ततश्च स्मरणे स्वात्मांशे सविमर्शः प्रकाशः कालानवच्छिन्न एव। अर्थांशे तु प्रकाशः प्राच्य एव। तन्नान्तरीयकविमर्शसहितः पुनर्विमर्शस्तु इदानीन्तनः। एवं तत् स्मर्यमाणस्य अनुभवप्रकाशनद्वारेण भासनं भवति। अन्यथा स्वातन्त्र्येण अनुभूयमानतोचितं तद्भासनं भवेत्, न स्मर्यमाणतोचितम्। तेन यथा अनुभवज्ञाने प्रकाशादपृथग्भूतमपि मायाशक्त्या मायाप्रमातुः पृथग्भूतमिव प्रकाश्यते वस्तु, न तथा स्मृतिज्ञाने, अपितु तत्र प्राच्य एव असौ पृथग्भावप्रकाशाभिमानोऽनुवर्तते। तेन पृथक् प्रकाशः कस्मात् न भवति स्मृताविति न चोदनीयम्। एवद्दोषपरिहारनान्तरीयकतया च प्रसङ्गतः प्रकृतमपि सिद्ध्यति अधिकरणसिद्धान्ततयेत्याह 'तेन' इति। यदुक्तं 'स्मृतावनुभवप्रकाशनमनुवेधकतया वर्तते अनुभवप्रकाशाभेदेन च अर्थो वर्तते' इति, ततो हेतोरिदमपि सिद्धं भवति—शरीरप्राणधीशून्यानां स्फुटत्वेन अस्फुटत्वेन संभावितस्फुटत्वेन च वर्तमानातीतभविष्यद्रूपतया तदुपाधिसङ्कोचयोगेन सविदोऽपि वर्तमानादिभेदेन उपचरितकालभेदाया

अपि परमार्थत ऐक्यमेवेति । सत्यपिच सर्वत ऐक्ये यावति एव निजस्वातन्त्र्यमहिम्ना स प्रमाता परामृशति ऐक्यम्, तावति एव तत् भाति स्मरणानुभवयोरिव । एतदेव हि संवेदनाधिकं संवेदितृत्वम्—यत् संवित्सु संयोजने वियोजने च स्वाच्छन्द्यमिति । यदेवमैक्यमनुसन्धानरूपं स्वातन्त्र्यं, तदेव अपरं वैलक्षण्यप्रदमात्मन इति स एव आत्मा । एक आत्मेति वक्तव्ये भावप्रत्यये तद्धर्मप्राधान्यं दर्शितं यथा 'चैतन्यमात्मा' इति श्रीशिवसूत्रे । तथाहि आर्यैः

> 'धर्मान्तरप्रतिक्षेपाप्रतिक्षेपौ तयोर्द्वयोः ।
> संकेतभेदस्य फलं ज्ञातृवाञ्छानुरोधिनः ॥'

इति । '**सः**' इति च्छन्नाकारस्य इव '**एष**' इति स्फुटं स्वरूपमुक्तमिति विस्मयगर्भया उक्त्या प्रत्यभिज्ञानमेव सूचयतीति सूत्रार्थः । तदुपवारयति संक्षेपेण '**स्मृतिकाले च**' इति । च आशङ्कां द्योतयति । सा दर्शिता सूत्रव्याख्यानारम्भे इति । '**दर्शयन्**' इति च दर्शयन् ज्ञानक्रियास्वतन्त्रस्य महेश्वररूपस्य आत्मन उपपत्तिं करोतीति संबन्धः । अनेन श्लोकार्धस्य तात्पर्यद्वयं दर्शितम्—स्मृत्यनुभवयोर्न ग्राहकांशेन, न ग्राह्यांशेन भेदः कश्चिदिति । तच्च प्रकृतप्रमेयसिद्धावुपयोगीति । '**योगिज्ञान इव**' इति केवलार्थप्रकाशे तु योगिज्ञानवदपूर्वानुभवतैव स्यात्, न स्मृतिता । '**स्मृतावतीतत्वम्**' इति '**अनुभूतविषयासंप्रमोषः**' इत्यत्र यद्यपि सर्वत्र क्रियामुखेनैव द्रव्यस्य कालस्पर्शः, तथापि अव्यभिचरितभवनादिक्रियामुखेन भूतत्वं वस्तुनोऽसत्तामाह, नतु अनुभवक्रियामुखेन । '**अत्र**' इति स्मृतिलक्षणे । प्रकाशात् भिन्नस्य मा भूत् प्रकाशमानता, स्मृतिस्तु भिन्नस्य कथं न स्यादिति परिहर्तुं '**स्मृतिप्रकाशे**' इति वृत्तावुक्तम् । तत् विवृ-

णोति **'ज्ञानरूपैव'** इति । **'उपक्षिप्ता'** इति प्रथमार्धव्याख्याकाले एव सूचितेत्यर्थः। **'अनुभवेन सह अर्थः स्मरणादभिन्नः'** इति वृत्त्या तात्पर्यद्वयं सौत्रं व्याख्यातम् । **'स्मर्यमाणस्य'** इति सूत्रे अनुभूतस्य असम्प्रमोषलक्षणं भासनं वेदना, तेन ग्राहकग्राह्यांशौ द्वावपि एकीभाव स्मरणे प्रतिपद्येते इति उक्तम्। अत्र हेतुमाह वृत्तिकृत् **'प्रकाशात् भिन्नस्य'** इति । ननु स्मर्यमाणस्यैव अर्थस्य न एष धर्मः, अनुभूयमानस्य अपिहि एषैव वार्ता । सत्यम्, एष तु आशयः स्मृतावध्यारस्य एवमभिधानस्य—अनुभूयमाने मायाशक्त्या पृथगभिमानस्तावदस्ति बहिः, इह तु सोऽपि नास्ति । तत एव न अर्थक्रिया स्मर्यमाणादिति । अत एव भट्टेन अपि स्मृतिनिर्भासमानवस्तुमुखेनैव अर्थधर्मता प्रकाशस्य अपसारिता

'अर्थो न भासते भ्रान्तिस्मृत्योः········· ।'

इति,

'·········स्मृतौ तु निर्दग्धपदार्थविषयो यथा ।
स भावो नेक्ष्यते नैवं प्रकाशेतापि ·········· ॥'

इति च । **'पुरस्तात्'** इति आदिसिद्धसूत्रादिषु । **'वक्ष्यते च'** इति

'प्रागिवार्थः····················।' (१।५।२)

इत्यादिसूत्रेषु । तत्र च यद्यपि सामान्येन समस्तज्ञानसाधारणमिदमुक्तम्, तथापि विशेषान्तरवत् स्मृतिरपि अत्र निरस्ता, प्रत्युत तन्मुखेनैव न अर्थधर्मः प्रकाशः सिद्धेदिति दर्शितमेव । अर्थस्य च स्मृतौ भेदेन प्रकाशे स्मरणतैव न भवेत्, पूर्वमनुभवनमेव स्यात् । तेन स्मरणे यदर्थस्य प्रकाशनं, तदर्थमतितमां क्रोडीकरोति, च्छायामात्रेण तु पृथक्ताभिमानोऽत्र,–इत्येतावता

अनुभवसंस्कारजता उच्यते। स्मरणे एव हि अर्थस्य श्वेततावेशो दृष्टान्तः, नतु अनुभवे। तत्र तादात्म्यतावभासस्य यौक्तिकत्वात् श्वेतगुणस्य समवायदर्शनेऽपि तादात्म्येन अवभासोऽङ्गीकार्यः। यदाह तत्रभवान्

'आत्मान्तरस्य येनात्मा तदात्मैवावभासते।
यतश्चैकत्वनानात्वतत्त्वं नाध्यवसीयते॥
तां शक्तिं समवायाख्यां.........।' (वा०प० ३।१०)

इति। **'वस्तुस्थित्या तु भिन्नरूपत्वम्'** इति वचनं निर्भासनसारपदार्थस्वरूपनिरूपणावसरे न संगतमेव। तथाच नरेश्वरविवेकः

'स्वयं प्रासादो न श्वेतो नाप्यश्वेतः........।'

इति अप्रामाणिकोक्तिः। नहि वस्तुधर्मयोरन्योन्यपरिहारेण अवस्थितयोरन्यतरेण अयुक्तं वस्तु संभवेदिति। यच्च उच्यते

'प्रदेशस्यैकदेशं वा परतो वा निरूपणम्।
विपर्ययमभावं वा व्यवहारोऽनुवर्तते॥'

इति। तत्र यदि पारमार्थिकमनिरूप्यं रूपं तन्मात्रसंचयो वा संसर्गि द्रव्यं वा ब्रह्मद्रव्यमभिन्नं वा सर्वतो व्यावृत्तं स्वलक्षणं वा,—इत्युक्ते

'वस्तुस्वरूपं तत्तादृक्...............।'

इति कथं प्रतीत्यम्। यदार्यः

'अनिरूपितेन नाम अयमात्मना भावान् व्यवस्थापयतीति स्वव्यवस्था भावाः।'

इति। तत् युक्तमुक्तम्—यत् यदात्मकं न भवति, न तत् तेन वपुषा प्रकाशते पीततया इव नीलम्। प्रकाशते च प्रकाशा-

त्मना स्मृतौ भावः इति न तदात्मा । अतदात्मनस्तथा निर्भासने तदेव तथैव भाति अबाधितेन रूपेणेति उभयतो नियमो न भवेत् । अनियमश्च व्यापकस्य दृश्यमानस्य नियमस्य विरुद्ध इति व्यापकविरुद्धोपलब्धिप्रसङ्गात् तथाप्रकाशनमतदात्मत्वात् विपक्षतः पलायित तदात्मतया व्याप्यते इति तद्विरुद्धस्य अतादात्म्यस्य विरुद्धव्याप्तोपलब्ध्या प्रतिषेधः । एवं श्लोकार्धं व्याख्याय तदर्थस्य हेतुतामन्यत्र योजयितुं यत् सौत्रं '**तेन**' इत्यादि, तद्वृत्तिम् '**एवंच**' इत्यादिका विवरीतुं पूर्वोक्तोपसंहारमुखेन आह '**तदेवच**' इति । '**उत्प्रेक्षादि**' इत्यत्र अपि आदिपदेन प्रत्यभिज्ञासंकल्पनादेर्ग्रहणम् । विकल्पत्व तु अनुभयायमानत्वात् न पृथगुक्तम् । वर्तमानभविष्यदेकीकारात्मिका उत्प्रेक्षा समुदाहृता भूतभाव्येकीकारोत्प्रेक्षामपि उपलक्षयति मम या पुनरनुभविष्यत इति । ननु संविदामैक्यमेकरूपता, एकसंविद्रूपत्वमात्मेति कथम्, यावता स्मरणादयस्तस्य धर्मा इति आत्मवादिनां मतम् । सत्यम्, तत्र तु इदमाकूतमिति दर्शयति '**केवलम्**' इति । धर्मताकल्पने विचित्रता हेतुः, तस्यामपि विषयवैचित्र्यं सव्यवह्रियते इति साव्यवहारिकोऽयं भेदः, ननु आनुभविकः, येन पारमार्थिको भवेत् । अनेन वैशेषिकस्य मोहः शमितः । सहि भूते—भेदस्तात्त्विकः, समवायबलात् तु अभेदः इति । तच्च अनुभवविरोधि । यदजडप्रमातृसिद्धिः

'न सिद्धोऽप्रथनादेव ज्ञानादिसमवाय्यपि ।' (१९)

इति । '**अतीताभासेन**' इति अनुभवकाले, वर्तमानः आभासः स्मरणीभूतः, तावेकस्य अर्थस्य कथं रूपं स्यादित्यर्थः । अनुभवस्मृत्योरेव नास्ति भेदः इत्याशयेन आह '**अत्रोच्यते**' इति । '**ग्रहयते**' इति

'नैव ह्यनुभवो भाति स्मृतौ पूर्वोऽर्थवत् पृथक् ।' (१।४।४)
इति । अनेन वृत्तौ यत् **'तथाहि'** इति उत्तरप्रबन्धस्य प्रकृत-समर्थकताद्योतकत्वम्, तत् विवरीतुं प्रबन्धोऽयं योजनीयः । **'ज्ञानानां च'** इति भेदेन प्रथनेऽपीति आशयः । **'वक्ष्यते'** इति

'केवलं भिन्नसंवेद्यदेशकालानुरोधतः ।
ज्ञानस्मृत्यवसायादि सक्रमं प्रतिभासते ॥' (१।५।२१)

इति । ननु ज्ञेयभेदात् य उपचरितः कालभेदः, सोऽनुभवस्म-रणयोः क प्रयात इति । आह **'एवंच'** इति । एवमपि यः पूर्वापरव्यवहारोऽर्थापेक्षया उपचरितः शङ्क्यते, स नास्ति अर्थ-स्यैव भेदाभावात् । तावद्ग्रहणेन समर्थयिष्यमाणमन्यथात्वमस्य व्यवहारस्य सूचयति । **'वक्ष्यते'** इति

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूपिता ।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥' (१।७।१)

इत्याद्युद्देशेषु । ननु भाति अयं बोधस्मृत्योः पूर्वापरभावः । सत्यम्, सतु न विषयभेदात् । कुतस्तर्हि । कल्पितमायाप्रमातृ-भेदादित्याह **'तस्यैव तु'** इति । न अर्थभेदादेव पूर्वापरता-व्यवहारः, अपितु अनेन प्रकारेण । विशेषं तु द्योतयति । आत्मैव ईश्वरत्वात् सर्वशक्तिः । तस्य विचित्राभासकारित्वेन लक्षिता या कालोत्थापिका शक्तिराभासानां प्रत्यभिज्ञावैचित्र्येण क्रमोत्था-पनसामर्थ्यं, तया हेतुभूतया सूर्यादिक्रियाणामुदयास्तमयवृत्ती स्फुटेन अनुभवेन लक्षणीये ये आभासस्य बोधनिष्ठस्य आका-रस्य सदसत्त्वे भावाभावौ प्रबन्धवृत्ती, ताभ्यामाभासानां घटादीनां भेदस्य क्रियावैचित्र्यस्य प्रकाशनात् क्रमस्य अव-भासनं भवतीति कालचिन्तावसरे अयं क्रमो न्याय्यो लक्ष्यते

'क्रमो भेदाश्रय················।' (२।१।४)

इत्यत्र। क्रमावभासने च अस्मिन् देहप्राणबुद्ध्यादेरपि मायाप्रमा-तुर्बाल्ययौवनदुर्बलत्वदृढत्वपटुत्वापटुत्वाद्ययस्याभासानां यः क्रमः सोऽनयोरनुभवस्मृत्योर्बोधेन अन्तर्मुखरूपेण अभेदेऽपि केवलमु-पचर्यते, उपचरितभेदयोश्च तयोर्विषय एकोऽपि भिद्यते इवेति। एवं यदर्थस्य पौर्वापर्यमुपचरितम्, तन्न वास्तवेन अभेदेन न विरुध्यते माणवकस्य इव अग्नित्वगोत्वादीनि माणवकत्वेन। औपचारिको हि भेदो न वस्तुनि निविशते प्रमातृबुद्धिनिवेशि-त्वात् तस्य। तुल्यविषयत्वं विरुद्धयोर्धर्मयोर्विरोधकत्वम्, अन्य-था विश्वं विश्वस्य विरुद्धं भवेत्। तेन विरोधकारणस्य तुल्यविषयत्वस्य विरुद्धेन भिन्नविषयत्वेन व्याप्तं यदौपचारिकत्वं, तत् स्वव्यापकविरुद्धकार्यस्य विरोधस्य निषेधकमिति कारणवि-रुद्धव्याप्तोपलब्धिः। एवमौपचारिकमात्रे तावत् न विरोधः, किमङ्ग इह उपचारपरंपरायाम्। इह हि परमार्थतो न क्वचित् भेदः, केवलं स्वातन्त्र्यशक्तिरेव पारमेश्वरी स्वप्नसंकल्पयोगीच्छा-दाविव एवंभूतेन आभासभावाभावप्रपञ्चेन भातीति किं केन विरुध्यते इति तात्पर्यम्। ननु भिन्नविषयत्वादस्तु अत्र विरोधः स्फुटत्वास्फुटत्वात्, तु तस्यैव विषयस्येति अभिन्नविषये ते च स एव अनुभूयमानस्मर्यमाणयोरिति तत्कृतो विरोधः स्यादिति पुनरपि कथमैक्यं विषयस्येत्याशङ्कां निषेधति 'नच' इति। नच आभासभेदादपि भिद्यते सोऽर्थः,–इति तमाभासभेद-मेकमुखेन उपलक्षयति 'स्मृतौ' इत्यादिना। ननु यदि अङ्गी-कृत आभासभेदः, तर्हि तत्कृतः कथं न भेदः। इत्थमाभासस्य विमर्श एव जीवितमिति तद्भेदाभेदकृतैव वस्तुभेदाभेदस्थितिः। इह च विमर्श ऐक्येन एव। सौगतैरपि अस्फुटग्रहणं धूलिपट-

लादिवस्त्वन्तरसाहित्यग्रहणमेव, वस्तुतस्तु अध्यवसायैक्यादेकत्वमेवेति प्रामाण्यपरीक्षादौ निर्णीतम् । **'वक्ष्यते'** इति

'दूरान्तिकतयार्थानां············ ।' (२।३।१०)

इत्याद्युद्देशेषु । ननु पूर्वानुभवेन सहभावः स्मर्यमाणवस्तुनः कथं वृत्तावुक्तः । स हि न पृथक् भाति । तत् कः सहार्थः । सत्यम्, यदा पुनस्तामेव स्मृतिं विकल्पान्तरेण अध्यवस्यति अनुभूतं स्मरामीति, तदा

'स्वातन्त्र्यामुक्त················· ।' (१।५।१६)

इति न्यायेन तदर्थपृष्ठे स्पष्टोऽसौ वेद्यतया अनुभवो भाति,—इत्यभिमानात् । तदाशयेन इत्थमुक्तमिति दर्शयति **'यद्यपिच'** इति । **'अर्थमयः'** इति अर्थः प्रकृतो विशेष्यत्वेन यस्मिन् सः । ननु इत्थमर्थवदनुभवस्य अपि अस्ति भेदेन प्रथा, प्रकाशमानतावलात् तु यः प्रकाशरूपात् बोधादभेदः, सोऽर्थस्य अपि । तत् को विशेषः, येन संविदैक्यद्वारेण अयमद्वयोपक्रमः

'पुरुष एवेदं सर्वम्' (श्वे०उ० ३।१५)

'ब्रह्मैवेदं सर्वम्' (नृ०उ०उ० ६ ख०)

इत्येवमात्मकेभ्यो निर्विशेषाभेदोपक्रमेभ्यो वैलक्षण्येन आश्रित इति । आह **'एवम्'** इति । यद्यपि व्यवहारात् विशेषणविशेष्यतालक्षणात् भेदोऽयं दर्शितः, तथापि मायापदे अर्थस्य तात्त्विकमैक्यं सदपि न परामर्शदशां श्रयते अपितु अनुभवस्य । तेन तात्त्विकप्रमात्रभेदविमर्शप्रकारेण हेतुभूतेन 'प्रागहमन्वभूवम्' इति प्रमातरि आरूढस्य अनुभवस्य आभासनं युक्तम् । ततो हेतोरनुभवोऽर्थ इव मायादशायामपि स्मृतौ न पृथगेव भाति, अपितु अपृथगपि । ततो हेतोः पूर्वसूत्रे संविदैक्यं यदुक्तं निर्विशेषाद्वयवादवैलक्षण्येन, तत् युक्तमिति सूत्रार्थो भविष्यन् प्रथमं बुद्धौ निवेशनेन दृश्यताम्—एवं किल इदमित्यवधानदापनरूपेण

वृत्तौ दर्शितः । हिशब्देन भाविसूत्रगतेन सविदैक्योपक्रमस्य उपपत्तौ हेतुता सूत्रार्थस्य उक्तेति सविदैक्यं राजवीथीरे गौरिव पूर्वोत्तरार्थाभ्यां सम्बध्यते इति दर्श्यते ॥ ३ ॥

नैव ह्यनुभवो भाति स्मृतौ पूर्वोऽर्थवत् पृथक् ।
प्रागन्वभूवमहमित्यात्मारोहणभासनात् ॥ ४ ॥

एतदवतारयति संक्षेपोक्त्या **'नच'** इति । **'स्मरणज्ञाने'** इति स्मृतिज्ञानव्यवहरणरूपे तु अध्यवसायान्तरे विशेषणतया स्पष्टो भातु नाम पृथगित्यर्थः । ननु भवतु अन्वभूवमित्यत्र कर्तृलग्नता अनुभवस्य, कर्मलग्नताया तु सा कथम् । आह **'अर्थ एव'** इति कर्तृस्थाना क्रियाणा कर्मलग्नतायां स्पष्टायामपि तत्कर्त्रवष्टम्भापरित्याग इति अनुभवस्य कर्तृस्थता न विघटते । तत एव उपसर्जनता युक्ता । इदमित्येवंभेदरत्वे पृथक् द्रव्यरूपतया हि विशेष्यत्वं भवेत्, वीरः पुरुषः इति तु उपसर्जनत्वं न श्रौतात् वृत्तात्, अपितु वाक्यीयात् । एतच्च सवन्धविमर्शे विचारयिष्यते । ननु यदा अनुपसर्जनतया अनुभवः परामृश्यते अर्थस्तु अप्राधान्येन—सोऽनुभवः स्फुटो नीले मम अभूदिति, तदा अस्ति अस्य पृथक् भासनमिति । अत आह **'तस्य तु'** इति । मात्रपदेन मूलप्रतीतिविश्रान्तिरेव व्यवहारप्रतीतीना तत्त्वमित्याह । **'वक्ष्यते'** इति

'स्मर्यते यदनुभासीन्मे सैवम्.............. ।' (१।४।६)

इत्यत्र । एतदेवच युक्तमिति द्रढयति **'सोऽहमेवम्'** इत्यादिना । नच आत्मा वेद्य एव वेदकान्तरानवस्थानादिति हि उक्तमिति आशयः।बुद्ध्या वेद्या मायाप्रमातुर्ये धर्माः सुखित्वदुःखित्वमूढत्वादयो वेद्यरूपाः, तेषां बोधे उपचारेण तथा भेदाभिमानकृतेन आरोपणा इयं वेद्यतेत्यर्थः। **'यश्च'** इत्यादिना वृत्तिग्रन्थेन एतत्सू-

त्रार्थस्य संविदैक्ये हेतुत्वं सूचयन् सौत्रो हिशब्दो व्याख्यातः। तं विवृणोति **'योऽयम्'** इत्यादिना। **'अहम्'** इति व्याचष्टे **'वेद्य'** इति। भूमिकाग्रहणेन नटस्य इव एवमादिरूपता प्रकाशवपुषः परमेश्वरस्य वेद्यता स्वावष्टम्भापरित्यागेन अभिमानमात्रे सेत्याह। ननु च संविदः कालस्पर्श एव नास्तीति कथं वृत्तिः **'अनेककालगत'** इति। अनेककालगतेषु वेद्येषु यदुन्मुखत्वं, तावन्मात्रादेव स बोधोऽनेककाल इति उपचारेण आचर्यते। ननु वेद्यानि अपि बोधादभिन्नानि एवेति। अत आह **'प्रत्यगात्मता'** इति। प्रतिपुरुषमाभिमुख्येन अन्यानामिश्रस्वसंवेदनमात्ररूपेण अञ्चति जानाति,–इति यो मायाप्रमातृरूपः प्रत्यगात्मवर्गो मेयेभ्योऽन्योन्यतश्च भेदप्राणः, तदवस्थायां वेद्यानां भेदादाभासभावाभावकृतकालक्रमोन्मेषात् भिन्नकालत्वम्। तदुन्मुखश्च एकः स्वसंवेदनप्रमाता **'अनेककाल'** इति उपचर्यते। तदनुसारेणैव अस्माभिः स्वैरिसूत्रे **'सहि'** इति प्रत्यगात्मतामात्मनि भासयमान इति व्याख्यायि यत्, न तदुक्तसूत्रमिति मन्तव्यम्। **'द्रष्टा स्मर्ता'** इति प्रकृतिभागस्य भेदेन दर्शनस्मरणरूपतया वेद्योन्मुखत्वकृतया कालभेदं दर्शयन् प्रत्ययांशेन ऐक्यं दर्शयन्ननेककालत्वं सूचयति। **'अद्रष्टुः स्मर्तृत्वमयुक्तम्'** इति अभिदधानः स्वतन्त्रकार्यकारणमात्रस्वभावबोधपरंपरामात्रेण न स्मरणसिद्धिरिति **'स्मर्ता द्रष्टेव कल्पितः।'** (१।२।६) इति पूर्वपक्षोक्तिं प्रतिक्षिपति। **'अत्र'** इति वृत्तौ। प्रथमानतायां वेद्यता उपचरिता तात्पर्यं तत्परत्वं विश्रान्तिस्थानत्वमन्यान्वेषणशून्यत्वमनपह्नवनीयतापर्यवसितं प्रयोजनं हेतुत्वेन अभिसंधाय। वेदनकर्मतायां हि प्रकाशान्तरोपजीवित्वलक्षणायां प्रकाशकान्तरमपेक्ष्यम्। तच्च नास्तीति मुख्यार्थबाधः। वेद्ये च व्यवहारापेक्षया

प्रथमालस्य स्मर्यते इति व्यवहाराभिमाननशेन वेद्यवाश्रय-योरैकार्थसमयाय उपचारे निमित्तम् ॥ ४ ॥

योगिनामपि भासन्ते न दृशो दर्शनान्तरे ।
स्वसंविदैकमानास्ता भान्ति मेयपदेऽपि ना ॥ ५ ॥

'ननु' इति । यथा युक्तिबलात् प्रकाशानुप्रवेशोऽङ्गीकृतः, तथा माहमादृकयोरनुभवबलात् भेदोऽपि अङ्गीकर्तव्यः । तत्स-मर्थनार्थैव च मायाशक्तेरभ्युपगमः । ततश्च यथा घटो मायाप्र-मातुः पृथक् भाति, तथा योगिनः परसंवेदनम् । तत् च त्रिधा परं इदं जानातीति, परत्र शरीरे पूर्वजातिलक्षणे एष मेऽनुभवो-ऽभूदिति, परेण इदमित्थं पूर्वं दृष्टमधुना स्मर्यते इति । सर्वं च एतत् 'प्रमात्रन्तरगता उपलम्भाः' इतिवृत्तौ दर्शि-तम्, सूत्रेऽपि 'दृशः' इति बहुवचनेन । टीकायामपि प्रथमं 'सहजानन्दाविर्भावस्तदा स्यात्' इत्यन्तेन विचारितम्, द्वितीयं 'स्मृतिरेव असौ' इत्यन्तेन, तृतीयं 'प्रमात्रन्तर' इत्यादिना । तदेतत् त्रिधासंवेदनं वेद्यम् । तेन मायादशायां ज्ञानस्य ज्ञानान्तरवेद्यत्वमायातम् । तेन च अनुभवस्मरणयोरपि वेद्य-वेदकता, तथा च एकविषयत्वेन विषयमेलनम्, तेन व्यवहार-सिद्धिरिति कथमेकप्रमातृसमर्थनमिति सिद्धान्तमभ्युपेत्य अनिय-मात् कथाप्रसङ्गोऽयमपसिद्धान्तः प्रसजति,—इति चोदयितुर-भिप्रायः । 'तदत्र' इति अत्र पूर्वपक्षे तदिति पूर्वोक्तमुत्तरम-स्तीति शेषः । तदेव स्मारयति 'योगिनामपि' इति । तदिति वा वाक्योपक्रमे । 'प्रागुक्तनीत्या' इति

'दृक् स्वाभासैव ………………… ।' (१।३।२)

इत्याद्युक्तेन न्यायेन । 'तस्य' इति परसमतस्य अपि बोधस्य । एवं 'योगिनाम्' इत्यादि 'भान्ति' इत्यन्तं सूत्रं संक्षेपेण व्याख्याय

'अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः।'
(न्या० सू० १।३१)

इति कथितप्रकृतप्रमेयसमर्थनहेतुदार्ढ्यप्रथनाय अभ्युपगमसिद्धान्तमाश्रित्य यः सूत्रशेष उक्तः, तं व्याचष्टेऽवतारणाय **'ग्राह्यभूमिः'** इति। अनुभवबलात् भेद इति उक्तम्। स च योगिज्ञाने काममापाते युक्तः। एष जानातीति अहं जानामीति योगिनः परसंवेदनं न अस्मदर्थेन संभेदमेतीति हि अस्ति वचनावकाशः। प्रकृते तु सोऽपि नास्ति **'अहमन्वभूवम्'** इति अस्मदर्थशरीरीभूतस्यैव अनुभवस्य निर्भासनात्। अपिशब्देन दृष्टान्तत्वेन यत् संभावितं परेण, तदस्य न घटते इत्याह **'दशा:'** इति उपलब्धयः परकीया न दर्शनविशेषे भूतार्थभावनाप्रकर्षविशेषपर्यन्तजे संवेदने वेद्यतया अवभान्ति। सौगतानां तावत् स्वसंवेदनमेव ज्ञानस्य वपुः, तदेव कथं यदि वेद्यता। सांख्यानां पुरुषच्छायैव उपलब्धिः, पुरुषश्च असंवेद्यपर्वा। काणादानामपि आत्मान्तरसमवायि ज्ञानमन्तःशरीरवृत्तिना योगिमनसा कथं ज्ञायते। जैमिनीयानामपि आत्मान्तरतादात्म्यवृत्ति। तेन योगिन इयत् परज्ञानवेदनं यत् परदेहादिसहभावी नीलमधुरसुखरागाद्यवभासमयः प्रकाश इति। तत्र च नीलादि पृथग्भावेन वेद्यमेव, प्रकाशांशस्तु अहमित्येव प्रकाशते। प्रमात्रीकृतदेहाद्यवभाससंस्कारात् तु तन्निष्ठामिदन्तां प्रकाशभागेऽभिमन्यते, दृढस्वपरविभागसंस्कारभ्रंशे तु सर्वमात्मतया पश्यन् स्वसृष्टमेव स्वपरविभागं पश्यतीति तदपेक्षयापि न ज्ञानं ज्ञानान्तरेण वेद्यम्। योगिज्ञाने वा अविचारितापातशङ्कितप्रतिभानबलादेव वेद्यता अस्तु परज्ञानस्य, नतु एवं स्मृताविति सूत्रार्थः। **'भान्ति'** इति काकाक्षिवत् योज्यम्। ननु योगी क्रियाशक्तिप्रकर्षवानपि इह दर्शने, तत्

पर्यं ज्ञानशक्तिप्रकर्षमात्रमस्य वृत्तौ निरूपितम्। आह **'उपयुज्यमानत्वात्'** इति। ज्ञानं ज्ञानान्तरवेद्यमिति किल इह साध्यम्। तत्र दृष्टान्ततया परोक्षस्य परचित्तादेर्ज्ञानमुपयुज्यते इति विमन्येन तत्प्रकर्षेण। एतच योगिना दर्शनविशेष इति उक्ते श्रुतायां बहुतरशास्त्रलोकप्रसिद्धे योगिप्रत्यक्षे मतिरभिपततीति लभ्यते। तदाह **'योगिप्रत्यक्षस्य'** इति। वृत्तौ गतप्रहण प्राग्निगाग्ने लोकप्रसिद्धे प्रयुक्त समवायद्वारेण तादात्म्ये पर्यवसायितं टीकायाम्। **'दृशः'** इति **'उपलम्भाः'** इति च बहुवचन विवृणोति **'तत्तत्'** इति। एतत् तेषा स्वभाव इति थुग स्लाराद्दा **'तावन्मात्रं लक्षणं हि एषाम्'** इति उक्तम्। यत् यस्य अन्यतो व्यावर्तकं, स एव तस्य स्वभावो घटस्य इव पृथुबुध्नोदराकारता। तथाच ज्ञानस्य स्वसंविन्मात्ररूपत्वमन्यतो जडात् व्यावर्तकमिति स एव तस्य स्वभावः। स्वो हि भावः स एव, यो न व्यभिचारी। तत एव घटस्य न द्रव्यत्वं स्वो भावः, किन्तु सभवि तदस्य रूपं पृथ्वादिरूपविशिष्टं तु भवेत् नाम असाधारणत्वात्। येन यत न हीयते, यतश्च न हीयते यत, तदेव अस्य अव्याप्त्यतिव्याप्तिशून्यं लक्षणं स्वभावः। अन्यस्य स्वभावत्वे अतत्त्वपि तत् स्यात्, तदपि च अतत्। स्वं व्यतिरेकाव्यतिरेकयुक्तमेव अर्थांशेन समुचित्य स्वविदमेव अर्थे समुच्चिन्वन् चकारेण तुर्यमपि नियमं सूचयति **'स्वा संविदेव'** इति। ननु स्वपरप्रकाशो बोधः, तत् **'स्वस्यैव'** इति कथमिति। अत आह **'परमपि हि'** इति **'तथाभूतं च'** इति। **'सत्'** इत्यनेन इदमाह—यत् यस्य लक्षण, तत् चेत् न भाति, तर्हि न आभातमेव तत् भवेत्, चतुर्विधनियमनियमितरूपावभासश्च ज्ञानस्य ज्ञानान्तरवेद्यताया विघटते एवेति। **'सैव संवित्'** इत्यन

प्रतियोगिरूपं दर्शयति **'परापि अस्य संवित्'** इति। **'स्वस्य संविदेव'** इत्यत्र तु प्रतियोगि असंविदपि च। **'तत्'** इति स्वस्येति शेषः। स्वा संविदेवेत्येतत्प्रागिति तु सूचयति **'जडस्य एवं-लक्षणत्वात्'** इति जडमपि अस्य रूपं स्यात्, नतु संविदेवेति भावः। स्वस्यैव संविदित्यत्र तु प्रतियोगी न दर्शितः प्रकृतानुप-योगात् परप्रकाशत्वस्य प्रतियोगिनो भवतोऽपि जाड्यनिमित्त-त्वाभावाच्च। ननु एवं परज्ञानविषयं योगिज्ञानमिति कथं व्यव-हारः स्यादित्याशङ्क्य क्रमात् क्रमं स्वपक्षे पातयति **'तदा तु'** इति यदा अयं व्यवहारः इति भावः। **'प्रत्युपस्थितम्'** इति स्वहेतुबलेन संनिधिं योगिसंवेदनस्य परसंवेदनस्य च दर्श-यति। तत्र परसंवेदनं स्वप्रकाशत्वात् तावत् प्रकाशते योगिसंवे-दनस्य च नैर्मल्यातिशयेन अप्रतिहतप्रसरत्वात् तदपेक्षयापि तस्य परसंवेदनस्य स्वसत्तानपेक्षयैव स्वप्रकाशता न तिरोभूय आस्ते इति दर्शयति **'तं योगिनं प्रति'** इति। **'अस्य'** इति परप्रमातृ-ज्ञानस्य **'एवम्'** इति उक्तप्रकारेण ज्ञानलक्षणस्य नियमवत्संवे-दनरूपस्य अतिक्रम उल्लङ्घनं न भवति,—इति संभाव्यते। **'ननु एतदपि'** इति अस्मदृशा तावदेतदुपपद्यते, नतु ज्ञानस्य ज्ञाना-न्तरवेद्यतयेति आशयः। **'परेण'** इति मात्रन्तरबोधेन। कर्मप्रव-चनीयविभक्त्या हि संबन्ध उच्यते। षष्ठीस्थाने हि सा। नच विषयविषयिभावो ज्ञानयोः संबन्धः। यतो विषयिता घटेन विषयेण ज्ञानस्य इयमेव उच्यते—यत् तदाकारानुकारित्वं नाम सारूप्यम्। विषयरूपं हि अनुकुर्वता बोधेन तदालम्बितं स्वीकृतं भवतीति विषयस्य आलम्बनता सारूप्यात्। तच्च भेदाभेदाभ्यां व्याप्तं सर्वथा भेदे सर्वथा अभेदे तदभावादम्भःस्तम्भयोरिव अन्योन्यं घटस्य इव च स्वात्मनि। नच ज्ञानस्य ज्ञानान्तरात् भेदः

कश्चित् देशकालाकारभेदस्य निरस्तत्वात्, ज्ञेयोपाधिकस्य भेदस्य अपारमार्थिकत्वात् ज्ञेयांशस्य नीलादेराशयस्य वा रागादेः पृथक् प्रकाशेन विषयत्वेऽपि बोधांशस्य विषयभावायोगात्। दर्पणयोस्तु देशकालस्वरूपात्मकं सर्वमेव रूपं विलक्षणमिति अन्योन्यप्रतिबिम्बयोगकृतमस्तु सारूप्यम्, नैव ज्ञानयोः। तदयं प्रयोगः—न ज्ञानयोर्विषयविषयिभावः पारमार्थिकभेदानुपलब्धेरिति व्यापकानुपलब्धिः। सारूप्य भेदेन व्याप्तं विषयिताया लक्षणं, पृथक्करणेऽपि तस्य व्यापकव्यापकं व्यापकमेवेत्याशयेन व्यापकव्यापकादिचिन्ता न कृता आर्यधर्मकीर्तिना। कारणकारणानुपलब्धावपि कारणानुपलब्धिः शक्या भणितुमिति कारणकारणविरुद्धाद्यपि न चिन्तितम्। कल्पितरूपत्वेन च धर्मीकरणमुपपन्नमिति। '**ज्ञानयोः**' इति प्रयोगो मायापदानुसारेण। मायया च परमार्थतो न बोधस्य शक्तिमतः स्वरूपमाव्रियते दाहकशक्त्या इव वह्नेः। आवरणमपि हि वस्तुतः पूर्वावस्थाविलक्षणस्वरूपजनकत्वेन। ननु तदाकारत्व विषयिता ज्ञानस्य च ज्ञानान्तराकारत्वं स्वयैव भेदं समर्थयमानेन उक्तमित्याशङ्क्य आह '**किंच**' इति। एवंभूते विषयभावे ऐक्यपर्यवसायिनि न ज्ञानं ज्ञानान्तरवेद्यं समर्थितं भवेत्। युक्तं च एतत्। यस्य हि यत् स्वरूपं, तत् चेन् न प्रकाशितं, रूपान्तरं च अस्य प्रकाशितम्; तर्हि न विषयीकृतं तत् शुक्तिकारजतपीतशङ्खादिप्रत्ययेषु इव शुक्तिकाशङ्खादि। ज्ञानस्य च ग्राहकत्वमेव स्वरूपमिति तदप्रकाशने ग्राह्यभावस्य च प्रकाशने तत् न विषयीकृतं भवेत्। विषयीकृतत्वे हि कश्चिदेव भवतु नियमेन व्याप्तम्, विपर्यये च अनियमः प्रसज्यते इति स्वस्वरूपप्रकाशेनैव व्याप्यते इति व्यापकानुपलब्धिः। संक्षिप्तत्वात् वृत्तौ '**न दृशो दर्शनान्तरे**' इति सौत्रं न विवृतं पूर्वगुरु-

त्वात् **'स्वात्मारूढा एव'** इति एवकारेण तु सूचितम्। ननु एवं स्वात्मारूढत्वेन अवभासे परज्ञानं प्रकाशितमिति पर-व्यवहारः कथम्। औपाधिकत्वेनेत्याह **'परप्रमातृ'** इति। एक-स्मिन् हि योगिसंवेदने परस्य शरीरप्रणादि ग्राहकाभिमतं, नीलादि ग्राह्याभिमतं, रागादिचैत्तरूपं ज्ञानं च परमार्थग्राहकरूपं सममेव निर्भासते। तत्र औचित्यात् ज्ञानं ग्राहकभागतादात्म्यापन्नमपि प्रमुखपरिगृहीतपरसंमतदेहाद्युपाधिसंभेदारूपणया परत्वेन विक-ल्प्यते, गृह्यते तु स्वत्वेनैव। शरीरादि तु परत्वेन स्वाहङ्कारपृथ-ग्भावेन भवति। नियतिशक्त्यपरिक्षयात् गृह्यते च विकल्प्यते च। **'तत्त्वम्'** इति विवृणोति **'परमात्मवेदकम्'** इत्यनेन। तत्त्वं परमात्मवेदकत्वमित्यर्थः। ननु परमात्मवेदकमिति न उप-क्रान्तं; तत् कथं सर्वनाम्ना प्रत्यवमृश्यमित्याशंकां व्यपोहति **'सर्व-ज्ञस्य'** इति। सर्वज्ञग्रहणं प्रागुपक्रान्तपरसंवेदनोपक्रमात् परा-त्मवेदकपर्यायतामेतीति भावः। ननु अन्यबोधेन चेत् योगी प्रमातृभागे समाविश्यते, तर्हि तद्गतमात्रादिसंभेदापत्तेः सुखदुःख-सहस्रसंभेदव्यतिकरकलितः स संसारिभ्योऽपि कष्टां दशामाश्रितः। यदाह **'इदमेव हि नः सुखं यत् सातं संवेदनम्'** इति। यो येन ऐक्यमापद्यते, स तद्धर्मभाक् भवति कुङ्कुमपङ्कपिञ्जरजला-ञ्जलिजनितसंभेदमिव जलान्तरम्। तथाच योगिबोधो बोधान्तरै-रिति स्वभावहेतुः, अनैक्यापत्त्या हि विरुद्धया व्याप्तमतद्धर्मव-त्त्वमिति विपक्षात् प्रच्यावकं प्रमाणम्। अत्र विरुद्धव्याप्तोपल-ब्धिप्रसङ्गः। एतत् प्रतिक्षिपति **'नच'** इति। चकारः शङ्काद्यो-तकः, एकमात्रपदाभ्यां सुखादेरधिकस्य ग्राह्यभागे एव विश्रान्ति-माह। तथाच सुखादीन् प्रकृतिगुणानेव वक्ष्याम इति अवास्तवे शरीरादिस्थानीये बुद्धिप्रमातरि तेषामवस्थानम्, न संवेदनरूपे।

एवंच यथा परदेहधर्मैर्गौरादिभिरस्य न सवित् संभेदमेति गौरोऽहमिति नियतिशक्त्या नियमणात्, स्वदेहधर्मैः पुनरभ्येति श्यामोऽहमिति, तथा परबुद्धिधर्मैरसंभेदोऽस्य 'वक्ष्यते' इति
'स स्वरूपापरिज्ञानमयः ' ··· ···· ··· ······· ।' (४।१।३)
इत्यत्र । 'अत एव' इति न यावद्वेद्यं प्रमातरि सुखादि, इति यदुक्तम्, तत् वक्ष्यमाणोऽपि हेतुरुपयुक्त इति एवशब्दोऽधिकरणसिद्धान्ततामाह । हेतुरपिहि अधिकरणसिद्धान्त उच्यते एव । ननु ग्राहकभूमिकाभिन्नवेद्यवेदनोचितमायाप्रमातृतादशातो ये उत्तीर्णास्तत्र न ग्राहकभावाभिमानिनः, ते कथं यथा भवन्तीत्याह 'वास्तव' इति वास्तव प्रमातार सम्यक् दृढनिश्चयपर्यन्तशुद्धविद्याप्रकाशबलेन ये आपन्नाः प्राप्तास्तेनैव प्रमातृताभिमानभाजः, तेषां नित्योदितमपिच तद्रूपं
'····· ··········· ····चक्रभ्रमवत् धृतशरीरः ।'
इति शेषवर्तनसभावनात् नियतिसंस्कारजदेहादिप्रमातृभावानरोहणात्मके व्युत्थानसमये प्रत्यस्तमितमिव भाति,—इति दशाशब्देन व्यवहृत तत्तत्स्वहेतूपस्थापितग्रहणेन सुखदुःखादीनामवश्यंभाविनीमुत्पत्तिमाह । तत्र उत्पन्नं सुखदुःखादि तैः साक्षात्क्रियते अन्यग्राहकवत् संवेद्यते, यथोक्तमभिनवभारत्याम्
'उपचचार च सा कृतिमानिनी
मुनिमनर्गलभोगसमर्पणैः ।
परितुतोष च सोऽपि विरागिणां
नहि सुखं करणाश्रयिणां सुखम् ॥'
इति । साक्षात्कारे अपितु अहं सुखीति प्रमातरि सुखानुवेधमयं नाभिमन्यते, तत एव अनुग्रहमुपघातं च सुखदुःखकृतमभिमनुते इति । भगवता गीतं
'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।' (भ० गी० २।५८)

इति। उद्वेगस्पृहाकृताश्च हर्षादय इति तदभावे तदभाव इति दर्शितं

'हर्षामर्षभयक्रोधैर्मुक्त ..................... ।' ( १२।१५ )

इति। ननु एवमनुग्रहोपघातौ चेत् न संवेद्येत, तर्हि बाह्यो घटः सुखाद्यात्मा अपि यथा उदासीनस्य न सुखदुःखमोहात्मा, तथा बुद्धिगतमपि सुखादिरूपं न सुखाद्येव स्यात्। सुखादिरूपताविर्भावस्य हि अनुग्रहोपघातौ लक्षणम्, अन्यथा अनवरतं सर्वः सुखदुःखपरीतः स्यादिति तद्व्यापकरूपाभावे तदनाविर्भावः,—इति एकान्तः। सत्यम्, परमार्थप्रमातृतासमापन्नस्य अपि देहाहंभावसंस्कारदार्ढ्यादङ्गेऽङ्गारस्पृष्टे दाहकृतं बुद्धौ दुःखं मध्योदितव्युत्थानसमयसंभवद्रूपमपि तद्बुद्धिगताहन्तास्वसंवेदनसाक्षात्कृतविमृष्टरूपमपि संमुखीकृतसत्यप्रमातृभावाभिमानविश्रमोद्रेकात् विकल्प्यमानतात्मकेन दृढनिश्चयात्मना अनुबन्धेन अहं सुखीति यतो न अहंभागे विश्राम्यति विश्रान्त्यभावात्, एवं हि पान्थ इव मार्गगतांस्तांस्तान् सुखदुःखहेतुभूतान् यदृच्छोपनतान् न अनुबन्धेन रागद्वेषायतनत्वेन अभिमन्यते, तत उक्तं **'न सुखित्वादि'** इति। ये तु देहादौ संस्कारदार्ढ्यं शिथिलीकृत्यैव कुतोऽपि निबन्धनात् गृह इव अधिकरणमात्राभिमानेन स्थिताः, तेषां देहबुद्ध्यादावहंभावलक्षणो योऽनुग्रहोपघाताविर्भावको हेतुः सुखादीनामाविर्भावकः, स नास्तीति चन्दनादिस्पर्शयोगेऽपि तदहङ्काराभिधानसहकार्यसंभवात् सामग्रीरूपस्य हेतोरपूर्णत्वात् न उत्पद्यन्ते एव सुखदुःखादयः। यथोक्तं

'वासीचन्दनकल्पानां वैराग्यं नाम .................. ।'

इति वासी चन्दनकल्पा येषामिति गुरुणा व्याख्यातमिति श्रीलक्ष्मणगुप्तगुरुराह। ननु सर्वथा अहंभावाभिमानाभावे करणप्रेरणादिस्वातन्त्र्यमेव विलुप्यते। तत् हि

'नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।
अपि त्वात्मबलस्पर्शात्पुरुषस्तत्समो भवेत् ॥' (स्प० का० ८)

इति नीत्या अहन्तावेशकृतमेवेति कारणानुपलब्ध्या अवसीदेदेव । सत्यमेव, किन्तु सहजस्य अकृतकस्य स्वात्मविश्रान्तिलक्षणस्व-स्वपूर्णतोदयापाकृतव्यतिरिक्ताकाङ्क्षाकालुष्यचिद्रूपस्य परमानन्दस्य यत आविर्भावे निरावरणतया प्रकाशो भवति, ततस्तदानन्ददुग्धाम्बुधिनिमग्ना अमी विषयजनितसुखादिसंवेदनकणिका न पृथगात्मानमुद्दर्शयन्ति शिथिलीकृतदेहाद्यहङ्काराणाम् । 'तदा' इति यान्त्यवभासावेशदशायाम्, यद्विषा तद्वित् सुखदुःखोल्लासावसरे यो लोकस्य तत्र तत्र । ते हि

'...... सर्वत्र सावधानता ।' (वि० भै० १०६)

इत्युपदेशबलेन स्वरूपविमर्शद्रढिमनि विश्राम्यन्तः परानन्देन युज्यन्ते । यथोक्तम्

'आनन्दे महति प्राप्ते दृष्टे वा बान्धवे चिरात् ।' (वि०भै०७१)

इत्यादि

'दुःखेऽपि च विकासेऽपि सौख्यार्थं धृतिसंगमात् ।' (शि०द०५।९)

इत्यादि च । वाशब्दो नियतयोग्याशयेन व्यवस्थितविकल्पार्थो मन्तव्यः । एवं प्रथमे प्रकारे परचित्तज्ञाने वेद्यवेदकतां निरस्य स्वपूर्वजन्मगतमनुभवं जानातीत्यत्र अपि अनुभूतविषयासम्प्रमोषरूपत्वेन स्मृतित्वं घटयन् निरस्यति **'पूर्वजन्मान्तरप्रत्यक्षीकारेऽपि'** इति । पूर्वस्मिन् जन्मविशेषे स्मृतित्वे च अन्यभूयमिति आत्मारोहः सिद्ध एवेत्याशयः । जातिस्मर इति व्यवहारश्च स्मरणमेव इत्थं पूर्णमिति भावः । स्वयमननुभूतासु तु परकीयपूर्वजातिषु सत्कारसाक्षात्करणोपदेशाभ्यासेन यत् योगिनो विज्ञानं, तत्र पूर्वानुभवस्पर्शाद्भिन्नप्रमाणरूपता उक्ता

**'योगिनो हि यस्य'** इत्यादाविति अविरोधः । एवं द्वितीयं प्रकारं स्मृतौ प्रवेश्य तृतीयमपि तथा करोति **'प्रमात्रन्तरदृष्टम्'** इति यदा केनचित् प्रमात्रा घटो दृष्टः, योगिना तु पूर्वं न दृष्टस्तदुत्तरकालं योगी तद्दृष्टतामेव उद्रेचयन् भावनाबलात् परः पश्यतीति अनुभूतविषयासंप्रमोषरूपत्वमेव विकल्पनावसरे तदितिपूर्वदृष्टतयैव हि विकल्पयति, न पुनरपूर्वतया जानामीति । ननु न अत्र मया ज्ञातमिति विकल्पनम्, अपितु तेन इदं ज्ञातमिति । सत्यम्, ज्ञातमिति पूर्वप्रकाशमेव तदीयं पुनरुन्मीलितं प्रमाणीकुरु, नतु अपूर्वमिदानीमुदितं प्रकाशम् । तत्पूर्वप्रकाशतादात्म्यप्रवेश एव हि तस्य योगिनस्तदानीं स्मर्तृता । तत एव मन्वादीनां धर्मविषये प्रकाशनमपि सार्वज्ञ्यात् भवत् परमेश्वरस्य अनादेरयमित्थं प्रकाश इति तत्प्रकाशप्रमाणीकरणेन भवत् स्मृतिरुच्यते । तदपूर्वपारमेश्वरप्रकाशानुग्रहोत्थं हि प्रमाणं श्रुतिः । ननु प्रमात्रन्तरेण यदनुभूतं, तत् चेत् योगी स्मरति; तत् प्रमात्रन्तरं, सच इति एकं संपन्नम् । ततश्च तेन इदं दृष्टमिति कथं व्यवस्था । आह **'स्वप्रत्यगात्म'** इति स्वो यः प्रत्यगात्मा देहप्राणादिः, तत्र योऽहन्तादार्ढ्यसंस्कारस्तस्य अनिवृत्तेः परशरीरादि परत्वेन पश्यति यतः, ततो व्यवहरति प्रमात्रन्तरेण एतत् दृष्टमिति । यस्य तु योगिनो दृढः संस्कारः क्षीणः, नतु सर्वात्मना नष्टः, नाशे हि तस्य संस्कारस्य ईश्वर एव; सतु ईश्वरायते नाशोन्मुखे तु तस्मिन् सर्वप्रकारवति दृढे संस्कारे शरीरादि अहमिति पश्यन्नपि तन्मध्य एव विश्वमहमिति पश्यति । तदस्य चक्रवर्तिन इव विश्वमनुशासतोऽपि स्वदेहादिकमधिष्ठानराजधानीकल्पम् । एवं वेद्यतां योगिसंवेदनापेक्षया निराकृत्य उपसंहरति **'तदेवम्'** इति **'स्थितम्'** इति अस्यैव

पक्षस्य दार्ढ्यमभिदधत् पक्षान्तरमभ्युपगमवादमात्रम्, स्मृत्यनु-भवयोस्तु तथापि न वेद्यवेदकतेत्याह 'बोधमात्रेण' इति। अस्त-तुकं वेद्योपरागादि परास्यति 'प्रातिस्विकेन' इति ज्ञानस्वल-क्षणात्मना। तत्र निर्दिशति 'शुद्ध' इति। अयं च अत्र भावः— स्वस्मिन् स्वस्मिन् दर्शने यादृशं बोधस्य शुद्धं रूपं, तत् यथा

'सर्वार्थरूपता शुद्धिर्ज्ञानस्य निरुपाश्रया।
ततोऽप्यस्य परा शुद्धिरेकं प्राहुरनल्पकाम्॥
प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः।'

'चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चा-नन्ता च'

'गुणानां समवायांशोपाधित्यागे परं वपुः।
असंसृष्टमनिर्भक्तं शुद्धं तत्त्वविदो विदुः॥'

इत्यादि, न तादृशं निरुपरागं वेद्यतां परचित्तज्ञानेऽप्येतानि 'भासेरन्' इति उभयत्र वृत्तिकृत् दर्शयन् 'भान्ति' इत्यस्य काकाक्षिवत् योजनामाह। 'नोक्तनयेन' इति परवेद्यता विषयता च ज्ञानस्य दूषिता यतः। एवमभ्युपगमे च बीजमा-त्रमस्ति। यौगवदपि स्वलक्षणानि ज्ञानानि भिन्नानीति, नैया-यिकमते ज्ञानं ज्ञानान्तरवेद्यमिति। तत्र द्वन्द्वमुभयमपि अपाकी-र्णम्। स्वदर्शनेऽपि अस्ति बीजम्—मायाशक्तिरेवं कुर्यादिति। तच्च एतत् न युक्तम्। यद्विबोधस्वरूपमेव मायया अन्यथाक्रियते विश्वस्य अप्रकाशनप्रसङ्गात्। सा हि बोधस्य शक्तिस्तदायत्ता तदभावे कथं स्यात्। निर्माणं तु स्वात्मन्यपि कुरुतां नाम, ननु निर्मातृरूपं शुद्धं बोधं बाधितुमलम्। यथोक्तं

'तस्यानावृतरूपत्वात्……………… ।' (स्त० का० २)

इति। अत्र निमित्तं

'यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्।' (स्प०का०२)

इति। तदनावृतौ हि आवरणशतमपि कुत्र भासेत, कुतश्च उद्भवेत्। भासते हि तत् संविदि एव, उद्भवति च तत एवेति अभासने अनुद्भवे च किमावरणमिति न मायाशक्तिर्बोधं भिन्द्यात् भेद्यत्वेऽबोधत्वात् तथापिच बोधस्य अप्रत्यस्तमयात्, अन्यथा बोधस्य अपि कः प्रकाशः। **'यदि तथा'** इति नतु एतत् संभवतीति यावत्। यत् नरेश्वरविवेके

'....नचानुपपन्नं मायाशक्त्यापि शक्यते कर्तुम्।'

इति। नहि सदैव स एव तथैव तत्रैव तमेव प्रति नास्ति अस्तीति च श्रद्धीयते मायात एतदेवमिति वचनमात्रेण। एष च असंभवस्तुर्यपादस्य आवृत्त्या काकुसहायया सूत्रितो मन्तव्यः। प्रकृतस्य दार्ढ्यं तुना आह **'इहतु'** इति कर्तृकर्मप्रत्ययभेदेऽपि अनुभवः कर्तृस्थ एवेति भावः। नच आत्मा ज्ञानद्वयसमवायिकारणमात्रं वैशेषिकस्य इवेत्याह **'आत्मनश्च'** इति **'औदासीन्यात्'** इति। स हि द्वयोः केवलमाधारत्वेन अस्ति घट इव रूपरसयोः, नतु द्वयोर्मेलनाय समर्थः। ज्ञानान्तरमपि ज्ञानद्वयविषयमेव रूपरसयोरिव गुणत्वम्। **'यावत्'** इति यदेत्यर्थः॥ ५॥

स्मर्यते यद्दृगासीन्मे सैवमित्यपि भेदतः।
तद्व्याकरणमेवास्या मया दृष्टमिति स्मृतेः॥ ६॥

ननु घटे स्मर्यमाणे वेद्यदशाधिशायिनि अनुभवो ग्राहकेनैव मिलतु, तस्मिन्नेव तु स्मर्यमाणे वेद्यीकृते किं वाच्यम्। उच्यते। घटे मम अनुभवोऽभूदित्यपिकथने घट एव वेद्यः। यथाह तत्रभवान्

'घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम्।
घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत्॥'

(वा०प० ३।१।१०५)

इति । आर्योऽपि

'.........सं हि मतत्वक विवेचयन् ।'

इति । 'सा' इति स्मृतिपरामर्शो मौलिकः । तस्य वृत्तिः '**मया दृष्टम्**' इति दर्शनस्य पृथक्स्पष्टतायामपि गुणत्वेन भेदस्य अप्ररूढत्वात् । तस्या विभागमात्रं तु टीका '**मम तस्मिन् घटे ज्ञानमभूत्**' इति तस्यैव प्राधान्येन स्पष्टस्य भेदप्ररोहात् । मूलप्रतीतिश्च व्याख्यानप्रतीत्या न बाध्यते, अपितु उपबृंह्यते इति पूर्वमुक्तमेव सर्वम् । स्पष्टमन्यत् । सूत्रवृत्तिटीकासु सर्वं हि एतत् वितत्य निर्णीतम् । '**कथनशब्देन**' इति स्पष्टमपि एतत् न वस्तुतो मौलिकस्य बाधकमिति यावत् ॥ ६ ॥

अनुभवानन्तरभाव्यध्यवसायरूपमनुजीवति स्मृतिरविकल्पिते स्मरणासम्भवात् । ततस्तदध्यवसायमुखप्रेक्षिण्या स्मृत्या तदगोचरीकृत न स्पृश्यते खपुष्पमिव । नच अध्यवसायेन प्रत्यक्षानन्तरभाविना अनुभवांशो वेद्यत्वेन अध्यवसितो ग्राहकभागेऽस्मदर्थे सामानाधिकरण्येन विश्रान्तेरिति दर्शयति सूत्रेण

या च पश्याम्यहमिमं घटोऽयमिति वासता ।
मन्यते समवेतं साप्यनसातरि दर्शनम् ॥ ७ ॥

'**या च**' इति चशब्दः स्मरणस्य तदुपजीवकतामाह । '**या अवसा**' अध्यवसायः '**पश्यामि**' इत्येवं जायते, '**सा**' तावत् '**दर्शनमवसातरि**' ग्राहकांशे प्रत्यवमृशन्ती तदनुभवसंस्कारात् '**मन्यते**' तथैव साक्षात्कुरुते । यत्र अपि स्वशब्दपरामृष्ट दर्शनं न भाति, तत्र अपि अयमिति तावत् प्रत्यक्षता परामृश्यते । सा च न भावनीयं रूपम्, अपितु दर्शनमेव । तस्य न भावधर्मत्वेन अध्यवसीयते इदमर्थेन सभेदाभावात्,

तस्मात् न वेद्योऽनुभवोऽध्यवसाये वेद्यताव्यापकेदन्ताविरुद्धा-स्सदर्थसंभेदोपलब्धेः। न स्मृत्या अनुभवो वेद्यत्वेन भासते तथानध्यवसायात्, असदर्थसंभेदाध्यवसायात् चेति स्मृतिनिर्भा-सनायाः कारणस्य अनुपलब्धिः कारणाविरुद्धस्य वा,—इति सू-त्रार्थः। अध्यवसायविशेषश्च स्मृतिः। नच कचिदपि अध्यव-सायोऽनुभवमिदन्तया विषयीकरोति। ततः सा अपि कथमित्थं कुर्वीत, कुर्वती वा अध्यवसायरूपतां जह्यादिति सूत्रतात्पर्यम्। एतदवतारयति **'प्रत्यक्ष'** इत्यादिना संक्षेपविवरणेन। **'इद-न्तानिर्देशेन वा'** इति दर्शनं **'परामृश्यते'** इति संबन्धः। ननु घटोऽयमित्यध्यवसाये न अस्मदः, न दृशः प्रयोगः, तत् कुत्र विश्रान्तं किं परामृश्यते। सत्यम्, न एतयोरस्ति प्रयोगः, तेन तु विना अपि तदुभयार्थपरामर्शोऽस्ति **'अयम्'** इति। तदेतत् दर्शयति **'अहम्'** इत्यादिना। ननु इदमित्यनेन घटरूपमेव अवमृश्यते। नेत्याह **'अन्यथा'** इति प्रत्यक्षत्वापरामर्शे च स्वतन्त्रविकल्पात् न अस्य भेदः स्यादिति। न अत्र अयंशब्दो घटरूपतापरामर्शविश्रान्तिमात्रेण कृतीभवति, अपितु तदीयस्रो-म्यदेशस्थत्वपरामर्शमुखेन तत्प्रत्यक्षतापरामर्शे विश्राम्यति। ननु प्रत्यक्षता अपि घटधर्म एव। नेत्याह **'प्रत्यक्षत्वम्'** इति **'अहंकारगोचरः'** इति प्रमातृमयः। **'हि'** इति यत एवं, ततोऽस्मच्छब्देनैव उभयत्र दर्शनपरामर्श इति पूर्वेण संबन्धः। **'प्रत्यक्षरूपः'** इति अयमिति यः सूत्रेऽवसाय उक्तः, स प्र-त्यक्षस्य रूपणात्मा अध्यवसानस्वभावः, नतु घटमात्रस्य,—इत्येवं वृत्तौ व्याख्यातो **'दर्शनमेव तत् प्रत्यवमृश्यते'** इति व-चनेन। अयमिति हि शब्दो घटात्मानं यद्यपि सामानाधिकर-ण्येन अवलम्बते, तथापि इयति एव न विश्राम्यति। यथोक्तम्

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।' (अज०प्र०सि०१५)
इति । ततश्च स्वविश्रान्तिमेव अहंभावस्य अभिमुखीकरोति ।
प्रत्यक्षो घट इति प्रतीतावपि प्रत्यक्षता स्वविश्रान्तैव मदीयो घट
इतिवत् । अपिशब्देन च सूत्रे इदमाह—यादृक् दर्शनस्य वपु-
स्तदेव निरूप्यं स्वसंवेदने निर्भासनयोग्यम् । विकल्पाद्यविचार-
स्तत्र क उपयुज्यते, भवतु वा, तथापि विकल्पनमपि न इदन्तो-
दन्तमाविष्करोतीति । एवम्भूता सा दृक् ममेति विकल्पो न
लौकिकस्य दृढविवेचकमन्यस्य अपि कस्यचित् भवन् प्रकृतिप्रत्य-
यार्थविभागकरणवत् कल्पनामात्रम् । 'सा दृक्' इति च स
घट इतिवत् दृगन्तरमपेक्ष्येतेति अनवस्था । दृशेश्च कर्तृस्वभा-
वकत्वमुक्तं—दर्शयते भृत्यान् राजेति । जैमिनीयैरपि प्रकटताफ-
लमावनात्मा दृगात्मवर्तिनी एव उक्ता । तेन घटं पश्यामि, घ-
टोऽयं, घटे मम दृगिति शब्दवैचित्र्यमात्रम्, तत्त्वार्थस्तु अवि-
चित्र एव । एवं स्मरणेऽपि तदिति, अहमन्वभूवमिति, मया
अनुभूतमिति, सा मम दृगासीदिति शब्दवैचित्र्यमात्रमेवेति सू-
त्रद्वयस्य तात्पर्यम् ॥ ७ ॥

चिद्वपुरेव ज्ञानादिशक्तिमान्, स्मरणानुभवयोश्च एकमेव सं-
विद्रूपं तत्त्वमित्युक्तेः सामर्थ्यादिदमायातम्—यत् मायीयौ
ग्राह्यग्राहकौ शुद्धमन्मयावेव भासेते, ततो वक्ष्यमाणस्य सूत्रस्य
न अधिको वाच्य., अपितु स एव अर्थ एकीकृत्य उपसंहरणीय
इति प्रकरणार्थपर्यालोचनकुशलकुशाग्रीयबुद्धयभिप्रायेण अवतार-
यति 'इति' इति इदं वस्तु उपसंहरन्नाह। उपसंहारोपलक्षितमाह

> तन्मया दृश्यते दृष्टोऽयं स इत्यामृशत्यपि ।
> ग्राह्यग्राहकताभिन्नावर्थौ भातः प्रमातरि ॥ ८ ॥

यदेतत् पूर्वमुक्तम्, तस्मात् हेतोः । अयमत्र तात्पर्यार्थः—यत्

विशुद्धसंविद्रूपे प्रमातरि ग्राह्यग्राहकरूपतया परस्परापेक्ष्या भिन्नौ वेद्यावर्थौ भासेते इति । कीदृशे **'मया दृश्यते' 'मया दृष्टे'** इति च अनुभवस्मरणामर्शनोपलक्षिते **'अयम्'** इति **'स'** इति च दर्शनभागानादरणेन अनुभूयमानस्मर्यमाणार्थभागप्रधानेन आमर्शेन उपलक्षिते । अपिश्चार्थे । अपिशब्दो भिन्नक्रमः, भिन्नावपि एकत्र आभासेते इति वृत्त्यनुसारेण वा योजना । ये तु स्थूलदृष्टयः प्रकरणार्थं विवेक्तुमशक्ताः, तान् प्रति चोद्यपूर्वकमपूर्वार्थाभिधानमिदमित्यनया च्छायया अवतारयति **'अथवा'** इति । अथवेति **'परिहरिष्यन्नाह'** इति संगतिः । समस्तस्य परिहरणप्रकारस्य स्वकण्ठेन अनभिधानात् न वर्तमाननिर्देशः, अपितु भविष्यत्प्रयोगः । अभिप्रायान्तर्वर्तिनो भविष्यत्तैव उचिता यतः । किं तत्परिहर्तुमभिप्रायेण उपलक्षणम् । आह **'दर्शनादि'** इति ।

'नैव ह्यनुभव················· ।' (१।४।४)

इत्यादिश्लोकैरेव मातृविश्रान्तस्य दर्शनादेरवभास इति समर्थितेऽपि प्रकृतं प्रमेयं

'तेनैक्यं भिन्नकालानां संविदां······ ···· ।' (१।४।३)

इति न समर्थितमेव अवसातुरहं गौरः क्षुधितः सुखीति प्राणबुद्धिरूपस्य असंविद्रूपत्वादत्यन्तभेदाच्चेति । तत्र परिहारः **'तन्मया'** इति । आमर्शनेन उपलक्षितः संवित्स्वभावो यतः प्रमाता उपपद्यते, कल्पितग्राहकस्तु भवन्नपि ग्राह्यवत् तत्रैव निर्भासते । **'तत्'** इति तस्मात् हेतोः संविदेकता न न समर्थितेति अभिप्रायः । सूत्रे पूर्वमनुभवोपादानं तत्पूर्वकत्वात् स्मृतेः, तस्या एव प्रकृतत्वमित्याशयेन तु वृत्तौ सैव प्रथममुक्ता । विवृतावपि तदनुसारेण इह अभिसंधाने द्रष्टृभागबहुमाने च दृक् प्राधान्येन प-

राम्हश्यते । स्मरणे प्रत्यक्षाध्यवसाये च आदरणमेव पुरःसरपू-र्वादिशब्दैर्दर्शितम्, अनादरणं तु परित्यागादिशब्दैः । तथाहि अ-नभिसंधौ दृश्यभागबहुमाने च दृग्भागो न आद्रियते, अपितु अर्थभाग एवेति चतुर्धा अनुभवे, षोडशधा च स्मृतौ, उभय-स्पृशि च प्रत्यभिज्ञाने चतुःषष्टिधा, पूर्वापरभागभेदप्राधान्येन च द्विगुणीभूते वर्तमाने हेयोपादेयादिभेदेन पुनरपि भिन्ने अनन्त-विकल्पे च उत्प्रेक्षादिलक्षणे सर्वस्मिन्नेवमत्र संवेदने ग्राहको ग्रा-ह्यश्च परस्परापेक्षया भिन्नप्रथौ, परस्परापेक्षया च ग्राह्यग्राहकतां गतौ युगलस्मृतियोगेन मिश्रौ प्रकाशेते । क । परामर्शनस्वतन्त्र-कर्तृस्वभावे संविद्रूपे विशुद्धप्रमातरि । 'अन्योन्यापेक्षौ' इति वचनेन सूत्रे भावप्रत्ययप्रकृते द्वन्द्वस्य इतरेतरयोगो दर्शितः । सहनिरक्षा च अत्रैव युक्ता द्वयोरपि ग्राहकत्वात् ग्राह्यत्वाच्च । यदाह **'याभ्यामेको द्व्यर्थस्ताभ्यामपरोऽपि'** इति । ननु कथं तयोर्विच्छिन्ना अन्योन्यपृथग्भूता प्रथा । आह इदन्तापरा-मर्शात् सत्यामेव वेद्यतायामहमितिपरामर्शस्य छलकस्य क-ल्पितस्य आस्पदता हठादेव यतो ग्राहको नीलोऽहं गौरोऽय-मिति, यतश्च ग्राह्यो घटादिः प्रकाशमात्रपरमार्थोऽपि इदन्तायाः प्रकाशभिन्नत्वपरामर्शस्य गोचरतां बलादेव प्रापितः, तत एतौ विच्छिन्नप्रथौ । ननु यदि विच्छिन्नप्रथौ, तर्हि कथमेकप्रमातरि प्रोतौ । किं मणिद्वयस्य इव तन्तौ प्रमातरि प्रोतत्वमनयोः । ने-त्याह । कथं तर्हि । तन्मयौ । विशुद्धप्रमातृपरमार्थादधिकमनयोर्न किंचित् वपुः । कथमेतत् प्रत्येयमिति चेत्, आह **'ग्राहकस्य तावत्'** इति । अयत्नोपपन्नमेतदिति तावत्पदम् । यदिदा

> 'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते ।
> जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥

तदात्मनैव तस्य स्यात्कथं ग्राणेन यन्त्रणा।' (अज०प्र०सि०२०) इति न्यायोऽत्र अनुसरणीयः इति तावच्छब्दाभिप्रायः। आपाते यद्यपि ग्राह्यमिदमिति प्रकाशभिन्नत्वेन विमृश्यमानं चकास्ति, तथापि

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्॥'
(अज० प्र० सि० १५)

इति,

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।'

इति च नयेन अहन्ताविश्रान्तत्वैव पार्यन्तिकीति सारपदस्य अभिप्रायः टीकायाम्। **'अनन्तरमेव'** इति

'वर्तमानावभासानां........................।' (१।५।१)

इत्यादिना प्रकरणेन इदमेव वितनिष्यते इत्यर्थः। ननु भवतु इत्थं प्रकाशमानता, सा तु न ग्राह्यस्य स्वरूपप्रथायां चकास्ति घटस्यैव चकासा यतः। सत्यम्, घटस्य तु इयमेव चकासा या प्रकाशमानतायाः प्रथा, अन्यथा घटोऽप्रकाशित एव भवेदिति आशयेन चेच्छब्दः। **'मौलिकः'** इति पारमार्थिक इति यावत्। ग्राह्य एव इदमिति चकासत् भगवतः शक्त्या मायया विच्छेदित इति अस्तु नाम, ग्राहकस्तु अहमिति निर्भासमानः कथं प्रकाशात् छेदित इति परस्य भ्रमं भिनत्ति **'ग्राहकश्च अयम्'** इति। पारमार्थिकप्रकाशलक्षणचिन्मात्रपरमार्था हि भावा अन्यथा प्रकाशनासंभवात् तेषां, तदपेक्षया च मायाशक्तिर्यदि भावान् विच्छिन्द्यात्, तदप्रकाशरूपांस्तान् निर्भासयतीति उक्तं स्यात्। नच एतत् युक्तम्—प्रकाशन्ते च, न प्रकाशन्ते चेति। ततः पारमार्थिकप्रकाशात् तावदभिन्ना एव सर्वदा ते इति उप-

गम्यम् । ननु भगवच्छक्तिरतिदुर्घटकारिणी किं किं न कुर्यात् । तथा च

'बोधानामपि कर्तृत्वजुषां कार्ममलश्रतौ ।
भिन्नवेद्यजुषां मायामलं विश्वेश्वरास्त्र ते ॥' (३।२।९)

इति वक्ष्यते । ततश्च बोधरूपं परमार्थप्रकाशमपेक्ष्य भावानां भेदेन प्रथा न युक्ता । एतदाशङ्का गमयति 'क्रियमाणापि वा' इति । बोधस्य हि विश्वात्मनोऽपि मायाभिधानभगवच्छक्तिकृताया विश्वात्मत्वाख्यानिरूपताया मायीयापरपर्यायाया खण्डनायां सत्यामपि

'वेदीकरणमर्याना मलो मायाख्य उच्यते ।
मूलम्·························· ॥'

इति दृशा बहिर्मुखतायामन्तर्मुखसंकोचान्तराभावात् प्रकाशरूपतायाः सर्वान् वेद्यान् प्रति सा प्रकाशरूपता भवेदिति सा भेदेन प्रथा सर्वज्ञत्वरूपा भवेत् । न च सर्वे सर्वज्ञाः, असर्वज्ञतायामपि च तिरोहेण प्रथनमस्ति । स्थूलसूक्ष्मरूपस्य अस्य वेद्यवर्गस्य अपूर्वतथाविधप्रथालक्षणनिर्माणविषयतया कार्यशब्दवाच्यस्य भूतसृष्टेर्मोहकरूपाया इदानीं मीमांसावसरः । तदुपयोगिनी एव भावसृष्टिरित्याशयेन आगमोक्तचतुर्विधसृष्टिमध्यात् सृष्टिद्वयमेव टीकाकृता दर्शितम् । एतच्च असर्वज्ञतायां यत् भेदेन प्रथनम्, तदित्थमुपपद्यते—यदि बोधरूपोऽहमिति प्रकाशभागोऽपि कश्चित् सकोचो भवेत्, संकुचितो हि अहमिति प्रकाशभागो नालिकासुषिरसङ्कुचितचाक्षुषप्रकाशवत् नियतप्रकाश इति युक्तम् । तदुक्तम्

'····· अन्यस्त्वहंभावो वेद्येष्वप्याणवो मलः ।'

इति । ननु एव देहादौ प्राक्प्रकाशनेव पतित इति पुनरपि 'प्रा-

**स्वग्राहकताभिन्नौ'** इति सूत्रे ग्राहकपदमसमर्थितमेवेत्याशङ्क्य आह **'वेद्यस्वभावमपिच'** इति। **'तदानीम्'** इति शरीरमिदं कृशमित्याद्यवसरे भवतु उद्भूतवेद्यताकं देहादि, अहं कृशो घटं वेद्मीत्यादिप्रत्यये तु अहमितिसंविदभिषेकरस एव उत्सिक्तावभासः, न ग्राह्यतांशः। ननु एवं कृशादेरपि अवभासादवश्यभाविन्यामिदन्तायां यदि तावदहमित्यनेन रूपेण आच्छादनम्, तदीश्वररूपतैवेति क इवशब्दार्थः। ईश्वरश्च परमार्थप्रमातृतत्त्व एवेति किं ग्राहकपदोपादानेन। अथ न आच्छादनं, तर्हि घटादिवत् ग्राह्यरूपतैवेति पुनरपि किं तेन। तत्र प्रथमां शङ्कां प्राधान्येन परिहरति **'केवलम्'** इत्यादिना **'वेद्यांशेरन्यैव'** इत्यन्तेन। प्रसङ्गतश्च अत्रैव द्वितीयापि परिहृता भवतीति वर्णयिष्यते। **'तत्'** इति वस्तुजातमीश्वरस्य अवभासते। कथमिति। आह **'अन्योन्य'** इत्यादि। त्रीणि अपि क्रियाविशेषणानि अमूनि। एकैकं परस्परस्मादपृथग्भूतं तत एव विश्वमेव पारमार्थिकं रूपमस्येति। एवमपिच अवभासनप्रसादोदितेन वपुषा न विरोधः कश्चित्। **'अत्र तु'** इति मायापदे प्रमात्रन्तरेभ्यः प्रमेयेभ्यश्च यत् भिन्नं प्राणधीशून्यरूपमहन्तावेशेन संवित्स्वातन्त्र्याभिषेकेण प्रत्यगात्मेति परस्परासंकीर्णस्वसंवेदनसंज्ञम्, तत् ग्राहकीभूतं स्वव्यतिरिक्तस्य ग्राह्यस्य घटादेरिति संबन्धः। प्राणादिसंकोचभागित्वाच्च सा संवित् विश्वरूपत्वमसहिष्णुरिति अणुरुच्यते पारिमित्यात्। नच अत्र भगवत इदंप्रथमिका विद्यते ग्राह्यग्राहकयुगलकनिर्माणकारिण्यां मायाशक्ताविति नित्यत्वमस्य उक्तम्। ननु अहन्तावेशेन तत् प्राणादिसंविदि चेत् विलीनीकृतम्, तत् पुनरपि न ततो भावानां भेदः। सत्यं, ननु विलीनीकृतं तत् आत्मीयत्वेन यो भेदो वे-

रात्र, तत्र यो गाढमदस्तस्य अतिरस्कारात्। अनेन पशुलक्षणं स्वीकृतम्। यदुक्तं श्रीकिरणायां

'पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः।
व्यापी मायोदरान्तःस्थो भोगापायविचिन्तकः॥'

इति। अणुत्वादिपाशयोगात् पशुः, अनादित्वात् नित्यः, अहन्तावेशनादमूर्तो व्यापी च, स्वभावतो वेद्यत्वात् ज्ञानक्रियाशून्यः, मायाभूमिपतितः, तत एव अप्रभुः, वेद्यरूपत्वात् सत्त्वादिवेद्यगुणगणोत्तीर्णः, सविद्रूपत्वेऽपि अपूर्णत्वात् भोगलालसाक्रान्तो यतोऽनवरतं पूर्णत्वं काम्यति। एतत् प्रकृते योजयति 'इत्यपरैव' इति। एवमुक्तेन क्रमेण शरीरादौ वेद्यता तादृशी या न ईश्वरवेन्नेऽर्थे, नापि समाविजनवेद्ये घटते, वेद्यता च अपि ईश्वरवेद्यतातिलक्षणा। 'हि' इति यस्मादेवं, तस्मादिदमहमितिभागद्वयस्य अपि ईश्वरनिष्ठात् रूपात् विलक्षणत्य मायाप्रमातरि, तस्मात् ईश्वरस्य इवेति युक्त इवशब्दार्थः। विलीनत्वाभावं स्फुटयति 'तथाहि' इति। यथा यथा हि भावनोपदेशबलात् वेद्यता प्राणादेरपसार्यते, वेद्यकैव निर्भास्यते, तथा तथा सवित्स्वात्मन्द्यधर्मोदयात् खेचरत्वादिसिद्ध्युदयः। शरीरेऽपि यावदेषा वार्ता—यत् घटादि समप्रचारि निर्भासते, निमग्न बुद्धिप्राणादाविति एवकारः। ननु मायाकृतविश्लेषावित्ति यदुक्तं, तेन भगवत एव मायायोगात् मालिन्य स्यात्। नेत्याह 'स्वयम्' इति एवंविधपरमाद्भुतभासने यत् वैभवमप्रतिघातलक्षणमन्तःस्थितमायाराशिप्रविकासनलक्षणविजृम्भासभाररूपं, न तत् मालिन्यमाक्षिपति ऐन्द्रजालिकस्य इव। मालिन्यं हि सविदोऽभीष्टप्रतिघातलक्षणम्, तद्विरुद्धश्च अप्रतिहतस्वेच्छायोग इति स्वभावविरुद्धोपलब्धिः। ननु यदि शरीरादि वेद्यमेव वेदकीक्रियते,

तदा तस्य वेद्यतायां किं वेदकम्। आह '**यदा**' इति। '**तदैव**' इति यत् ग्राहकीकृतं घटादौ ग्राह्ये। '**योगिनः**' इति साक्षात्कारज्ञानेन जिघृक्षतः इति आशयः। समस्तशरीरप्राणधीप्रभृतिभावनिषेधोपाधिसंकुचितं चित्तत्त्वं तस्य प्राणबुद्ध्यादेर्वेदकं भवति। अयं प्राणाद्यभाव इत्यपि साक्षात्कारे तद्वेद्यरूपाभावनिषेधात्मकं शून्यान्तरमेव तदपेक्षया विकसितमिव प्रमात्रीभवति। तत्रापि विकसिततरमित्यादिक्रमेण महाशून्यमागमेषु शून्यातिशून्यशब्दवाच्यं पार्यन्तिकं प्रमातृरूपमुल्लसति। नच अभावस्य अभाव इति भावरूपतैव इयमिति वक्तव्यमभावस्य तुच्छरूपस्य अभावान्तरमपि तुच्छरूपमेवेति हि वक्ष्यते। वेद्यापेक्षया च तुच्छत्वं संविद्रूपं, भित्तिपाताच्च वेदकत्वम्। अत एव शून्यातिशून्यं नाम वेद्यराशिविनिर्मुक्तशुद्धस्वभावसंविद्रूपं चित्स्वसंवेदनसंविदितमिति न अनवस्था। यदुक्तं

> 'तथाहि वेद्यते यद्यत्तन्मध्येऽहं न कश्चन।
> अपित्वेतद्विमुक्तोऽस्मि नच दृश्योऽस्मि तादृशः॥
> इति भावनिषेधोऽहंभावभूस्तत्त्वतः स्थितः।
> तस्य पुर्यष्टकाद्येतद्वेद्यं योगिदृशि स्फुटम्॥
> तत्र भावनिषेधो यः सोऽपि नात्यन्ततुच्छकः।
> अहंसंविदुपारोहात्ततस्तन्मय एव सः॥'

इति। अत एवहि आकाशसमापत्त्यभ्यासे गृहप्राङ्गणारण्यादिप्रदेशविकासतारतम्याभ्यासेन ब्रह्माण्डादिबहिर्भूतपरमाकाशसमापत्तिरिति आगमः।

'बहिरकल्पिता वृत्तिर्महाविदेहा'

इत्यत्र अपि एवैव पराकाशशरीरता पार्यन्तिकी प्राप्यत्वेन उक्ता। क्रमेण वेद्यतायां शरीरस्य प्राणः, तस्य अपि धीः, तस्याः शून्यो

वेदक इति प्रसिद्धोऽसमर्थः इति न उक्त इह; अनुक्रमेण तु सम-
स्तस्य वेद्यत्वे शून्यमेव वेदकम्। ननु योगिनो विगमप्रत्ययाभ्या-
सपूर्वासंप्रज्ञातसमाधिमारूढस्य शक्य देहप्राणादेर्वेद्यतां कर्तुम्,
अयोगी तु शरीरगसुषीर्णं शून्यं जानतोऽपि न शक्तवान्, तत्
कथं तदपेक्षया अस्य वेद्यत्वाशंकायामाह 'अन्येन तु' इति।
न तेन अस्य देहादिगतभावाकारस्य व्यतिरिक्तघटादिवेद्यवर्गम-
ध्यगतया साक्षात्कारः, अपितु अहमिदमित्येव साक्षात्कारः वेद्य-
त्वम्। वेद्यता तु अनेन विकल्प्यते, परं न साक्षात्क्रियते सत्ता-
द्रव्यत्वगुणत्वादिदोषोपाधिविनिर्मुक्तता इव द्रव्यस्य। न च कल्प-
नाया तद्रूपसंपत्तिः प्रतीक्ष्या येन केवलवेद्यतासिद्ध्यै वेदकान्त-
रान्वेषणं भवेत्। मर्त्यलोके जीवन्नेव हि स्वर्गितां कल्पयन्नात्म-
नो न तत्संपत्तिमपेक्षते। तदयं प्रयोगः—विकल्पेन तद्रूपसंपत्ति-
रपेक्ष्या असाक्षात्कारात्मकत्वात्। भावस्वभावानुवर्तिता हि सं-
वेदनस्य साक्षात्काररूपतया व्याप्ता, अन्यथा न कश्चित् साक्षा-
त्कारो भवेत्। तद्विरुद्धं च साक्षात्काररूपत्वमिति व्यापकविरु-
द्धोपलब्धिः। ननु प्राणादौ वेद्ये शुद्धा संविदेव प्रमातृत्वेन उ-
च्यताम्, शून्यमन्तराले किमिति कल्प्यते। अथापि अस्यैवं यो-
गिनः प्रतिपत्तिः

'यद्यद्विकल्प्यते किंचिन्न तत्तद्रूपम्।'

इति। सोऽयमात्मा नेति नेति च नीत्या सर्ववेद्यविमुक्तं यत्, त-
दहमिति यथा संसारिणः कृशोऽहं दुःखितोऽहं सुख्यहमिति। तत्
कः कल्पनार्थः इत्युच्यते, तथापि शरीरादेर्युगपत् योगिना वेदने
शून्यान्तरेण क्रमान्तरालितेन। अत्र आह 'अन्यथा' इति यदि
शून्यं न वेदकं स्यात् तत् महाप्रकाशात न किंचित् व्यतिरिक्तं
प्रकाशेत अप्रकाशनप्रसङ्गादिति व्यतिरेकजीविता वेद्यतैव कथं

निर्वहेत्। ननु यदा अनुग्रहार्थं परमेश्वरः स्वयमेव आत्मानं शिष्येभ्य उपदिशति अहमेव भवतामात्मेति, तदा भगवति वेदके किमन्यत् वेद्यं स्यात्। उच्यते **'यदापि'** इति। **'तत्'** इति स्वरूपम्। **'ईश्वरतया प्रकाशतया वा'** इति वाग्रहणेन इदमाह—न खलु अविभागं शुद्धसंविद्रूपं वेद्यीभावमभ्येति, किन्तु अतद्रूपव्यावृत्त्या जानन्निति अपूर्वाभासतया सृजनीयं निर्मितवानेकधर्ममुखेन रूपम्। तदेव परामृशन् भगवाननुशास्ति शिष्यान्—एष ईश्वरो मद्रूपो भवतामात्मेति,न पुनः साक्षात् वेदकरूपम्। तत्र अपि उपदेष्टृतया स्थितं स्वप्रकाशं यत्, तदेव शिष्यान् प्रति तेन आत्मतया अनुशासनीयमुपदेश्यं युक्तं यथ शरीरादि वेद्यमात्मतया उपदेष्टुं युक्तमिति वैधर्म्यदृष्टान्तः। यदाहुः सिद्धापादाः

'अतीतः पन्थानं तव स महिमा वाङ्मनसयो–
रतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि।'

इति। **'तदेव'** इत्यत्र **'तदैवम्'** इति अन्येषां पाठः। स आत्माभासो निर्मितः सन् न शरीरादिवत् सर्वप्रमातृसाधारणो वेद्यः, अपितु संवेदने परामर्शे च उपदेशकोपदेश्ययोः परं परिस्फुरति, नतु बहिरित्यर्थः। शरीरादिवदित्यस्य एवमुक्तेन नयेन वेदकरूपं स्वप्रकाशमिति। ननु एवमात्मीयं भगवता रूपं शिष्याणामात्मत्वेन न उपदिष्टं तावत्, अपितु निर्मितः कश्चिदाभासः इति। आह **'परामर्शैक्यात् च'** इति। **'तदपि'** इति यदाभासात्मकं स्वरूपमुक्तं, तत्। **'तदेव'** इति परमेश्वरस्वरूपमेव, न अधिकमिति वक्ष्यते

'स्वातन्त्र्यामुक्तमात्मानं··················।' (१।५।१६)

इत्यत्र। आभासस्य तदिदितिस्वरूपेण मिलितस्य पूर्वमभिधानमित्या-

शयेन 'तदपि' इति नपुंसकता युक्ता । यत्पुनरप्रमेयान्तरिवं सूत्रार्थतत्त्वं शिष्यबुद्धिसमाधये निगमयति 'तदेवम्' इति । घटादेः शरीरादेः स्वरूपस्य च वेद्यता साक्षात्कार्यविकल्पनीयादिरूपेण विचित्रा उक्ता मायाप्रमातुः, योगिनः ईश्वरस्य भगवत्परमशिवस्य च विचित्रा ग्राहकता उक्ता । तदेतत् ग्राह्यग्राहकयुगलकमनन्तावान्तरभेदभेदित परमप्रकाशरूपे भगवति भाति तद्रूपेण प्रकाशमानत्वात् महादर्पण इव परिगृहीतप्रतिबिम्ब दर्पणवैश्वरूप्यमिति स्वभावहेतुः । तद्रूपेण प्रकाशमानस्य हि यदि अतन्मये स्यात्, तदनियतं भवेत्, घटोऽपि पटतया प्रकाशेतेति व्यापकनियमविरुद्धानियमप्रसङ्गात् तद्रूपेण प्रकाशमानत्व विपक्षादतन्मयत्वात् व्यावृत्तं तन्मयत्वेन व्याप्यते इति व्याप्यसिद्धिः ॥ ८ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां स्मृतिशक्तिविमर्शश्चतुर्थः ॥ ४ ॥



## अथ पञ्चमो विमर्शः ।

यदनुत्तरसम्बोधादानन्दविकस्वरेच्छया पूर्णम् ।
ईश्वरमुन्मिपदमृतौघसुन्दरं तत्स्तुवे धाम ॥

एवं स्मृतिशक्तिं तत्प्रसङ्गेन च विकल्पवृत्तान्तं विमृश्य, तदुभयोपजीवनीयज्ञानशक्तिविमर्शं

'वर्तमानाभासानां·············· ।'

इत्याद्यया

'··············सक्रमं प्रतिभासते ।'

इत्यन्तया श्लोकैकविंशत्या वितत्य विमृशति । तत्र एवंभूता ज्ञानशक्तिरिति श्लोकेन प्रतिजानीते । द्वयेन प्रकाश एव अर्थानां स्वरूपमित्याह । प्रकाशबाह्यानामर्थानां विज्ञानवादोक्तदूषणेन दृढीकृतं सद्भावं द्वयेन आशङ्क्य एकेन तदनुपगमे तावत् न किञ्चिदुपरुध्यते इति कथयति । स्वदर्शने अर्थतत्त्वमुपदर्शयन् बाह्ये अर्थे प्रत्यक्षं प्रतिक्षिपति एकेन, द्वयेन अनुमानम् । परामर्शात्मना अर्थानां चिदात्मनि अवश्यंभाव इति एकेन आह । प्रमातृरूपस्य प्रकाशस्य विमर्श एव सारमिति अनुभवागमन्यायस्वरूपनिरूपणया चतुष्केन आह, ज्ञानपरामर्श एव ज्ञेयं शुद्धमनुज्झितप्रमातृभावं प्रथयतीति त्रयेण, प्रकाशैकरूपतायामपि ज्ञानज्ञात्रादिविभागमेकेन, ज्ञातरि इव विशुद्धे ज्ञानेऽपि अविकल्पकसविकल्पकताजुषि जीवितं विमर्श एवेति द्वयेन, ज्ञातृज्ञानयोर्भिन्नत्वं दूषितं यत् पूर्वपक्षे, तदेकेन समर्थयते उपसंहारदिशा,—इति तात्पर्यम् ।

वर्तमानावभासानां भावानामवभासनम् ।
अन्तःस्थितवतामेव घटते बहिरात्मना ॥ १ ॥

स्मरणविकल्पयोस्तावत् न अर्थः सर्वप्रमातृसाधारणो भेदेन भाति । यत्र अपि तथा प्रत्यक्षरूपे अनुभवे,तत्र अपि अनुभवादन-

तिरेकी असौ, यत्तु कथा तदुपजीविनि स्मरणादौ,—इति वृत्त्यपिशब्दो यावच्छन्दश्च सूत्रशेषत्वेन पठितः। सूत्रार्थस्तु—वर्तमानत्वेन स्फुटतया इदमित्येवमाकारमवभासनं येषां ते **'बहिरात्मना'** शून्यादिमायाप्रमातृपृथग्भावेन भिन्नाः,ततो मायाप्रमातुर्विच्छिन्नाः, तेषां तथाविधमपि यदवच्छिन्नतया भासनं, तत् **'अन्तःस्थितवतामेव'** शुद्धचिदात्मकपरमार्थप्रमातृतत्त्वतादात्म्यमनुज्झता **'घटते'** युज्यते प्रमाणेन। अत्यन्तसंविद्भेदस्यैव भावस्य कल्पितप्रमात्रपेक्षया विच्छेदेन यत् प्रकाशनं, सा भगवतो ज्ञानशक्तिरिति यावत्। **'इदानीम्'** इति प्रकारान्तरत्वं स्फुटयति। शिष्टं वृत्तिविवृत्योः स्पष्टम् ॥ १ ॥

**'सूचिता'** इति यदुपजीवनेन उक्तं टीकाकृता, तत् सूत्रमवतारयति

प्रागिवार्थोऽप्रकाशः स्यात्प्रकाशात्मतया विना ।

न च प्रकाशो भिन्नः स्यादात्मार्थस्य प्रकाशता ॥ २ ॥

**'प्रकाशरूपतया विना'** इति प्रकाशात् न भिन्नोऽर्थः प्रकाशमानो युक्तः, प्रकाशमानात् च अर्थात् न भिन्नः प्रकाशो युक्त इति उभयतोयुक्तमर्थप्रकाशयोर्भेदमपसारयन्, प्रथममर्धं सक्षेपेण व्याचष्टे—यथा ज्ञानानुदये नील सर्वान्प्रति नीलं न कंचित् वा प्रति, अपितु स्वात्मनि, स्वात्मनि अपिवा तत् न किंचित्, तद्वदेव ज्ञानेऽपि उदिते स्यात्, नतु प्रकाशेत 'मम इदं नीलम्' इति, **'स्यात्'** इति प्रकाशतादात्म्यमस्य पूर्ववदेव न भवेदिति—**'अनुभवरूपतैव'** इत्यादिना द्वितीयम्। यत एव पूर्ववदप्रकाशता स्यात्, तस्मात् प्रकाशमानता नाम अर्थस्य न भिन्ना। तत एवमायातं—प्रकाश एव अर्थस्य आत्मा। तथाच वृत्तिः—स्वरूपभूतो यः प्रकाशः सोऽर्थस्य प्रकाशमानता, नतु तस्मादर्थात् भिन्नः सन्

प्रकाशः, सोऽर्थस्य प्रकाशमानता युक्तेति । यदिवा **'प्रसङ्गात्'** इत्यन्तेन प्रथमार्धावतारणं **'अर्थाच्च'** इत्यादिना तृतीयपादार्थसंक्षेपाभिधानम् । अयं च अर्थः—अर्थशरीरविश्रान्त एव प्रकाशोऽस्तु अर्थवत् भिन्नस्वभाव इत्याशंकायामाह **'नच प्रकाशो भिन्नः स्यात्'** । अर्थशरीरत्वे च अर्थवदस्य भेदः प्राप्नोति, नच स युक्तोऽनुसन्धानाभावप्रसङ्गात् । एतत् व्याचष्टे **'अर्थाच्च'** इति । अर्थ एव चेत् प्रकाशमानतात्मा, तर्हि ततो हेतोः प्रकाशस्य स्वात्मनि भेदः प्राप्नोति, यदिवा तमवलम्ब्य वर्तमानो यः प्रकाशस्तस्य संबन्धि यत् स्वरूपं, तस्य भेदः प्राप्नोति । नच असौ युक्तः । तस्मादर्थस्य प्रकाशमानता नाम आत्मा परमार्थरूपं, नतु भिन्नः कश्चिदर्थः । अर्थस्य च प्रकाशमानता अनुभवरूपता आत्मा, नतु प्रकाशमानताया अर्थात्मता,—इति । अत्र पक्षे वृत्तिरेवं नेतव्या—अर्थस्य या प्रकाशमानता, सा प्रकाशोऽनुभवः; नतु असौ प्रकाशमानतात्मा प्रकाशोऽर्थस्य स्वरूपभूतोऽर्थशरीरमग्नः । तथाहि सति अर्थभेदात् भिन्नः स्यात्, नच तथा युक्तः । नतु घटस्य घटतैव स्वरूपं, तत् ज्ञानोदये पूर्वमपि; तत् का अन्या अस्य प्रकाशमानतेत्याशंक्य आह **'घटस्य'** इति **'न कंचन'** इति । एतद्धि वस्तुतत्त्वं परस्य परनिष्ठायोगात्, पूर्वं तु संभावनया कृत्वा चिन्तामपेक्ष्य उक्तं 'सर्वान्प्रति समसुपयोगात्' इति । उपयोगोऽपि हि प्रकाशमानतायत्तः, नतु घटतामात्राधीनः । नतु इन्द्रियादिक्षणान्तरसहकृतादुपादानात् घटक्षणात् प्रकाशमानघटरूपो विशिष्टः क्षणो जातः, तदस्यैव प्रागवस्थातो विज्ञानोदयकाले विशेषः; नतु स्थिरपदार्थवादिनामिव अस्माकं स एव असौ घट इत्याशंकायां ब्रूते **'अथापि'** इति । **'प्रमातुः'** इति । ततो हि इन्द्रियादिसामग्रीतो घटे

विशेषो जातः प्रकाशमानता आलोकादपिच। आलोकेऽपिच घटादेव आयरूपविलक्षणता। घटालोकादेश्च प्रमातृसन्ताने ज्ञानोदयः। तत्र च यथा स ज्ञानोदयो न घटं प्रति, नच घटआलोकं प्रति तुल्येऽपि कारणत्वे एकसामग्र्यधीनतायां वा व्यवहार्यतामेति स्वरूपस्य स्वनिष्ठत्वात्, तथा सोऽपि घटगतो विशेषः प्रकाशमानताख्यो न प्रमातारं प्रति व्यवहार्यः स्यात्। यत् यस्य स्वरूपं, तत् न अन्यनिष्ठं नीलस्य इव पीतनिष्ठम्, तथाच प्रकाशमानता घटस्येति न प्रमातृनिष्ठा। अन्यनिष्ठत्वे स्वरूपता न उपपद्यते विरुद्धधर्माध्यासप्रसङ्गात्। अन्यनिष्ठता हि अन्यतादात्म्यं, स्वरूपता न अन्यतादात्म्यमिति स्वभावविरुद्धोपलब्धिः। एतत्प्रयोगसूचनार्थमेव अर्थलब्धमपि स्वकण्ठेन कथयति **'न स्यादेव'** इति। अथ स्वरूपनिष्ठैव विकल्पानामप्रतिहतप्रसरत्वादेव व्यवह्रियते, तर्हि नियमानुपपत्तिः

'यत्र स्वातन्त्र्यमिच्छाया…………… …।'

इति न्यायात्। एतत् दर्शयति **'सर्वप्रमातॄणां वा'** इति। ननु यमेव इन्द्रियादितथाभूतघटताविशेषप्रकाशमानता उदये निदानता प्रतिपद्यते, तमेव प्रमातारं प्रति तथा व्यवह्रियते इति सिद्धो नियमः। एतत् दूषयति **'नहि'** इति। **'उपयोगाय'** इति न घटता कुलालमेव प्रति अस्येति भावः। ननु कारणेन तावत् कार्यस्य सबन्धो दृष्टो बीजस्य अङ्कुरः, कुलालस्य घट इति, तद्वदेव चैत्रस्य घटः प्रकाशमान इति भविष्यति। एतावत् तु इह साध्यम्, तच्च सिद्धम्। तत् कोऽन्य उपयोगो नामेत्याशयेन शङ्कते **'अथापि'** इति। एतत् न सहते **'न युक्तम्'** इति। एतावता तत्कृता प्रकाशमानता घटस्येति उक्तम्।

सा यथा बीजकृता अङ्कुरता, कुलालकृता च घटता; नतु सा अङ्कुरता घटता च स्वार्थक्रियाकालव्यवह्रियमाणा कारणकलां भित्तित्वेन उपादाय व्यवह्रियते कारणनिर्भासनापेक्षयैव अङ्कुरादिस्वरूपव्यवहारात् । प्रकाशमानता तु ममेति चैत्रस्येति च भित्तिभूतं प्रमातारमवलम्ब्य नियमेन व्यवह्रियते । यदिदं तल्लग्नत्वेन नियतं व्यवहरणं, तत् तादात्म्यमानयति घटप्रतिबिम्बस्य इव दर्पणलग्नत्वेन । तादात्म्यं हि तद्रूपत्वं, स्वनिष्ठत्वं च अतद्रूपत्वमिति स्वान्यरूपद्वयं भावस्य कथं स्यात् । प्रथनं हि घटप्रकाशमानतायाः प्रमातृतादात्म्यमानयति नियमेन तल्लग्नतया प्रथमानत्वात् । घटतादात्म्यं च अस्याः स्वभाव इति तमतिक्रम्य कथं प्रथनं स्यात् । अर्थक्रिया अपि प्रथमानैव तथा भवति,—इति तत्रापि अयमेव विधिरिति अर्थक्रियया अपि न बाह्यता सिद्ध्यति धर्मोत्तरदृशेति वक्तुं **'पर्यवसितार्थः'** इति अर्थपदम् । तदाह भट्टः

'प्रकाशेनाविनाभूतैः सत्तायां नियतात्मभिः ।
धर्मैर्भावः पृथग्भावो न बाह्यसिद्धिमृच्छति' ॥

इति । नहि कचिदपि सा प्रकाशमानता भित्तिभावेन अनवलम्बमाना प्रमातरं प्रथमाना दृष्टा येन तत्र सत्त्वभावमवस्थाप्य तत्र अनैकान्ततां ब्रूयाम नामेत्याशयेन आह **'अन्यथास्वभावं च'** इति । ननु प्रमाणसिद्धभेदो बाह्योऽर्थः परमाणुसंचयमात्रस्वभाव इव । स प्रथया व्यवह्रियमाणोऽन्यलग्नत्वेन भ्रान्त्या निर्भासतां स्थूलरूप इव । तत् को विरोध इति परमतमाशंक्य आह **'प्रकाशस्य'** इति । भ्रान्तिर्नाम प्रकाशमानता वस्त्वनुमानानाचरणेति, नतु अन्यत् । सा च प्रमातृभित्तिलग्नत्वेन, तच्च न किंचिदिति संवेदनमार्गोऽपि न उपपद्यते । भ्रान्तौ च सोऽभ्रा-

न्ततया अयमप्यसमर्थनीयोऽर्थांशे भ्रान्तित्वोपगमात्। संवेदनस्य अपि असत्त्वे भ्रान्तिरिति पाषाणता स्यात्। एतद्व्याख्यानुसारेण शुक्लशङ्खोऽप्रथमान एव इति नञं पठति आचार्यः। यदि न काचित् प्रथा भजते, तत् सितशङ्खः पीतत्वेन प्रथते इति निःसारोक्तिः। यदितु 'प्रकाश्यस्य प्रकाशात्मभावः' इत्यत्र प्रमाणसिद्ध इति अध्याह्रियते तदा नञ् प्रपठ्यते। एवच योजना—इह परेण प्रमाणसिद्धभेद इति यदुक्तम्, तत्र प्रमाणं प्रकाश एव। ततश्च यदि भेदः सिद्धः, भ्रान्त्या तु अन्यत्वमवाच्यव्यवहारस्तदा इदमुक्तं भवति—प्रकाशात् भिन्नः सिद्धः, ततो भिन्नत्वेन प्रकाशमानसंवेदनतो भ्रमवशात् संवेदनतादात्म्येन तत्स्वतया ममेति प्रकाशते इति। नच एतत् युक्तमेकस्यामेव प्रवृत्तौ तदतद्रूपनिर्भासनयोरयोगात्। नहि भवति शुक्लशङ्ख एव भासमानः पीतो भासते इति। एवं प्रकाशमानतया प्रकाशात् भेदानुपपत्तिमुक्त्वा आशयशुद्धिरूपेण वस्तुपरिशुद्धिप्राधान्येन वादरूपतां शास्त्रकथायाः प्रकटयन् तर्कं तावदुत्थापयति संशयोत्थापनदिशा 'तदेतदेवम्' इति। यतोऽन्यथा न उपपद्यते, तत् तस्मादेवमिति भ्रान्त्या भेदेन प्रकाशमानत्वमेवमिति वक्ष्यमाणनयेन भवति,—इति संभाव्यते। तत् वक्ष्यमाणमाह 'यदि घट एव' इति। न अन्यः कश्चित् प्रकाशः इति एवकारः। एवं वाग्ग्रहणानीत एवकारार्थो न अन्यः कश्चित् घट इति संभावनायां बीजमादर्शयति 'एवमेकस्य' इति। तदेव तदेव संवेदनबलेन प्रकाशात् भिन्नमभिन्नं चेति यो विरोध उक्तः, स तावत् न भवति प्रकाशघटयोर्भेदाभावात्। भेदस्य च प्रथनमभेदेऽपि घटते। शिलापुत्रकैकस्वरूपोपलम्भेऽपि हि विकल्पबलात् भवति भेदाभिमानः अस्य इदं शरीरमिति, केवल बुद्धिपूर्वकतायां व्यवहारो

रोपणादिव्यवहारः, अबुद्धिपूर्वकत्वे भ्रान्तताव्यवहार इति सर्वं दर्शयति '**अयथावस्तु**' इति। अत्र हेतुमाह '**तत्रापि**' इति। '**प्रथेत**' इति हेतौ लिङ्। पक्षद्वयेऽपिहि घटमयी संवित्, संविन्मयो घट इति च परमार्थो घटस्य संवित् संविदो घट इति विषयिविषयतारूपो यो भेदः, तस्य मौलिकाभेदबाधेन प्रथनायोगात्। शिलापुत्रकस्य शरीरमिति व्यतिरेकप्रथा न अव्यतिरेकप्रथां बाधते। बाधकत्वे हि तदुन्मूलकत्वं कारणं, तस्य विरुद्धं तदनुन्मूलकत्वम्। तेन व्याप्तं तन्मूलतया तद्व्यवहाररूपत्वं, तेन स्वव्यापकविरुद्धकार्यस्य अभावः साध्यते इति कारणविरुद्धव्याप्तोपलब्धिः। '**तत्**' इति उक्तपूर्वात् हेतोः। '**एवम्**' इति संविद्घटयोरवश्याङ्गीकार्ये भेदे सति। तस्य तु उभयतोमुखत्वसंभवात् संदेहे पक्षान्तरनिराकरणमात्रं कर्तव्यम्। तदपिच मायाप्रमातॄन् प्रत्याययितुम्। वस्तुतः पुनर्घटः संवित्, संविद्घट इति न अत्र भेदः कश्चिदिति दर्शितमादिसिद्धसूत्रे

'यो मां पश्यति ....................।' (भ० गी० ६।३१)

इत्यादिना। मायाप्रमातारस्तु उपदेश्या इदमिति भेदावमहात् घटमेव परितः परिच्छिन्नं न तावदभिमन्यन्ते, जडं च जडत्वादेव प्रकाशरूपतया प्रथममसिद्धत्वादनूद्यमानत्वपदासहिष्णुं च अन्याकांक्षत्वेन अपूर्णं च; तदभिन्ना च संविदेभ्य उपदिश्येत, तामपि तथाविधामेव परिच्छिन्नत्वेन अपरपटादिसंविदनुसन्धानवन्ध्यां जडां संविद्रूपत्वादिविधिभित्तिभावभाजनभूतामन्याकांक्षत्वेन इदमितिभासनयोग्यामेव च अभिसन्दधीरन्। एतद्विपरीतं च अस्यास्तत्त्वमिति यथा तदीयः परमार्थो हृदये प्रविशति विपरीतः, तथा उपदेष्टव्यम्। यथा वृक्षत्वशिंशपात्वयोः परमार्थतः समव्याप्तिकत्वेऽपि व्यवहारयोग्यत्वे

शिंशपात्वं व्याप्यमुपदिश्यते, न व्यापकमवृक्षव्यावृत्तेर्वृक्षत्व-सामान्यस्य वा धवादिषु अपि व्यवहार्यत्वात्। तत्र उपदेश्य-जनानुसारेण प्रथमतः संवित्तत्त्वं भगवता शिवरूपं येषुचिदा-गमेषु सर्वोत्तीर्णताप्राधान्येन, अपरेषु सर्वमयतास्वीकारेण, अन्येषु उभयरूपविस्फारणाय उपदिष्टम्। तत्र प्राथमकल्पिके इह उपदेश्ये सविन्मुखेन आदावद्वयमुपदेश्यमित्याशयेन तावच्छ-ब्दोऽक्रममेतदुक्तम्। 'अस्तु' इति प्राथमकल्पिकत्वमेव अभि-धातुं प्राप्तकालताया लोट्। 'तदा च' इति संविद एव घटा-द्युत्तीर्णाया दर्पणदशा घटाद्यनन्तरूपस्वीकारिताधिकरणदशायां द्वैतोक्तस्य विरोधस्य परिहारस्तावत् पूर्वमेव कृत इति सप्तम्या सूच-यति। घटमुखेन अद्वयोक्तौ च यो दोषः संभावितः, सोऽपि न इह अवतरतीत्याह 'प्रमेयान्तर' इति। घटादिप्राधान्ये वा अद्वयं यः समर्थयते, तस्य तावत् प्रमेयान्तरेषु प्रमात्रन्तराणि विश्वस्पकाविकल्पकसविद्रूपाणि बहूनि यानि अस्मन्मते एकस्य प्रमातुर्वैयोपरागयोगोपचारव्लपितानि ज्ञानानि तेषां यदनुसन्धानं स एव अहं घटादीन् वेद्मि स एव घटादीनिति, चैत्रमैत्रादि-प्रमात्रन्तरैरपि सह यदनुसन्धानं निष्पन्ननिष्कम्पविज्ञानशालिनो यथोक्तं श्रीपरमेष्ठिपादैः

- 'पूजनान्नास्ति मे तुष्टिर्नास्ति खेदो ह्यपूजनात्।
- पूजकैरविभेदेन सदा पूजेति पूजनम्॥' (शि०दृ० ७।९२)

इति, श्रीपरमगुरुपादैरपि

- 'यथावस्थितपदार्थदर्शनं ………।' (उ० स्तो० १३।७)

इति, भगवतापि

'कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स योगी कृत्स्नकर्मकृत्॥'(भ.गी.४।१८)

इति; सर्वकर्मैककर्तृत्वं समस्तकर्मपाशनिकर्तनसामर्थ्यं च प्रमेयविशेषैश्च सह प्रमातृविशेषस्य पूर्वसिद्धस्य यदनुसन्धानम्—अहं नीलं वेद्मीति; प्रमेयस्य प्रमेयान्तरेण सामानाधिकरण्येतररूपं बहुप्रकारं यदनुसन्धानं कपित्थं नीलं, मधुरं, घटेन उदकमित्यादि च; तत् सर्वमुपपद्यते अजडत्वादेकरूपत्वात्, पूर्वसिद्धत्वाच्च । प्रकाशरूपतानान्तरीयकमियत्सर्वमिति दर्शयितुं भित्तित्वेन धर्मितया प्रकाशः षष्ठ्या दर्शितः । **'सर्वदा सिद्धत्वात्'** इति वेद्यानपेक्षत्वेन नैराकाङ्क्ष्यादिति यावत् । **'आगूर्य'** इति हृदयेन धक्कुमुद्यम्य । प्रमातृशब्देन हि प्रकाशस्य विशेषणेन ज्ञानातिरिक्तस्वतन्त्ररूपाभिधानात् सर्वमेतत् स्वीकृतं भवति । गीताश्लोकपादे सप्तम्यावनन्यत्रभावाख्यां विषयतामाहतुः । उपदेशदशायामेव च इत्थं भर इति दर्शयति **'प्रकाशात्मनोऽपि च'** इति । परमार्थतोऽपि हि घटो नाम कोऽन्योऽस्ति । तत उभयमुखत्वं यदद्वयस्य शंक्यते, तत् कथम् । प्रकाशस्यैव भावे क उभयार्थः । तथाहि **'प्रागिव'** इति **'यथादाविव'** इति **'पूर्वाकारविलक्षण'** इति च यदुच्यते, तत्र किमप्रकाशात्मना कश्चित् घटो भातीति कृत्वा चिन्तामात्रमेतत् । ननु **'प्रकाशमानता स्वरूपभूता घटस्य'** इति वृत्तौ किमेतत् । घटो हि धर्मी, सा तस्य धर्मः । तदेतत् परिहरति **'धर्मान्तर'** इति । एतच्च

'तेनैक्यं भिन्नकालानां………… ।' (१।४।३)

इत्यत्र व्याख्यातम् । ननु अप्रकाशात्मैव प्रकाशसम्बन्धात् प्रकाशते । आह **'स्वरूपेणैव'** इति । प्रकाशते इति हि यदुच्यते, तेन चेदनाविष्टोऽर्थः, तदप्रकाशमान एव प्रकाश्यते । एतच्च उच्यमानमेव न्यपाकरम् । श्वेतगुणेन हि समवाय एतदर्थमेव अङ्गीकृतो येन श्वेतस्वरूपीकरणमेव प्रासादस्य अन्यथा श्वेतगुणोऽत्र

प्रासादे न श्वेते, न अश्वेते एवया स्थित इति समवाय-यत्नादाधाराधेयतामात्रं प्रतीयेत घटचैत्रयत्। ननु श्वेतगुणः प्रासादे तावत् समवैति, ततस्तत्र अभेदपर्यन्तता उन्यताम्; प्रकाशस्तु ज्ञानात्मा न अर्थे समवैति, अपितु आत्मनि। हन्त तर्हि प्रकृतमपि भग्नम्। प्रकाशसम्बन्धाभावे हि अर्थः कथं प्रकाशते। ननु तस्य ज्ञानमेव प्रकाश इति उक्तम्। तर्हि स प्रकाशते अर्थ इति। एतत् ज्ञानम्, एतच आत्मनि,—इति उक्ते अर्थज्ञानात्मनामैक्यमेव दर्शितं स्यादिति उक्तं प्राक्। ननु अस्मदर्थरूपात् प्रकाशात् प्रमातृस्वभावात् व्यतिरेकेण अर्थस्य प्रथायां मम घटः प्रकाशते इति, नतु अहं घटः प्रकाशे इति। सत्यम्, अस्ति इयं भेदेन प्रथा, सा तु शरीरादेः कल्पितप्रमातुः कृशादिगुणविशिष्टत्वादविग-लितवेद्यभावस्यैव, यस्य अधिकः प्रमातृभाव आरोपितो माया-शक्त्या। कीदृक्। अर्थानां नीलादीनां या विभागेन विशेषेण च अवस्थितयोऽवस्थानानि, तेषां या निष्ठा निराकाङ्क्षा विश्रान्ति-स्तस्या व्यतिरिक्ताया अभावादनाक्षदमपि सदासपन्तीं भित्ति-भूततां प्राप्तो यः प्रकाशः,स एव प्रकृतं रूप यस्य प्रमातृभावस्य, स तादृक्। ननु शरीराद्यसंकुचितात् परमार्थप्रकाशादप्रका-शांशकृशादिशवलीभावशून्यात् भेदेन प्रथा घटादेः। अत्र हेतुः **'अप्रकाशता'** इति ॥ २ ॥

एवं तावत् व्यतिरिक्तं ज्ञानमर्थस्य प्रकाशमानतेति असंग-तोऽयमर्थः, भवतु वा, व्यतिरेके तु अभ्युपगम्यमाने विषयाणां च स्वरूपसांकर्यप्रसंग इति दर्शयति सूत्रेण

> भिन्ने प्रकाशे चाभिन्ने संकरो विषयस्य तत्।
> प्रकाशात्मा प्रकाश्योऽर्थो नाप्रकाशश्च सिद्ध्यति ॥ ३ ॥

अभिन्नः सन् बोधमात्ररूपो यः प्रकाशः, सोऽर्थानां न कश्चित्

भिन्नत्वेन परस्य परनिष्ठत्वायोगात् । तथाच सति प्रकाशबलेन या नीलादीनां तत्स्वरूपारूपणायाः सामर्थ्यम् ,ततो नीलः प्रकाशः,पीतः प्रकाशः इति । अत्र सर्वपदार्थानुप्रवेशनात् प्रकाश इत्येतावन्मात्रमभिन्नं तत्त्वमवशिष्यते । प्रकाशबलाच्च नीलपीतयोर्भेदोऽभ्युपगन्तव्यः । सच प्रकाश उभयत्र अपि अभिन्नस्तुल्यः । तदनुग्रहात् यदि नीलं तत्, पीतं न कस्मात्, न वा नीलं, नापि पीतम् । तद्पिच न व्यवतिष्ठेत । अनेकान्तवादोऽपि नच प्रतिष्ठामधिगच्छेत् । एकज्ञानज्ञेयस्फुटत्वादेः स्मृत्यादेश्च न व्यवस्था स्यादिति बहुशास्त्रः संकरः । तस्मात् प्रकाशस्य यदि न परनिष्ठता, तथापि संकर इति चकारः । **'तत्'** इति यत एवं प्रकाशे अर्थात् भिन्ने संकरः प्रसज्यते । नच असौ तथा । तस्मादर्थात् प्रकाशमानादभिन्न एव प्रकाशः । भिन्नत्वे हि बाधकप्रमाणं विपर्ययोगेन पाटवादिना स्मरणदिशा च विषयसंकीर्णतापत्तिः । तद्विरुद्धं च विषयासंकीर्णत्वमुपलभ्यते,—इति व्यापकविरुद्धोपलब्ध्या भिन्नत्वमर्थात् प्रकाशस्य प्रतिषिध्यते । ननु एवमर्थ एव नीलादिरस्तु, किं ततो भिन्नस्वभावेन स्वरूपाभिन्नेन प्रकाशनाम्ना बोधेन विषयसंकीर्णतात्मकदोषापादकेन अङ्गीकृतेन । आह **'नाप्रकाशश्च'** इति । चः पूर्वपक्षसूचनाय । एतदुक्तं भवति—अप्रकाशस्य जडस्य स्वात्मनि न काचित् सिद्धिः । उक्तं हि—प्राक् नीलं यदि स्वात्मनि अनीलं, नवा अन्यत् किंचित्; तत् किं दुष्येत् । तथाच अजडप्रमातृसिद्धिः

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी ।
जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः ॥' ( १३ )

इति । तस्मात् प्रकाशरूपात् बोधादभिन्न एव अर्थः इति सूत्रार्थः । वृत्तौ मात्रशब्देन अभिन्नत्वमात्रं व्याख्यातम्, सर्वार्थसाधारणत्वेन संकरशंकायाः पीठबन्धः कृतः । **'तस्य'** इति प्रकाशमात्रस्य

'विषयनियमो निर्निबन्धनः' न केनचित् हेतुना उपपद्यते इति संबन्धः । विषयनियमस्य आकारं दर्शयति 'घटस्य' इत्यादिना । तृतीयपादस्य अर्थं प्रकाशात्मताशब्देन वृत्तौ व्याचष्टे 'अर्थस्य सिद्धिः' इति । 'तत्' इति व्याख्यातं 'तस्मात्' इत्यनेन । विवृतिकार एवमर्थं संक्षेपेण निरूपणाय अवतारयति 'प्रकाशमाननैव' इति । अनेन अन्त्यमर्धं श्लोकस्य पूर्वमवतारितमभीष्टत्वादस्य इह वस्तुनः, तदुपायत्वेन तु पूर्वमर्धं संक्षिप्तं व्याख्याय पश्चादवतारितम् । तत्र च 'अर्थात्' इत्यादिना प्रथमश्लोकार्धस्य आद्यमर्धं व्याचष्टे । 'प्रकाशस्य' इति नीलाद्याकारशून्यस्येत्यनेन अभिन्नपदं व्याख्यातम् 'स्वात्ममात्र' इत्यादिना तु भिन्नपदं 'विषयापेक्षया' इत्यादिना सकरपदम् । स्वात्ममात्रपर्यवसानं यदुक्तं ज्ञानस्य, तत् न सहते परः । स्वपरप्रकाशरूपं हि ज्ञानम् । अन्यथा जडादस्य को भेदः । तथाह 'आत्मानात्म' इति 'एवंरूपः' इति । स्वपरप्रकाशरूप यस्य आत्मनो ज्ञानीयस्य स्वभावस्य, तस्य यत् प्रकाशनं, ननु अन्या परनिष्ठता संवेदनस्य काचित् येन सा स्वपरयोर्भेदात् विरोधमुत्थापयेत् । एतत् दूषयति 'तत् न' इति । यदिहि परसंमतोऽपि नीलादिरादर्शप्रतिच्छन्दकच्छद्मना स्वरूपमत्र संवेदने न समर्पयेत, तद्विरोधो दुरपसार एव आत्मानात्मनोर्विरोधे तत्प्रकाशत्वस्य भिन्नस्वभावतापत्तेरवश्यंभावात् । तथाच विनिश्चयो न तदित्यादि । एतद्धि

'सहोपलम्भनियमादभेदो नीलतद्धियोः ।'

इति विज्ञानाकारमात्रं नीलादि प्रसाधयितुं निरूपितम् । संवेदनमित्यपि तस्य तादात्म्यात् तथा प्रथनं, ननु तत् संवेदनं नाम संवेदनादन्यस्य व्यतिरिक्तस्य कस्यचिदुपपद्यते इति ।

एवं प्रथममर्थं सर्वथा परनिष्ठत्वानुपपत्तिलक्षणं संकरसिद्धये व्याख्याय निर्निबन्धने परनिष्ठत्वे अभ्युपगम्यमाने विशेषाभावात् सर्वस्य परनिष्ठतापत्तौ नियतपरनिष्ठताकृतस्य असंकरस्य पुनरपि अनुपपत्तिरित्येवंभूतमर्थमपरं व्याकरोति **'भवतु वा'** इत्यादिना । ततश्च साकारताकृत एव नियमः । यथाह -

'तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते ॥'

इति । तस्मात् नीलाकारोऽपृथग्भूतो बोधादिति भावः । तदाकारतया अपि विना तत्र तत्र नियते नीले पीते वा कर्मणि या विशिष्टत्वेन बोधस्य अवस्थानरूपा प्रतिकर्म व्यवस्था नियतपरनिष्ठतारूपा, तां संबन्धान्तरेण साधयितुमाह परः **'अथापि'** इति । य एव योग्ये देशे स्थितः सन् विज्ञानस्य जनकस्तस्यैव तत् विज्ञानं प्रकाशः, स एव विज्ञानस्य विषयः । यदाह **'नाकारणं विषयः'** इति । संवेदनस्य विषयस्य च सहभावेनैव उपलम्भः, तत् कथं कारणभूतस्य नीलस्य विज्ञानात् पूर्वकालभाविनो विषयता उच्यमाना अनुभवबाधिता सती अङ्गीकरणीयेति चेत्, तर्हि समानकाल एव विषयोऽस्तु । प्रत्यासत्तिश्च नियमकारिणी एकसामग्र्यधीनतात्मा । तथाहि अर्थज्ञानक्षणलक्षणात् पर्यायेण अन्योन्यमुपादानसहकारिभावेन वर्तमानादेकस्मात् सामग्रीरूपात् परस्परोन्मुखौ रणरसिकोरभ्रयुगलकवत् विषयविषयिभावेन मेलनयोग्यौ सोपादानकारणपरम्पराप्रतिलब्धजडचेतनस्वभावविषयसंबोधौ जातौ । अत्रापि दोषमाह **'ततोऽपि'** इति । जनकत्वैकसामग्र्यधीनतालक्षणात् कारणादपि या प्रत्यासत्तिनियमसहिष्णुता, तस्यास्तावदविशेषो नीलपीतयोः । अन्यथा उभयविषयं कथं तत्संवेदनं स्यात् । निराकारत्वे च संवे-

पूर्वं नीले यत् पटु, तत् मन्दत्वेन अनुभवो यस्येत्येवमभिमतस्य मन्देन वा अनुभवेन अभिमतस्य पीतस्यापि संवन्धितया पटीयस्त्वेनैव अभिमत स्यात्, नीलस्यापिवा सम्बन्धितया मन्दत्वेन, यदिवा द्वयेऽपि अपटुमन्दत्वेन। नहि निराकारतापक्षे संवेदनस्य कोऽपि विशेषः। स एव पटुमन्दतादिना सकर उक्तः। स्मृतिद्वारेण अपि सकरमाह '**तथा**' इति। समकालमेव यो नीले पीते च अनुभवः, तेन दत्तः संस्कारो यदा नीलमात्रदर्शनेन प्रबोध्यते, तदा स प्राच्योऽनुभवो निर्विशेषः प्रबुद्धो नीलस्यैव, न पीतस्येति नियमाभावात् पीतमप्याकारमा अपि भवेदिति पीतेऽपि स्मृतिः सा स्यात्। नच शिखरस्थज्ञानपरिदृष्टभावर्चैश्वरूप्यस्य पुनरेकतमभावदर्शनप्रबुद्धसंस्कारस्य समस्तपूर्वानुभूतविषया स्मृतिरिति लोकेऽस्ति अनुभवः। ननु प्रबोधकबलात् नियमो भविष्यतीति परस्य संभावना भनक्ति '**यद्यपि**' इत्यादिना। '**पूर्वानुभवस्य**' इति स्मृतौ पुनरुन्मिषतः इति भावः। '**स**' इति अनुभवः। ननु साकारतादर्शनेऽपि प्रबोधके नीलदर्शने नियतेऽपि प्रबोध्य यत् प्राच्यमनुभवरूपं संस्कारमुखेन, तत् नीलपीतद्वयाकारमिति समानप्रसङ्ग इति शंकां निकृन्तति '**अर्थाकार**' इति। आकारद्वययोगी अपिहि असौ प्रबोधकबलात् तमाकारमुद्धुरीकृत्य प्रबुध्यते, द्वितीयं तु आकारमपच्छादितमेव संस्काररूपतया उदासीनमिव अपह्नसितमिव करोतीति न दोषः। स्मृतिद्वारेण सकरदोष उक्तः। तस्य यत् निराकरणं स्वपक्षे, तत् पूर्वोक्तसमस्तसंकरदोषप्रशमनोपलक्षणपरं मन्तव्यम्। तथाहि— तदाकारनियमितत्वात् प्रतिकर्म व्यवस्था नीलपीताकारयोः पटुमन्दतया परस्परमसंकीर्णता। एतच्च साकारक्षणिकज्ञानसन्ताननये वक्ष्यमाणनीत्या वासनासमर्थनानिर्वहणादनुपपन्नं, सर्वानु-

भवान्तर्मुखैकस्वतन्त्रसंविद्दर्शने तु उपपन्नम्,—इति निरूपयितुं **'तत्सदृशानुभवसंवित्प्रबोधितः'** इत्यत्र संवित्पदमुपात्तम् । एवमियता सूत्रस्य स्वपक्षे न अयं दोष इति अभिप्रायोऽन्तर्लीनतया सूचितः । तथाच वक्ष्यति **'सौत्रं तच्छन्दम्'** इत्युपक्रम्य **'सर्वमेव'** इति । यत् परपक्षे दुष्परिहरमदो दोषजातं, स्वदृशि तु मूलत एव न अवतरेदिति, तस्मादेतत् व्याचष्टे **'ततः'** इति । **'प्रकाशस्यैव'** इति प्रकाशरूपतैव तस्य जीवितम् । सा च घटेऽपि, पटेऽपि, शकटेऽपीति स्वतन्त्रा प्रमातृरूपा स्वशक्त्या स्वात्मनि दर्पणे इव घटादीनाभासयति,—इति दर्पणस्य लग्नत्वेन यथा प्रतिबिम्बानि भान्ति, नतु दर्पणाभेदमनादृत्य स्वात्मपरिनिष्ठितानि, तथा अमी घटादयस्तस्यैव प्रकाशस्य लग्नास्तदनुजीविता निर्भासन्ते; न स्वनिष्ठिता इति यत् मुख्यं प्रमेयरूपमिह वितत्य अन्यत्र उक्तम्

'एवमात्मन्यसत्कल्पाः............. ।' (अज०प्र०सि० १३)

इत्यादिना, तदपि अस्मिन् सूत्रे प्रतिपादितं भवति येन प्रागुपक्रान्तमन्तःकृतानन्तविश्वरूपत्वं भगवति निर्व्यूढं भवतीति ॥४॥

तत्तदाकस्मिकाभासो बाह्यं चेदनुमापयेत् ।
नह्यभिन्नस्य बोधस्य विचित्राभासहेतुता ॥ ५ ॥

ननु इयता बोधाभिन्नस्वभावत्वं सत्यं नीलादेराभासवर्गस्य समर्थितम्, सत्त्वाभासवर्गोऽपि यदि बोधस्य स्वभावस्तत्सदैव बोधस्तथा चकास्यात् । नच एवम् । तस्मात् क्रमिकत्वेन ये विचित्रा आभासाः; तन्निर्भासे नियमनिदानं वक्तव्यम् । नच बोधस्य तत्र हेतुत्वमविचित्रात् विचित्रक्रमिकाभासोल्लासासंभवात् । हेतुभेदाधीनो हि कार्यभेदः । तस्मादेकस्यैव बोधस्य क्रमिकानाभासान् प्रतिबिम्बकल्पेन अर्पयितुं चतुरस्तच्छायाधारी बाह्योऽ-

धर्मः चर्चनीयोऽनुमानेन । स च अनुमानसिद्धोऽपि अयमिति-
प्रत्यक्षताध्यवसायादनुमानत्वादसमर्थितार्थमूलतालक्षणेन प्रतिब-
न्धेन प्रमाणफलात् प्रत्यक्षप्रमाणक इत्यपि न न युज्यते परं तेन
बाह्याकारतया संवेदनरूपप्रकाशविच्छेदेन अध्यवसायाद्ध्यव-
सायापेक्षत्वाच्च प्रत्यक्षव्यपदेशस्य । भाविसूत्रार्थोपष्टम्भस्य एतत्सू-
त्रार्थस्य 'चेत्' इति निपातो बाह्यार्थवादिना संभाव्यमानता-
माह । बाह्यनाम बोधादविचित्रात् विचित्रोऽयं तत्तदिति च
उक्त आकस्मिको निर्भासमानबोधहेतुरनाभासमयादज्ञातहेतुकः
आभासः, स बाह्यमनुपाययतीति संभाव्यते । नहि अविचित्रात्
बोधात् क्रमिक आभासभेदो युक्तः, तत एकान्तेन बाह्य एव
हेतुतया अनुमीयते इति यदि परो मन्येतेति सूत्रार्थः । तमव-
तारयति '**अथ मतम्**' इति । एतत् '**चेत्**' इत्यस्य व्याख्यानं
भाविसूत्रार्थपर्यन्तस्पर्शि व्याख्येयम् । विचित्रशब्देन तत्तदिति
व्याख्यातम्, क्रमशब्देन आकस्मिकत्वम् । एकोऽपि हेतुः स्वसा-
मर्थ्ययोगात् युगपत् विचित्रं कार्यमुद्भासयेत नाम । क्रमस्य तु न
हेतुः संभाव्यते इति हिशब्देन द्वितीयार्धे हेतुतया सूत्रे सूचि-
तम्, हेतुना च पूर्वसिद्धेन भाव्यमित्याशयेन उपेयोपक्रमोचित-
प्रवृत्तिकेऽपि सूत्रे वृत्तौ पूर्वं व्याख्यातं '**तस्याविशेषेऽपि**'
इत्यन्तेन । तथैव विवृतिकारोऽपि व्याचष्टे '**बोधव्यतिरिक्त-
स्तावत्**' इत्यादिना । '**हृदय**' इत्यनेन अज्ञातहेतुकत्वेन आ-
कस्मिकतां व्याचक्षाणो बाह्यस्य अनुमेयतां सूचयति । तत्र अनु-
मेयबाह्यार्थवादी निर्भासमाने बोधे साकारे प्रकृतशास्त्रार्थाभ्युप-
गमसब्रह्मचारीति दर्शयति । जडत्वमिह परप्रसिद्ध्यपेक्षया प्रयुक्तं
मन्तव्यम्, यदाह '**चेतनस्यापि वेद्यत्वात्**' इति । ननु प्र-
त्यक्षसिद्धा एव अर्थक्रियासंवादप्रतिलब्धसत्यभावाभावा बाह्याः,

त एव आभासानां विषयव्यवस्थानियतस्वभावानां बोधानां क्रमेण उद्भवतां एकसामग्रीरूपतानुपातेन हेतवो भविष्यन्ति,—इति धर्मोत्तरीयमाशंक्य आह **'नच'** इति । **'उक्तन्यायेन'** इति पूर्वसूत्रद्वये । तत्र हि **'प्रत्यक्षमेव प्रकाशात्मकमप्रकाशरूपभावने कथं स्यात्'** इति उक्तम् । तेन यदाह आचार्यधर्मोत्तरः—अनुभवसिद्धो बाह्यस्य भेदः, यस्तु अभेदः, स

'तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मना ।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते ॥'

इति युक्तिबलेन व्यवस्थाप्यमानोऽनानुभविक इति; तद्युक्तीकृतम् । **'अनुभव एवहि न भिन्नस्य'** इति वदति विज्ञानवादिनि संवेदनमित्यपि तस्य तादात्म्यात् तथा प्रथनं

'............न तदन्यस्य कस्यचित् ।'

इति नीत्या । का इयं भणितिरनुभवसिद्धो भेद इति । तत एव सातासातयोर्व्यावृत्तिमात्रकल्पितो न भेदः । पृथगाकारानुभवे हि तथा स्यात् नीलत्वक्षणिकत्वयोरिव, इहतु पृथगाकारोपलम्भ इत्यपि असत् संवेदनतादात्म्येनैव उपलम्भस्य उक्तत्वात् । किंच प्रतिकर्मव्यवस्था अपि स्वसंवेदनात्मकसाक्षात्कारस्वभावैव—नीलमिदं संवेद्यते, पीतमिदं संवेद्यते,—इत्येवंरूपा केवलं विप्रतिपद्यमानस्य हेतुच्छायया निर्दिष्टा घटोऽयं प्रत्यक्षसिद्धत्वादस्तीतिवत् । नच तावता अनानुभविकत्वमुक्तम् । व्यवहारस्य मूलापबाधनसामर्थ्यविरह इति हि असकृदुक्तम् । नच व्यामूढप्रत्यक्षमेव प्रत्यक्षम्, अपितु परीक्षकवेद्यमित्यपि भट्टेन उक्तम्; दृढानुमानसिद्धमपि च किं न सिद्धं भवतीति अलमस्थानस्वदर्शनपक्षपतनेन परस्य । ननु यथा घटस्य प्रकाशमानतैव रूपं, तथा घटता अपि भविष्यति नीलस्य इव क्षणिकत्वकार्यत्वकारणत्वादि,—इत्याशंक्य आह **'न**

च' इति । अत्र हेतुः 'प्रकाशाप्रकाश' इति । प्रकाशतया-प्यभ्यधिको हि घटांशोऽप्रकाशस्वभावः स्यात्, नीलमेव तु भूत्वा न भवद्वेतोरुद्भवत् सामर्थ्यविधयां विद्यते अतद्व्यावृत्ति-फलितैर्भावान्तरसाधारणैः क्षणिकत्वादिभिरविभक्तमवधार्यतां याम, ननु परस्पराभावव्याप्तनीलपीततादात्म्यमेवस्य युक्तम्। प्रकाशविरुद्धश्च घटस्य स्वभाव इति न असौ प्रकाशेन एकात्मा, एकात्मत्वे व्यापको विरोधाभावस्तद्विरुद्धश्च विरोध इह उप-लभ्यते इति व्यापकविरुद्धोपलब्धिः । प्रकाशस्य न विरुद्धो नीलात्मा प्रकाशानधिकरत्वात् । तावानेव हि प्रकाश इति चेत्, पीतप्रकाशता न कदाचिदुपपद्येत नीलस्य पीतात् भेदात् । नीलपीतादिस्वभाव एव प्रकाश इति चेत्, युगपदेव तथा निर्भा-सेत । क्रमेण नीलपीतादिवैश्वरूप्यभागिति चेत्, स्वापादौ प्रकाशरूपता न स्यात् । अहंकारास्पदस्य च बोधस्य समस्तनीला-दिरूपताशून्यस्य उपलब्धिप्रकाशमात्रेण शुद्धेन वपुषा प्रतिलब्धो बोधेन स्वभाव इति तदधिकं यदत्र किंचित् नीलं वा पीतं वा श्वेतं वा सातं वा असातं वा, तत्सर्वं प्रकाशादधिकं अप्रकाशरू-पमेवेति विरोधमापादयेत् । नच इह क्रमनियमोऽपि अस्ति—शुद्धबोधरूपानन्तरं नीलाभासः, ततः समनन्तरप्रत्ययात् पीता-भास इत्यादिर्वैचित्र्यसद्भावाणां दर्शनादनियमेन च कार्यकार-णतायोगादिति युक्तमुक्तं 'विरुद्धधर्माध्यासेन' इति । 'अवधारणम्' इति वृत्तावेवशब्देन बोलम । 'अत एव' इति यतो विज्ञानशरीरीभूतस्य घटादेराकारस्य संवेदनरूपादधिकं कणमात्रमपि रूपं न अस्ति, ततः स्थूलतायाः कस्याश्चित परमार्थ-सत्ता अभावात् निमवलम्ब्य चोद्यं क्रियेत स्थूलं हि देशविततं भिन्नदेशं च । नच एकमेव तद्देशमतद्देशं च भवितुमर्हतीति ।

नहि तत् स्थूलं किंचन वस्तु, यदेवं पर्यनुयोगपात्रीक्रियेत। चित्ररूपज्ञाने हि यो ज्ञानस्य उपाधिर्ज्ञानतादात्म्येन निर्भासमानो नीलादिः, स विज्ञानात् यतो भेदेन अशक्यदर्शनः; ततोऽनन्यभाक् सन् पीतादिविविक्तः सन्नशक्यदर्शन इति न अन्यत् रूपं ततो ज्ञानात् व्यतिरिक्तविकल्पवेद्यं व्यतिरिक्तं भजते। तं हि विवेचयन् पृथग्भावेन एकानेकतादिना अर्थे विभ्रमकल्पितवाह्यभावे निपतति तच्चित्राकारस्वसंवेदनात्समयसमुदितविकल्पकाले विवेचको येन कथं तदेव नीलं तदेव पीतमित्यादिपर्यनुयोगप्राणितेन

'चित्रं तदेकमिति चेदिदं चित्रतरं ततः।'

इत्येवमादिवाच्यताशतोन्मेषेण अर्थमुपलभते, तत् न विज्ञानस्य आकारीभूते कश्चित् विवेको येन चोद्या शंका स्यात्—एकमेव स्थूलाकारं कथमिति, बाह्यं तु न स्थूलाकारमुपपद्यते। तदेव च दृश्यते, प्रतिभासधर्मः स्थूलतेति च बाह्यार्थापह्नवपूर्वरंग एव अयम्। परमाणुरूप एव दृष्टोऽर्थ इत्यपि बाह्यानुपपत्तिसूत्रे पराकरिष्यते। तस्मात् बोधस्य रूपं न प्रकाशादतिरिच्यते किंचित्। एतदेव अपिशब्देन आह **'चित्राकारेऽपि'** इति। आस्तां तावदहंकारास्पदभूतो बोधः समाधानावस्थाप्रतिपन्नो वा एकाभासनिष्ठो वा, न यत्र बोधाधिकरूपान्तरसंभवाशंका काचित्। चित्राकारेऽपि यावदेषैव वार्ता। **'बोधकरूपत्वेन'** इति विरोधापेक्षया अपि तृतीया व्याख्येया हेतौ मुख्यतया प्रयुक्ता अपि। तदयमर्थः—यथा दर्पणेन न गजतुरगयोर्विरोधो, नापि तयोरन्योन्यं दर्पणैकपरमार्थत्वात्; तथा बोधेन न नीलपीतयोरन्योन्यं बोधैकपरमार्थत्वादिति। ननु बाह्यमर्थमनुमानेन इत्थं सौगतः समर्थयितुमध्यवसितः। नच अयमेकमेव बोधमि-

च्छति । तत् का इयं ग्रन्थशय्या । सा इयं ग्रन्थशय्या बाह्येऽर्थे सति देशकालभिन्ने तज्जनितानि संवेदनानि आकारयन्ति कारणभेदात् भिन्नानीति युग्मम् । तत्र तु सति बोधैकरूपता परेण आनीयमाना अपरिहार्यैवेति विज्ञानवादी सर्वथा समस्तदर्शनापबाधकः,–इति आकूतेन बाह्यार्थवादी एकबोधाद्वयवादमापतन्तमस्य दर्शयति । ननु यथा इन्द्रनीलः पद्मरागः इन्दुकान्त इति मणेर्विशेषा मणिरूपानधिकाः कस्यचिदपि अत्र अमणित्वायोगात्, यथाच शाबलेयो बाहुलेयः खण्ड इति गोत्वस्य विशेषास्तत्र गोत्वादनधिका अगोरूपत्वाभावात्, यथाच इन्द्रनील महानील वैडूर्य गरुडमणिः शुकरत्नमिति नीलस्यैव विशेषा नीलरूपत्वानतिरिक्ताः कस्यचिदपि तत्र अनीलत्वायोगात् ; तथा नीलबोधः पीतबोधो मधुरबोधः कर्कशबोधः सौरभबोधः इत्यादयो बोधस्यैव विशेषाः, नच बोधातिरिक्तवपुषो येन एषामप्रकाशरूपताप्रसङ्गः । ततस्त एव विशिष्टनिर्विकल्पनीलादिबोधस्वभावा अन्येषामपि स्वयमतद्रूपाणां नीलस्मरणविकल्पनादीनां विचित्रताभासभाजां स्वस्वाकाराधानदिशा कारणं भविष्यन्ति,–इत्याशंक्य निषेधयति 'नच' इति । अत्र हेतुमाह 'यतः' इति । 'वृक्षः' इति न केवलः कश्चिदस्तीति पूर्वेण संबन्धः । परेण दृष्टान्तीकृतात् वर्गात् प्रकृतस्य बोधस्य वैलक्षण्यमाह 'नैवमिह' इति । 'अपरस्य' इति स्वापमदमूर्च्छासमाधानकैवल्यादिषु नीलसंवेदनादिरूपरहितमेव भाति संवेदनम् । नीलादिसंवेदनकालेऽपि तद्विविक्तबोधस्य स्वरूपमहमिति नीलादिरूपतावेशविकलं चकास्त्येव,–इति दर्शयति 'अहंकारास्पदस्य च' इति । एतच्च

'ज्ञानं च चित्स्वरूपं………… ।' (१।२।७)

इत्यत्र विमृष्टमस्माभिर्यत् यस्य निजं रूपं, तत् तेनैव सह सततं भाति तरुरिव शाखादिमद्विशेषात्मना; नच बोधो विशेषैः सदा भाति,—इति व्यापकानुपलम्भं दर्शयद्भिः । ननु च भवद्दर्शनेऽनेकसामान्यसंवेदनरूपं स्वलक्षणमिति निर्णेष्यते

'तथैव सद्धटद्रव्य………………… ।'(२।३।४)

इत्यादौ

'पृथग्दीपप्रकाशानां………… ।' (२।३।५)

इत्यादौ च उद्देशे । ततश्च मणित्ववृक्षत्वगोत्वानि अपि आभासरूपाणि शावलेयादिविशेषानुप्रवेशशून्यानि अपि भवन्ति यथैव अर्थक्रियाकरणात् विशेषानुप्रवेशवन्ति अपि शावलेयादिरूपतया, तथा प्रकृतेऽपि भविष्यति । एतदाशंक्य निराकरोति '**यथावा**' इति, वाशब्दः शंकां द्योतयति । एवं यदि आशंका तव, तदनेन अपि प्रकारेण बोधस्य न विशेषो भवति यतो गोत्वाख्यस्य आभासस्य सामान्यरूपस्य तादात्म्यसंमेलनयोगेन यदा अनुप्रवेशभाञ्जि आभासान्तराणि देशकालादीनि खण्डत्वमुण्डत्वादीनि च, तदा सामान्यसाध्यार्थक्रियातिरिक्तविशिष्टार्थक्रियासंपादनसमर्थ एषां भेदो भवति; नतु बोधे बोधभाग आभासान्तरैरारूष्यते । प्रमातृरूपं हि संवेदनान्तरं सामानाधिकरण्यादिसंबन्धदिशा मेलयत्याभासान्, विभजति वेति हि

'स्वात्मनिष्ठा………………… ।' (२।२।४)

इत्यत्र वक्ष्यते, नच बोधस्य संवेदकान्तरमस्ति । ननु च पाटवापाटवादीनि किं बोधस्य न विशेषाः । ओमिति ब्रूमः । कस्य तर्हि । आह '**विषयस्यैव**' इति दूरात् रजःप्रभृतिभावान्तराच्छुरितमेव वस्तुतत्त्वं बोधे मन्दबोधताविशेषमाधत्ते नीलमिव नीलबोधताविशेषम्, विपर्यये तु विपर्ययः । ननु कस्मात् त्वद्भिर्बोधे

न सहते आभासान्तरानुप्रवेशी भवद्भिर्युक्तिमार्गादित्याह 'बोध-भावात्' इत्यादि । 'उक्तम्' इति पूर्वसूत्रटीकायाम । 'भा-वात्म' इति यद्बुद्धिः 'प्रकाशात्मनः' इति च । प्रकाशस्य कः स्वभाव इति चिन्तायां यदि भावरूप इति उच्यते, तद्-प्रकाशताप्रसंग इति कथं तत्र आभासान्तरानुप्रवेशसंभावना,—इति तात्पर्यम् । 'तदपि' इति पूर्वमेकमित्यस्य पदस्य प्रकाशा-प्रकाशरूपता एकस्य घटस्य विरुद्धा,—इत्यस्यां छायायां तात्पर्यं व्याख्यातम्, बोधस्य आभासान्तरेण व्यामिश्रणात् स्वयं च भेदाभावादेकरूपता,—इति तात्पर्यच्छायान्तरमधुना अस्य निरू-पितमिति अपिशब्दः । बोधस्य नीलादिर्न विशेषोऽन्यतद्रूपा-बाधकत्वात् दर्पणस्य इवेति व्यापकविरुद्धोपलब्धिः । विशेषतया विशेषान्तरापसारणं व्यापकमबाधकत्वे विशेषरूपताविरुद्धमासा-म्यरूपताप्रसंगात् । तच्च इह न उपलभ्यते । नीलबोध एव सर्वदा-बोधतायां वैश्वरूप्यसह एव दर्पण इव अच्छः । तत एव बोधं भेत्तुमशक्ता नीलादयो बोधानधिका अपि उपरि इव अन्तरिव, बहिरिव न क्वचिदिव परिप्लवमाना दर्पणानधिकगजतुरगादि-प्रतिमतया प्रतिबिम्बतया उच्यन्ते । ननु एकत्वमपि आभासा-न्तरं कथं बोधमनुप्रविशेदित्याशंक्य आह 'न चहुवः' इति । आभासान्तरानुप्रवेशवशाशंकितविशेषान्तरतिरस्क्रियातात्पर्येण अ-धमेकशब्द इति यावत् । एवंच वदता ग्रन्थकारेण विस्तर-वादिनोऽपि बोधभेदः कथंकारं सिध्येत् भेदहेतोर्देशकालाकारा-देराभासान्तरस्य बोधस्वभावव्यामिश्रणसहिष्णोः कस्यचिदपि अभावादिति भिन्नाभिन्नक्षणिकसंवेदनसन्तानरूपताभिधानप्रच्छ-न्नोऽयमभिन्नबोधवाद एव परमार्थतो भवति,—इति दर्शितम् । ननु अभेदबोधस्य कथं नीलबोधः, पीतबोध इति । आभास-

भेदोऽयं, न बोधभेदः । आभासाश्च प्रतिबिम्बकल्पेन अवस्तुस्व-भावाः कथं स्वयं भिद्येरन्, कथंवा बोधं भिन्दीरन् **'अभि-न्नस्य बोधस्य'** इति सौत्रांशस्य अर्थं व्याख्याय तस्य बोधस्य **'विचित्राभासहेतुता न उपपद्यते'** इति अमुं भागं हेतुरूपं साध्यं प्रत्यवतारयिष्यामि,-इत्याशयेन साध्यार्थनिरूपकं प्रथममर्धं व्याचष्टे सूत्रस्य **'परस्पर'** इति आभासेभ्यो विज्ञानदर्पण-विश्रान्तेभ्योऽतिरिक्तं विज्ञानरूपं, विज्ञानाच्च अतिरिक्तं तदाभास-रूपं हेतुमाक्षिपति,–इति संबन्धः । **'क्रमेण'** इतिवृत्तौ क्रमोऽपि न नियतः, अपितु बहुभिर्भेदैराभासान् विशिष्टान् करोति,–इति विशिष्यमाणशब्दं वृत्तिगतं तात्पर्येण व्याचष्टे **'नचाप्येते'** इति । **'बोधविलक्षण'** इति अप्रकाशमान-त्वादेवेति आशयः । बाह्यशब्दोऽर्थक्रियाकारिणि वस्तुनि रूढः, नतु प्रकाशबहिर्भूतमात्रमाह शशविषाणं बाह्यमितिव्यवहारा-भावात्, तथाच धर्मोत्तरोपाध्यायेन अपोहः

'प्रकाशात्मकसंवेदनबहिर्भावमन्तर्नो'

इति वचसा प्रतिपन्न उक्तोऽपि न बाह्यतया उक्तो न बहिरिति वदतेत्याशयेन योऽर्थशब्दो वृत्तौ, तं विवृणोति **'तथाभूत'** इति । बोधप्रतिबिम्बताप्रकर्षं ये प्राप्ता नीलाद्याभासाः, तेषामर्प-केन सदृशेन तावत् भवितव्यं दर्पणाभासानामिव । ततश्च नीलाभाससदृश एव नीलः सिध्यति अनुमानेन । तस्यैव बाह्योऽर्थ इति संज्ञा । तदयं प्रयोगः–विज्ञानान्तर्वर्ती नीलाद्याकारः सदृ-शमर्पकमपेक्षते प्रतिबिम्बत्वात् दर्पणप्रतिबिम्बवदिति स्वभावतः प्रतिबिम्बानां हि भवतां नियतक्रमकत्वमस्ति व्यापकम् । तच्च समर्पकानपेक्षायामकारणकत्वात् न घटते इति प्रतिबिम्बत्वं तस्य अव्यावृत्तं साध्यभूतया अर्पकत्वापेक्षया व्याप्यते इति

व्याप्तिसिद्धिः । ननु न कदाचन बाह्यार्थः प्रत्यक्षेण अवलो-
कितपूर्वः, तत् कथमगृहीतव्याप्तिकोऽनुमीयते । आह **'यथाच'**
इति यथाहि इन्द्रियं न कदाचन प्रत्यक्षेण गृहीतं कारणमात्रेण
तु व्याप्तिर्गृहीतेति, तथैव कारणमात्रत्वेन अनुमीयते, नतु
प्रातिस्विकेन केनापि वपुषा । तत्तु अनुमितं पक्षधर्मत्वबलात्
विशेषे विश्राम्यति । रूपोपलम्भे यत् कारणं नियतमपि आत्म-
वर्ति तत एव तमस आलोकाच्च अन्यत्, तत् चक्षुरिति, तथा
इहापि,—इति आशयः । **'अकस्मात्'** इति कदाचिदिति
यावत् । रूपादिज्ञानं कर्तृ फलयतीति सम्बन्धः । ननु इन्द्रिय-
वदेव तर्हि कारणमात्रं तत् किञ्चित् स्यात्; नीलं, पीतमित्यादि
तु कुतः । अत्र उच्यते **'केवलम्'** इति । ज्ञानाकारविषया या
प्रत्यक्षप्रतीतिः, तस्या या परिनिष्ठा पश्यामीत्यध्यवसायरूपा
तस्या अविषयत्वेन तदपि अवसेयत्वेन कल्प्यते, नतु कारणमात्र-
तया यतोऽर्थत्वेन अयमिति तत्र अध्यवसायः । कारण-
मात्रानुमानात् विशेषं दर्शयितुमाह **'नहि'** इति । इन्द्रिय-
जनितानां ज्ञानानां प्रत्यक्षसंवेदनरूपाणां मतमिन्द्रियं कारणं,
नतु विषयत्वेनानेन इन्द्रियं पश्यामीत्यध्यवसायस्य अज-
ननात् । इन्द्रियं हि अनुमानस्यैव विषयस्तदध्यवसायेनैव अध्य-
वसितत्वात्, अनुमानं च विषयो यस्य अनन्यत्रभावो विष-
यार्थः । **'इह पुनः'** इति प्रकृते विशेषमाह । अगृहीतः कथं
दृष्टत्वेन अवसित इति चेदाह **'सारूप्यात्'** इति, यावत्
किञ्चित् देशकालसहचारि स्वरूपवैचित्र्यं ज्ञानान्तर्वृत्तेर्नीलस्य,
तावत् सर्वमविकल तदर्पकस्येति समानाभिहारमेलनन्यायेन
ज्ञानीयाकारविषयोऽध्यवसाय उत्पन्नः सारूप्यकृतात् विभ्रमात्
ज्ञानभिन्नमर्थाकारमिदन्तोचितमध्यवस्यामि,—इत्येवमुपजायते, न

च असौ विभ्रमजोऽपि अध्यवसायो गृहीतायां शुक्तिकायां रुप्यावसाय इव गृहीते ज्ञानाकारे बाह्ये अवसायतया भ्रममात्रस्वभावः, किन्तु अर्थप्रतिबन्धनात् मौलिकं ज्ञानाकारार्पणसमर्थमर्थं कारणभूतमध्यवस्यन् 'भ्रान्तिरपि संबन्धः प्रमा' इति न्यायेन प्रमाणव्यापारतामात्मनि आदर्शयति । यदाह

'अर्थस्यासंभवेऽभावात्प्रत्यक्षेऽपि प्रमाणता ।
प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम् ॥'

इति । प्रमाणव्यापारश्च अयं भवन् दर्शनबलात् पश्यामीत्येवं प्रत्यक्षादिना अध्यवसायरूपतां गृह्णन् प्रत्यक्षमनुग्राहकमर्थस्य अमात्य इव परवशीकृतं राजानं ग्राहकत्वेन व्यवहरति, ततः प्रत्यक्षगृहीत एव बाह्योऽर्थ इति लौकिकमनुसृतं भवति । तर्हि अनुमानस्य कुत्र व्यापारः । आह **'ससंवाद'** इति मूलकारणभूतः समर्पक आकाराणामस्ति अर्थस्तदाकारसदृश इति । एतावति व्यापारोऽनुमानस्य । यदितु अनुमानं तमर्थं बाह्यमध्यवसीयमानं बाधेत स्थैर्यमिव सत्त्वहेतुः, तदसौ बाह्यताध्यवसायो निर्मूल एव भवन्नप्रमाणफलं स्यादगृहीते बाह्ये मरीचिग्रहणेऽपि जलावसायो भवन्नगृहीतविषयो न प्रमाणफलम् । यदि च अनध्यवसितं यथा क्षणिकत्वं सत्त्वहेतुः प्रसाधयति, तथा बाह्यमर्थं प्रतिविम्बत्वहेतुः; तत् लौकिकः प्रत्यक्षदृष्टेन अर्थेन व्यवहाराक्षम इति न स्यादेव व्यवहारः । तदेतदाह **'ननु अक्षणिकत्ववत्'** इत्यादिना । **'इन्द्रियोपयोगेन'** इति इन्द्रियमुपयुज्यते अस्मिन् विज्ञाने तेन अध्यवसायाङ्गीकारितबाह्यार्थविषयताकेन । **'पूर्वम्'** इति अनुमानव्यापारात् । ननु

'............आकस्मिकमहेतुकम् ।'

इति प्रसिद्धं

'नाकस्मिका न नित्यास्ते न निरस्तानहेतुताः ।
इति पार्थाकस्मिकत्वप्रसङ्ग············ ॥'

इत्यादौ । न च अहेतुकात् हेत्वनुमानं युक्तमित्याशङ्कां व्यपोहति 'अज्ञातहेतुकत्वम्' इति । किंशब्दस्य चिच्छब्दनिपातद्योतितार्थसहायस्य विशेषोऽर्थः किञ्चिदिति नञ्समासे तद्धितवृत्तौ च दृष्टोऽज्ञमार्दङ्गिकादिगत इति व्यवतिष्ठते । सामान्यस्य च विशेषविश्रान्तिशून्यस्य अवधिभावात् विशेषस्य अवश्यंभावे सामान्याद्गत इति वचनव्यतिरिक्तज्ञातविशेषादितीयति परितिष्ठति । तत आकस्मिकोऽयमर्थ इत्युक्तेरज्ञातहेतुकत्वं नञ्तद्धितवृत्तितात्पर्यायातो

'वाक्यार्थे पदवचनं श्रोत्रेन्द्रियक्षेत्रियवत् ।'

इति नयेन मुख्योऽर्थः सति च हेतौ यथा भवति अज्ञाने, तथा असत्यपि,—इति अज्ञातसाधर्म्यादहेतुकाभिधायी सादृश्यनिमित्ततया लक्षणया तत्र तत्र प्रयुक्तः, न तु इह तथेति युक्तमुक्तम्—आकस्मिकादज्ञातहेतोरनियतक्रमकतया क्रमिकाद्याभासवैचित्र्यात् बाह्यार्थसिद्धिरिति । अवश्यं च असावभ्युपगन्तव्या स्वतन्त्रस्याकारनिधानसमर्थनरभसप्रवृत्तत्वयवश्यमप्रशमनीयमीश्वराद्वयवाद समस्तस्वनिकायसमयोन्मूलनमनुप्रवेशयिष्यति,—इति सूत्रवृत्तिविवृतीनां तात्पर्यम् ॥ ४ ॥

अथ स एव बाह्यार्थवादी विज्ञानवादिमतमाशंक्य निषेधयति

**न वासनाप्रबोधोऽत्र विचित्रो हेतुतामियात् ।**
**तस्यापि तत्प्रबोधस्य वैचित्र्ये किं निबन्धनम् ॥ ५ ॥**

वासनानामनादिकालोपनतानामभिनवनीलाद्याभासोत्थापनशक्तीनां यो विचित्रः प्रबोधः, स एव अत्र क्रमिकाभासवैचित्र्ये हेतुतामेति प्रथमतः, चरमं तु संस्कारात्मना प्रबोधो विकल्प-

नस्मरणाद्याभासनाहेतुतामेति,—इति संभावयते विज्ञानवादी । एतत् दूषयति **'न'** इति । अत्र हेतुमाह **'तस्यापि'** इति । योऽसौ विचित्रत्वेन संमतो वासनाप्रबोधः, स स्वात्मनि वैचित्र्यात् वा विचित्रः, वासनावैचित्र्यभावात् वा, प्रबोधकभेदात् वा । त्रयमपि च असत् । यतो वासना नाम विज्ञानानतिरिक्तविग्रहा । तत् पुनरपि प्रबोधमात्रमेकमन्यस्य अप्रकाशमानत्वेन असत्त्वात् । एवं प्रबोधेऽपि वाच्यम् । नच प्रबोधकहेतवोऽपि विज्ञानवाह्याः केचन उपपद्यन्ते सर्वस्य प्रकाशमानस्य प्रकाशात्मकबोधमात्रपरमार्थत्वात् । तस्मादाभासवैचित्र्यमन्यतो न घटते,—इति समर्पकेन आभासवैचित्र्याधायिना वाह्येनैव भवितुं युक्तमिति चेत् बाह्यार्थवादिनो मतमिति सूत्रार्थः । वृत्तिग्रन्थोऽत्र स्पष्टः । तं संक्षिप्य अवतारयति **'वाह्यमर्थं विनैव'** इत्यादिना । **'तद्वैचित्र्यस्य'** इति वासनाप्रबोधवैचित्र्यस्य, वासनां कस्तूरिकाकल्पितवस्त्राद्यधिवासवत् सततं परतन्त्ररूपां व्याख्यातुं तस्याः शक्तिरूपतामभिधत्ते शक्तिमदेकपरमार्थतासिद्धये । **'बोधः'** इत्यादिना प्रबोधं व्याचष्टे । **'तस्य'** इति, एतदिति नीलपीतादिक्रमिकाभासलक्षणं यत् स्वकार्यं, तज्जनने कर्तव्य आभिमुख्यं परिपाकोऽन्त्यावस्थाप्राप्ततया स प्रबोधः । **'अस्तु'** इति वासनास्मृतिजनकः संस्कारः प्रसिद्धः, नतु अपूर्वानुभवप्रसाधक इति तावत् न उद्ग्राहयामहे सांन्यासिकमेतद्वतिष्ठतामिति भावः । **'बोध एव'** इति अधिकस्य अप्रकाशत्वेन बोधशरीरानुवेशयोग्यताविरहादिति हि उक्तं भवद्भिरेव निजव्रतम् । उच्यमान इति शब्दः केवलमधिकीभवेत् प्रबुद्धवासनो बोध इति, नतु अर्थलेशः । **'असावपि'** इति उक्तैवंविधविशेषान्तरोऽपीत्यर्थः । ननु च यदपि आ-

भासवैचित्र्य कार्यत्वेन समर्थनीयं, तदपि बोधात् मनागपि न अतिरिक्तमप्रकाशनप्रसङ्गात्, अतिरिक्तमिव च भाति । तदस्य एवंविधस्य कार्यस्य 'यादृशो यक्षस्तादृशो बलिः' इत्युपपत्त्या कारणमपि वासनाप्रबोधवैचित्र्य परमार्थतो बोधानतिरिक्तमपि अतिरिक्तायमानं भविष्यति,—इति 'किमिदम्' इति । नहि कार्यवैचित्र्यमपि पारमार्थिकं किंचन यस्य अनुपपत्तिर्यत्नपरिहरणीया भवेत् । एतत् न सहते 'न चेत्' इति । 'एतत्' इति वक्ष्यमाणम् । तत् दर्शयति 'आभासभेदेऽपि' इत्यादिना । 'न' इत्यत्र उपपत्तिमाह 'यतः' इति । कार्यं हि अपूर्वतया भासमानमुच्यते । तच्च वस्तु वा अस्तु स्वार्थक्रियायोगात्, विपर्ययादवस्तु वा सत्यरजताभासवत् शुक्तिशकलरजताभासवच्च । कारणं पुनः कारणत्वादेव समर्थमर्थक्रियालक्षणत्वात् वस्तुन इति वस्त्वेव भवितुमर्हति, न अवस्तु सर्वसामर्थ्यविरहलक्षणत्वादेव अवस्तुनः । कारणताव्यापकसामर्थ्यविरुद्धासामर्थ्योपलम्भात् कारणता निषिध्यते, व्यापकविरुद्धोपलब्ध्या अबोधरूपतया च वस्तुत्वम् । तथा च न विचित्रमिति कुतः कार्यवैचित्र्यम् । तदाह 'वस्तुभूतस्य' इति बोधतया वस्तुरूपस्येत्यर्थः । येन च वपुषा नीलवासनाप्रबोधवान् बोधः; पीतवासनाप्रबोधवान् बोध इत्यादिना विचित्रः, तद्रूपं नीलपीतादिभेदमायतते । स च भ्रान्त इति तदपि रूपमवस्तु सत् बोधस्य कथं सत्यं विचित्रभावमानयेत् । ननु किं सत्येन विचित्रभावेन । यथाहि कार्यवैचित्र्यमपारमार्थिकं, तद्वत् कारणवैचित्र्यमपि भविष्यति,—इत्याशयेन शङ्कते 'अथापि' इति । एतदेव पूर्वमुक्तम् 'आभासभेदेऽपि' इत्यादिना । किन्तु तत्र इत्थमुक्तम्—कार्येऽपि नीलाद्याभास-

वर्गे बोधरूपमेव पारमार्थिकं, कारणेऽपि तदेवेति पारमार्थिकतामुखेन साम्यमानीतम्, अधुना तु अपारमार्थिकता वैचित्र्यविषया द्वयोरपि,—इत्यनेन भंग्यन्तरेणेति अपुनरुक्तम् । एतत् न सहते '**तदयुक्तम्**' इति । हेतुमाह '**अवस्तुनः**' इति । '**तदभ्युपगमे**' इति कारणत्वाङ्गीकरणे । '**इह**' इति नीलाद्याभासक्रमे । '**नहि**' इति कार्यं यथा दृष्टमात्रं पश्चादिति अर्थात् लभ्यते, न तथा पूर्वं दृष्टमात्रं कारणमिति वैधर्म्येण । ननु नियमेन पूर्वं दृष्टमितीयदेव कारणस्य लक्षणम् । आह '**तथाभूतस्यापि**' इति । पूर्वदृष्टमात्रस्य अपिहि कारणत्वमेतदेव—यत् वस्तुनः सत्यस्य अवस्तुनो वा असत्यस्य प्रख्यापने समर्थता । सैवच वस्तुत्वम् । ननु यदि कार्यमवस्तु, तर्हि अस्य कथं कार्यता । का खलु अस्याः क्षतिः । काममवस्तुत्वेन तस्य सामर्थ्यं निजं कार्यान्तरमकुर्वतः कारणता न स्यात् । एतदाह '**कार्यस्य सामर्थ्यविरहे तु**' इति । ननु यत् कारणेन क्रियते, तत् विशिष्टकारणबलोत्पन्नं कथमवस्तु भवेत्; अवस्तुत्वे वा तत्पदबन्धप्रतिलब्धसामर्थ्यं कारणस्य न किंचित् सामर्थ्यम्,—इति कारणमपि अवस्तु भवेत् । एतदपि अनेनैव आह '**कार्यस्य**' इति अवस्तुत्वात् कार्यस्य कारणे कारणत्वं न भवेत् कार्यापेक्षस्य सामर्थ्यस्य अभावादित्यर्थः । कार्यतायास्तु अवस्तुत्वं न उपरोधकम् । अवस्तुनो हि कार्यतैव न भवेत् यदि सत्कार्यवाद इव स्यात् सामर्थ्यात् तदुद्भवेत् । नच एवम् । कार्यं हि अवस्तुभूतमेव उत्थाप्यते कारणेन । तदैवच तत् कार्यमुच्यते, यदा निरुपाख्यम् । दर्शितं च '**स्वसामर्थ्येन**' इति वदता कार्यगतभवनम् । न कुत्रचिदुपयोगि यदंगीकृतमन्यैः

'नित्यं न भवनं यस्य.................. ।'

इति, तत् कार्यमसदेव । ननु कारणबलादुद्भूतं यदि सर्वा-
त्मना सामर्थ्ययुक्तं, तत् वस्तु, न चेत्, अवस्तु । भ्रान्त-
योऽपि च बोधरूपत्वेन वस्त्वात्मानः सत्यः कार्या एव द्विचन्द्र-
ज्ञानमिव तिमिरस्य । द्विचन्द्रस्य तु अर्थक्रियाविरहादवस्तुत्वमस्तु,
न तत्संवेदनस्य संवेदनान्तरवत् विचित्रस्य । तदाह **'नहि भ्रा-
न्तीनामपि'** इति । कामलया पीतशङ्खसंवित्, काचेन काच-
शगनमत्ययस्तिमिरेण शंखद्वयसंवित्,—इति हि दृश्यते एव । ननु
प्रतीतिरूपं चेत् भ्रान्तौ कार्यं, तर्हि प्रतीतेर्वस्तुत्वात् कथमुक्तं—
कार्यत्वं पुनरवस्तुत्वेऽपीति । अथ द्विचन्द्रादि अवस्तु,
तदेव कार्यं, तर्हि कारणव्यापारबलोत्पन्नं कथमवस्तु, तन्निष्ठेन
चासामर्थ्येन कथं कारणं वस्तु भवेत्,—इत्याशंक्य आह **'अथ-
वा'** इति । एतदुक्तं भवति—कारणत्वचिन्तायां बोधस्य अवश्यं
पारमार्थिकस्वरूपसमावेशमात्र एव अवस्थेयमित्येवंपरत्वेन
अस्माभिरभिहितमदो बोधरूपत्वं च पारमार्थिकं च । तच्च
अविचित्रं भङ्गान्तरसहस्रेऽपि योज्यमाने । तत् हि न पारमार्थिकं
किंचित् प्रकाशाधिकस्य अप्रकाशनप्रसंगादिति हि परमं
प्रवमहेयमागमतो युक्तितश्च । एतत्तात्पर्यं दर्शयति **'एतावत्तु'**
इति । नीलवासनाप्रबोधस्य बोधादनर्थान्तरत्वात् पीतवासना-
प्रबोधवता बोधेन तुल्य एव असौ बोधः, सोऽपि तेनेति बोध-
मात्रमेकमेव,—इति पिण्डार्थः । एवं वस्तुतत्त्वमभिधाय अभ्यु-
पगम्यवादेन आह **'अथापि'** इति । पूर्वं नीलवासनाप्रबोधे
पीतवासनाप्रबोधेऽपि च बोधरूपमेकमिति उक्तम् । मा भूत्
वा बोधरूपमेकं तद्वासनाद्वयप्रयोगात्, किन्तु नीलवासनाप्रबो-
धस्य पीतवासनाप्रबोधात् तद्वासनावशेन भेदो वक्तव्यः ।
वासनयोरपि नीलपीतमुखेन नीलपीतयोश्च कथं भेदः । नील-

पीतवासनाद्वयप्रबोधादिति चेत्, चक्रकमेव। कर्मभेदवासनाधिपत्यात् तद्भेद इति चेत्, कर्मभेदेऽपि निमित्तं वक्तव्यम्। नीलाभासात् पूर्वबोधादन्योऽनन्तरो नीलाभासबोधः संस्काररूपतया स्थितादिति चेत्, पूर्वस्यैव गतस्य बोधस्य बोधतातिरिक्ता नीलाभासता कुतः। बालस्य च प्राथमिको नीलाभासः कस्मात्। प्राग्जन्मगतत्वकल्पने सर्वप्रथमनीलरूपताप्रतिलम्भे निदानं वाच्यम्। परस्परया क्रमिकनीलपीताद्याभासस्वभाव एवच बोध इति स्वापमूर्छासमाधानादौ शुद्धात्मता तस्य कथम्। सापि नीलपीताद्याभासवदस्य स्वभाव इति चेत्, न शुद्धाशुद्धात्मत्वयोर्विरोधादिति उक्तप्रायम्। किंच सततमेव शबलस्वभावत्वे बोधस्य अङ्गीकृते निर्मोक्षप्रसंगः। ततश्च

'प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः।'

इति

'प्रज्ञापारमिताद्वैतं ज्ञानम्‥‥‥‥‥।'

इति

'यामद्वयज्ञानमयीम्‥‥‥‥‥‥।'

इत्यादेः स्वगमाभ्युपगमादेर्विप्रलोपः,—इति अलम्। तदेतदेव सिध्यति यदि बोधरूपतातिरिक्तमनादिनिजनिजबाह्यकारणपरम्पराप्रभवं बाह्यमेव किंचित् वस्तु भवेत्,—इति बाह्यार्थवादिना स्वपक्षः प्रत्युज्जीवितः। तदेतदाह **'सर्वथा बोधव्यतिरिक्त'** इति। एवं स्वसन्तानवर्ति संभाव्यमानं तावत् कारणं कर्माधिपत्यं पूर्वो नीलाभासः समनन्तरप्रत्ययः पीताभासप्राय इत्येतदाशंकितं नीलपीतादिक्रमिकाभासवैचित्र्ये, नच तदुपपद्यते इति उक्तम्। अथ परसन्तानवर्ति वैचित्र्यं नीलाद्याभासवैचित्र्यक्रमेऽधिपतिप्रत्ययरूपतया हेतुरिति यः शंकेत, तं प्रति आह बाह्या-

र्थवादी—परप्रमातृरूपाणि यानि बोधान्तराणि आभासवैचित्र्यो-द्भावनकारणभावेन समर्थयितुमिष्यन्ते, तेषां संपादयितव्याभासभेदात् तस्मात् बोधसन्तानादेकस्मात् भेदे सति कारणता समाप्यते। स एवतु कथम्। तथाहि बोधस्य तावत् स्वरूपं नित्यमहमिति अन्तर्मुखनिदन्तावभासवशासमुदितभिन्नकक्ष्यौ देशकालौ तद्बोधविशेषणभावाधिगमनासमर्थौ न भिन्दाते,— इति उक्तमसकृत्। स्वरूपभेदे च अन्यतरस्य अप्रकाशरूपत्वाद् बोधत्वमापतेदिति न देशतो न कालतो विभेदिता अस्ति संविदः। स्वरूपतोऽपि भेदिता जडात् न संविदश्रितः। ततो वस्तुतः प्रमात्रन्तरासिद्धिः। अभ्युपगमवादे तु सदा सन्निहितानि खलु परप्रमात्रन्तराणि। तानि च आभासवैचित्र्यशतसहस्रवर्तियौगपद्यादेकस्मिन्नेव क्षणे ततश्च एकैकत्र सन्ताने तदेकव्यतिरिक्तसमस्तसमुद्भासयद्बुद्धप्रमात्रन्तरगताभासवैचित्र्याणि कारणभावमुपगतानीति न कश्चित् नियमेन क्वापि प्रमातरि आभासभेदः समर्थयितुं शक्यते इति कोटिधा अयमुपपन्नहेतुः समर्थनप्रकारः। अनेन आशयेन आह 'उपपन्नत्वेऽपि' इति। ननु सर्वमिदं जडाभिमत भावाभासजातमिन्धनाभ्याभासबीजभूसलिलाभासादिचेतने, परस्परयोग्यदेशसन्निधापनाभिधानोपसर्पणसंपादनसमर्थैः प्रलयैर्हेतुभिर्निजनिजकार्यसंपादनोचितयोग्यदेशसन्निहित तावत क्रियते इति न अस्ति अत्र विवादः। उपसर्पणप्रत्ययाश्च चेतनाश्च इच्छावन्तः। सा च इच्छा लयनिधानकल्पारघट्टघटीयत्रवाहकेच्छा इव अनन्तकालभाविनियतक्रमक्रमाभासवैचित्र्यमापूर्यैव उत्तिष्ठति। परावरकन्दैषणा हि राज्ञः पराष्ट्रमर्दनाचलुण्ठनभङ्गभेदनप्रभृत्याभासान्तरशतसहस्राभिसन्धानगर्भतयैव प्रादुर्भवति। निवृत्तौ प्रबन्धेन प्रयुक्तमा-

भासपदं—विज्ञाननये बाह्यार्थाभावात् विज्ञानाकारतैव उपसर्पण-प्रत्ययादीनां पूर्वपूर्वरूपतया कारणानामुत्तरोत्तरं च कार्याणाम्—इति सूचयति । **'हि'** इति यस्मादुत्तरोत्तरतया नियमवत्या कार्यत्वेन अभिमताः अभिमानेन तथा निश्चिताः, पूर्वतानियमात् च कारणत्वेन अभिमता आभासभेदाः क्रियन्ते स्वेनैव इच्छाविशेषेण विज्ञानरूपेण **'तथा'** इति ततो हेतुप्रकारादिदमायातम्—यत् किल इच्छाख्यालयविज्ञानविशेषसमुत्थापितो य आद्यः कारणाभासो यथा ग्रामप्राप्त्यभिसन्धानात्मविज्ञानोत्थया गमनेच्छया उत्थितः शरीराभासः, स एव मध्यवर्तिनो मार्गाभासं, तद्वर्तिनश्च तृणादिनीलाद्याभासानाक्षिपति यावद्ग्रामप्राप्त्याभासफलम्; ततोऽपि तृप्त्याभासात्मकफलान्तराभिसन्धानोद्भूतया इच्छया यः पाकाभासः प्रथमकारणाभिमत उत्थापितः, तेनैव अधिश्रयणाद्याभासोऽन्त्यग्रासनिगरणाभासपर्यन्त आक्षिप्तः; ततः पानगोष्ठीवैचित्र्याभासेच्छेत्यादि मन्तव्यम् । यदिवा किमनेन बहुतरेच्छाप्रबन्धाक्षेपिणा भूयसा कार्यकारणभावेन परिकल्पितेन । प्रथमगर्भाधानसमय एव एकप्रघट्टकसंमूर्छित एव यः कर्मवल्लीप्रतानाभास एकालयविज्ञानरूपः, स एव मरणक्षणपर्यन्ताभासावधीन् नियतक्रमभाविनः सुखदुःखतत्साधनाभासानाक्षिपति । पुनर्जन्मान्तरेऽपि एवं, ननु तेषामाभासानां मध्यवर्तिनां पुनः कारणान्तरमुपयुज्यते यथा पातयामि एनं गिरिशिखरादित्यनयैव इच्छया पात्यमानगततत्तद्देशसंयोगविभागतत्कृतदुःखमोहाद्याभासपरम्परा आक्षिप्तैव । तत एव मध्येऽसावशक्यप्रतिबन्धा । यदाह मुनिः

'इह ते कर्मणामेव विपाकश्चिन्तयिष्यति ।
अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ॥'

इति । अर्थेन अशक्यप्रतिबन्धस्य मध्याभासाना यद्वा कर्मा-
भासाक्षेपाविनाभाव एव उक्तः । अत एव

'.. ......प्रारब्धेक न शोधयेत् ।' (स्व० ४।१४१)

इति अशक्यत्वमेव उक्तमागमे

'.................येनेदं वद्धि भोगनः ।'

इति च । तथाहि स्वप्रविशेषरूपान् क्षणाभासान् सर्वं तज्जातक-
गणनाकाले मरणक्षणान्त निश्चिन्वन्ति यावत् तज्जन्मगतमरणक्ष-
णस्वप्रविशेषाभासात् जन्मान्तराभासाक्षेपादि निरवधिकमपव-
र्गावधिक वा गण्यते एव । नच नियतक्रमानुरोधिन आभास-
प्रबन्धस्य एकः कारणम्,—इति अपूर्वमदः, अपितु बाल्यादौ
ग्रहनक्षत्रोदयास्तमयपरम्पराप्रबन्धे ऋतुसमुदाये च प्रतीततर-
मेवेति दर्शयति 'यथा' इति तावन्तं नियत कालमवस्थातुं
शील येषा, तेषा विचित्राणा विलक्षणानामन्योन्यतो नियतो यः
प्रबन्ध उत्तरोत्तरत्वेन आभासपरम्परा, तस्या एकमेव किंचित्
हेतुरिति 'इति' इति । अथापि उच्यते इति पूर्वक्रियया अभि-
सम्बध्यते दृष्टान्त एव तावत्, सर्वस्मिन् नैतदुपपद्यते । कृत्ति-
कोदयादिना निरूपिते ग्रहनक्षत्रराशिपरिस्पन्दे यावदेतदुपपद्यते,
ऋत्वादौ च यत्र नियत एव क्रमः । बाल्ययौवनादौ तु न नैय-
त्यमस्ति अवश्यंभाविनः क्रमस्य अन्यथाच अन्यथाच अव-
लोकनात् । ततो मध्यवर्तिनामाहारवैचित्र्यादीना यौवनजरा-
संपादनतारतम्यभाजामध्यगमनादेश्च जरासमुत्थापकस्य, रसो-
पयोगादेश्च यौवनपरिरक्षणैकरूपसक्षणस्य ह्यनियतभावितया पूर्व-
कर्ममात्रकृतमाक्षेपमसहमानस्य कारणभावेन वर्तमानस्य कथम-
पह्नवः क्रियेत । नच अस्य मध्यवर्तिनः कारणवैचित्र्यमन्यदुप-
लभ्यते । ततश्च समनन्तराभासस्यैव तत्र कारणत्वमिति न

तावदायस्यैव हेतुता। अथ उच्यते किमनेन पुरुषविशेषगतेन बाल्यादिना। पुरुषसामान्यापेक्षया बाल्यादिकमस्माभिरुदाहृतम्। एकप्रथमकारणाक्षिप्तोऽनेकः क्रमिकः प्रबन्धो भवति,—इत्यत्र वस्तुनि इदमपि न उपपन्नं तत्रापि प्रथमकारणाक्षिप्तत्वाभावात्। यथाहि प्रभास्वरादपवरकप्रविष्टस्य न प्रथमकारणबलादेव चक्षुरादीनामालोचनहेतूनां संपत्तिः, तथात्वे हि प्रविष्टमात्रस्यैव अपवरकोदरान्तर्वर्तिसमस्तवस्त्ववलोकनं संपद्येत, अपितु परम्परापेक्षातोऽत्र चक्षुरादीनां विशेषप्रतिलम्भरूपः परिणामविशेषोऽपेक्ष्यः। यथाच बीजभूम्युदकानामङ्कुरे जनयितव्ये परम्परासंनिधानजनितोऽतिशयरूपः परिणामविशेषः, यथाच ओदनसंपत्तौ कर्तव्यायां स्थालीतण्डुलोदकानाम्। अन्यथा परिणामान्तरानपेक्षायां झडित्येव अङ्कुर ओदनश्च जायेत। सामग्र्या हि तत्र पूर्णत्वम्। तत्र हि न अधिकमनुप्रवेशयितव्यं, नापि ततः किंचिदपसारयितव्यम्। तथैव क्रमसंनिहितानामादित्यचन्द्राद्युदयानां च नीहारविहारादीनां च अवश्यं परम्परोपकारपरिणामेन भवितव्यम्। अन्यथा कतिपयक्षणैरेव बाल्यात् यौवनं, ततोऽपि मध्यमवयः, ततोऽपि वार्धकमिति सविधवर्त्येव निधनं स्यात्। अस्ति तु कालान्तरप्रतीक्षणम्। तस्मात् मध्ये सजातीयशरीरपरम्परास्वभावेन पूर्वावस्थाप्रच्यावोत्तरावस्थोदयशून्येन अपि देहसन्तानेन कंचित्कालमवस्थेयम्। तदाह '**स्थितैव**' इति। तथा च जातकगणनेऽपि न इह दिने इदमिदं द्रक्ष्यति, स्प्रक्ष्यति वक्ष्यतीति प्रतिपदं हसितकण्डूयितपर्यन्तव्यापरसंवेदनसंभवः, अपितु सुखदुःखावेशोपयोगिदशाविशेषसंवेदनमात्रं भवति। युक्तं च एतत्। अन्यथा एकजातकतत्त्वसंवेदने तल्लग्नतया सर्वं विद्यात्। तस्मात् बाल्यादौ प्रथमकारणाक्षिप्तत्वं तावदसत् नै-

चित्र्यशतदर्शनात् । अरघट्टघटीयन्त्रवाहने तु तासां घटीनां भरणावर्जनपरिवर्तनादावविचित्र एव क्रमः सर्वदा । तत्रापि वैचित्र्यं चेदवश्यं सहकार्यन्तरमन्तरा स्यात् । न च प्रकृते नीलाद्याभासवैचित्र्ये यौवनादौ रसायनाद्युपयोग इव सहकार्यन्तरप्रवेशः कश्चित् नियतस्य सहकारिणोऽनवलोकनात् । यथाहि रसायनोपयोगात् यौवनमवतिष्ठते चिरं कालं, गतमपि वा पुनर्नयोपयोग इव पुनरावर्तते इति निश्चितोऽत्र सहकारी, तथा नीलाभासे स्थिरे वा अस्थिरे अयमेति पुनरुद्भवति वा अयं सहकारी,—इति न निश्चयोऽस्ति । नापि प्रभास्वरादपवरकप्रवेश इव अन्योन्यपरिणामापेक्षा । सा हि तत्र भवेत्, यत्र नियतः कालान्तरप्रतीक्षायोगो भासते । इह तु नीलाभासक्षणमात्रसमनन्तरमपि पीताभासो दृष्ट एव । प्रथमहेतुसमाक्षिप्तता अपि न युक्ता क्रमनियमस्य अभावात् । प्रथमहेतु पूर्वोक्तं स्मारयति '**तथाहि**' इति । '**उभयत्रापि**' इति सम्भाव्यमाने इति भावः । तत्र इच्छात्मकः प्रथमहेतुर्यः प्रागुक्तः '**प्रथमेच्छयैव हेत्ववभासोऽन्तराक्षिप्त**' इत्यादिना, तदाक्षिप्ततायां क्रमनियमाभावमाह '**यथैकदा**' इति '**अन्यदा**' इति '**तस्यैव पुरुषस्य पुरुषान्तरस्य वा**' इति तज्जातीयात् हि कारणात् तज्जातीयमेव कार्यं भवति,—इति युक्तम् । इह च इच्छायास्तस्मिन्नेव पुंसि पुमन्तरे वा वह्निमुत्पादयामि,—इत्येवरूपेण तज्जातीयतायामविकलायामपि अन्तरासमुद्भवतो नीलपीताद्याभासक्रमस्य नियमेन तज्जातीयत्वम् । अथ यो द्वितीयः प्रथमहेतुः सम्भावितः '**पूर्वकर्मभिरेव वा**' इत्यादिना, तत्र क्रमनियमाभावो य आपादयितुमिष्यते यागार्थयादिना, स एकपुरुषापेक्षया न उपपन्नः एकस्मिन् जन्मनि प्रथमकर्मप्रपञ्चकहेतुनाक्षिप्ते तस्य एकस्यैव

नीलाद्याभासक्रमस्य मरणाभासान्तस्य भावात्,—इत्याशयेन पुरुषान्तरापेक्षया तं क्रमनियमाभावमाह **'पुरुषाणाम्'** इति । बहुवचनेन शरीराद्याभासवर्गस्य प्रथमकार्यस्य सर्वपुरुषेषु तज्जातीयतावलोकनात् पूर्वकर्मणोऽपि तज्जातीयत्वमखण्डितं सिद्धमिति तज्जातीयात् प्रथमहेतोस्तज्जातीयेनैव नियतक्रमेण नीलाद्याभासप्रबन्धेन भवितुं युक्तम्,—इति अभिप्रायः । कर्माक्षिप्तत्वमपिच सर्वस्य आभासस्य अयुक्तं सर्वस्य सुखदुःखाभासफलत्वायोगात्, धर्माधर्मयोश्च तत्साधनसंपादनोपयोगेन प्रसिद्धत्वात् । यदाह **'ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्'** इति । यद्यपिच मार्गगततृणादिदर्शनमपि परम्परया कयाचिदवश्यं सुखदुःखयोर्व्याप्रियते अदृष्टेश्वरादिवादिमते सर्वस्य तदनिष्टानाविष्टस्य उत्पत्त्यनभ्युपगमात्, तथापि कर्मैव एकं प्रथमहेतुरिति यो मन्यते, तस्य एतत् दूषणं साक्षात्—यत् न सुखाय न दुःखाय वा तस्य कथं कर्माक्षिप्तत्वमिति । अन्येषां तु बहुतरहेतुवादिनां सामग्र्या वैचित्र्येण कर्मणोऽपि अतिविचित्रत्वे सुखदुःखसाधनानामपि व्यवधानाव्यवधानादिबहुतरचित्रभावाभ्युपगमो न दुष्यतीति । ननु माभूदिच्छैव आद्या नीलाद्याभासवैचित्र्ये प्रथमहेतुः पूर्वकर्म वा । स्वकारणाभास एव तत्र तत्र कार्याभासे प्रथमहेतुर्भविष्यति । सोऽपि जडो वा अन्यो वा योऽसावुपसर्पणप्रत्यय उक्त इत्येवं प्रथमहेतवो भूयांस आभासवैचित्र्यं मध्यवर्ति समुत्थापयिष्यन्ति,—इति यस्य मतिः, तं वितत्य अपहस्तितमोहं करोति **'नापि मृद्दण्ड'** इत्यादिना **'अभिसन्धानमस्ति'** इत्यन्तेन । अथवा पूर्वशेषतयैव अस्य ग्रन्थस्य इत्थमवतारणम् । ननु यथा बाल्यादौ प्रथमहेतुकर्माक्षिप्तेऽपि रसायनोपयोगादिना सहकारिणा यौवनमतिचिरकालमवतिष्ठते, तथा इह अपि

सहकारिवशात् ते ते आभासाभिव्यज्यन्ते । तथाहि घटा-
भासस्य अनुवर्तने मृत्पिण्डाद्याभासो हेतुः, धूमाभासस्य वह्नीन्ध-
नादिभासङ्घाभासः, पटाभासस्य कुविन्दतुरिवेमाद्याभासः । एव-
मन्यत्र वाच्यम् । एतत् दूषयति **'नापि'** इति । अत्र हेतुः—अ-
न्तरा मध्ये गृहवर्तिनो घटपटाभासादेरवलोकने मृत्पिण्डदण्डाद्या-
भासस्य नाम अपि न अवशिष्यते इति । ननु कुम्भकारगृहे तावत्
प्रथमं मृत्पिण्डाभासः सर्वत्र एव, ततोऽपि यस्तद्गृहात् घटमान-
यति, स उपसर्पणमन्त्याभासो गृहवर्तिनो घटाभासस्य अनु-
वर्तने सहकारी भविष्यति । अस्तु, यावदास्ते । स्वगृहगते तु
तस्मिन् कः सहकारी घटाभासानुवृत्तेः । तदेतदाह **'नापि
उपसर्पण'** इति । ननु यथा अग्नावनुमितिसिद्धे धूमाभासस्य
दृश्यमानस्य अदृश्यमानोऽपि तेन अनुमात्रा अदृश्यमानत्वादेव
अधिपतिसाम्यात् हेतुत्वात् अधिपतिप्रत्ययशब्दवाच्यो वह्न्या-
भासस्तद्देशकालनियतसंदर्भादिप्रमाणनिष्टम्भेन स्थितो हेतुः, एवं
घटप्रापकोऽपि पुरुषः स्वगृहान्तरितः एव अत्र सहकारी भवि-
ष्यति । यदा तर्हि स यशःशेषीभूतस्तदा किं कर्तव्यम् । कः
सहकारी घटाभासस्य अवस्थाने शरणीकर्तव्यः । नष्टस्य न हेतु-
त्वमनुपाख्यत्वात्, सोपाख्यत्वं हेतुताया व्यापकम् । तद्विरुद्धस्य
च इयमुपलब्धिः । चिरनिर्वृत्ताभासस्य च न हेतुत्वम् **'आ-
धिपत्येन अनन्ताभासोदयप्रसंगात्'** इत्यादि वक्ष्यते
अमतः । तदाह **'नापि आधिपत्यमात्रेण'** इति । एवमपि
या हेतुता उच्यते, सा नेति सम्बन्धः । अत्र हेतुः **'तदुपस-
र्पण'** इति । अत्रैव दृष्टान्तमाह **'नहि'** इति । नष्टस्य का
हेतुता यत्र अधिपतित्वं विशेषो भवेत् । **'अत एव'** इति यतो
न असौ धूमाभासोऽग्न्याभासात्, अतो हेतोस्तादृशात् धूमा-

भासजात् धूमाभासात् गोपालघटिकासंगृहीतविमुक्तात् न वह्न्याभासस्य अनुमानमतत्कार्यत्वात्। **'उपसर्पणप्रत्ययनाशेऽपि'** इति यदुक्तं, तत्र **'यद्यपिच'** इत्यादिना पूर्वपक्षं शंकित्वा निराकरोति **'तथापि'** इति। **'नैतद्युक्तम्'** इत्यनेन योज्यमेतत्। रजकतक्षकलोहकारप्रभृतयो वस्तुतः सन्ति क्वचिदुपपत्तिस्थानान्तरेऽपि स्वर्गनरकादाविति। इयता तथा कार्याभाससिद्धिर्न भवतीति दर्शयति **'आभासवस्तुत्ववादे'** इति। नच ते तदा तदुपसर्पणप्रत्ययतया भान्ति। भासने च तदाभासकारणभूतोपसर्पणप्रत्ययान्तराभासः, तत्रापि अन्य इति निरवधिः पूर्वावभासो भवेत्। नच सोऽस्ति,–इत्याह परम्पराविच्छेदशब्दाभ्याम्। अथ मन्यते–सर्वज्ञस्य तावदाभासपरम्पराप्रतिभासोऽस्ति,–इति तद्वर्तिनस्ते उपसर्पणप्रत्ययाभासा धूमानुमेयहुतवहाभास इव अधिपतिप्रत्ययत्वेन अस्मदादिषु काष्ठकुड्याद्याभासभेदहेतवः सन्तु,–इति। तत्र आह **'अनियमाच्च'** इति। नहि समस्ततदुपसर्पणप्रत्ययनिर्मितगृहरथघटाद्याभासाः सर्वे सदा उपलभ्यन्ते इति नियमोऽस्ति। नच सहकार्यन्तरं तदुपसर्पणप्रत्ययरूपप्रमातृच्छात्मकसंवेदनातिरिक्तं विज्ञाननये युक्तोपगमं येन अयमनियम उपपद्येत। किंच तेषामुपपत्तिस्थानान्तरभाजां तदा तावत् न इच्छा अस्ति–अद्यापि आभासन्तां गृहादय इति। पूर्वनिर्माणावसरेऽपि इयन्तं समयमेतेऽवभासन्ताम्,–इति न अभिसन्धानमेषाम्। अभिसन्धानेऽपिच मध्य एव कीर्तनस्थानानां मठादीनां ध्वंसो दृष्टः। नचापि ते पूर्वं सर्वज्ञा येन इत्थं गृहाभासोऽस्य आभासस्य अनन्तरोऽस्मात्पूर्व एतेन व्यवहित इति अनन्तवैचित्र्यमभिसन्दध्युः। नचापि एतेषां तावानभिसन्धिरद्यतनोपसर्पणप्रत्ययान्तरेषु तथादर्शनाभावात्।

एवमियता प्रथमकारणाक्षिप्तेन यतो विकल्प निराकृता, ततः समनन्तरप्रत्ययपरम्परया आभासवैचित्र्यमिति आपतितं गन्त-न्तरविरहात् । तदपि च अयुक्तमनियमात् । अथ उच्यते— कुम्भकारकुलावस्थित एकः प्रमाता अन्ततः त्रिभिः सर्वशो वा अयङ्घटमस्मि, स च घटाभासरूपो जातस्तावत् । तत्र च अस्य हेतुर्मृद्दण्डकुलालाभासः, ततो नष्टेऽपि तस्मिन् तस्य तावत् घटा-भासादेव घटाभास इति स्थिते योऽपि अन्यः प्रमाता तद्देशाभास-वान्, तस्य अपि तदाभासयोगः—इति । तत्र अपि विवेच्यं—किं पूर्वस्थितप्रमात्राभासरूप एव असौ घटाभासः कालान्तरागन्तुक-प्रमात्रन्तरान्तरनुप्रवेशमेति,—इत्येतेन नयेन द्वयोस्तावति आभासे ऐकात्म्य प्राणसुखदुःखाद्याभासभेदेऽपि, उतस्विन् पूर्वस्थित-प्रमात्राभासात् कारणादागन्तुकप्रमातृपर्याभासान्तरमेव कार्य-रूपमुदेति । तत्र पूर्वस्मिन्कल्पे तीर्थिकमतानुपङ्गः । तथाहि द्वयोः पूर्वस्थितागन्तुकयोः प्रमात्रोरेकसंवेदनरूपताभ्युपगमे वि-शेषाभावात् सर्वेषामेकसंविद्रूपत्वादेकात्मतेति एकात्मवादस्या-पदनिष्टः । तत्रापि च कदन्तरमायातम्—यत् स एवात्मा स्वातन्त्र्यात् संयोजनवियोजने विचित्रे निर्भासयन् विचित्रं प्रमा-तृभेदमन्तरा अन्तरा च आभासांश्च कञ्चन अभेदमुपरचयति,—इति महेश्वररूपोऽसाविति तदयं विज्ञाननयो योगाचारेण सुष्ठु समर्थित इत्याशयेन बाह्यार्थवादी प्रथमपक्षं दूषयति 'एतद्धि' इति। द्वितीयमपि पक्ष 'अथ भेदेऽपि' इत्यादिना सभाययते। 'बाह्यत्वादप्रकाशनप्रसङ्गः' इति प्रमाणमत्र न किंचन स्या-दिति प्रमाणमुखेन दोषः। मूर्तत्वे च अस्थूलता न घटते। तद्देशात देशस्फारत्कम्पाकम्पावरणानावरणभेदेन विरुद्धधर्माध्यासादिति न एकता, नचापि अनेकपरमाणुरूपता तथानिर्भासाभावात् पर-

माणोरपि षडंशयोगापत्त्या अनुपपत्तेः। नच एकानेकतातिरिक्तं वस्तुनो राश्यन्तरमस्ति,—इति प्रमेयमुखेन दोषः इति दोषवक्ताप्रसङ्गे **'बाह्यमूर्ते'** इति पदद्वयम्। एतदपि दूषयति **'एतदपि न'** इति **'ते समर्थाः'** इति। एककावस्थायामपि प्रत्येकं दृष्टसामर्थ्यैः शालिबीजैरिव स्वसंख्यानुवर्त्यङ्कुरनिकरः शालीयः प्रमातरि आभाससंचयो जन्यते। समानाभिहारादनेकत्वानवभास इति चेत्, असमानाभिहारे किं वाच्यमिति दर्शयति **'ततश्च'** इति। नच आगन्तुकप्रमातुरेकाभासरूपतां मुक्त्वा स्फुटास्फुटादिनिर्भासयोगः। ननु तैमिरिकान्तरस्य किं न अस्ति केशाद्याभासः। सत्यमस्ति; स तु स्वतिमिरबलादेव, नतु तदाभासात्। तथात्वे हि अतैमिरिकस्य अपि स भवेत्। तदाह **'भ्रान्तस्यापि परस्मात्'** इति। एतदुपलक्षणम्। पूर्वमतैमिरिकस्य एकचन्द्राभासे तैमिरिकोऽपि आगन्तुको न द्विचन्द्राभासवान् भवेदिति न पराभासजनितः प्रमात्रान्तरस्याभासस्तद्वैलक्षण्यात्। अतद्वैलक्षण्यं हि तदाभासजननस्य व्यापकम्। अन्यथा घटाभासात् पटाभास इत्यादिरनियमो बहुशाखः। तस्य विरुद्धं तद्विलक्षणत्वमिति व्यापकविरुद्धोपलम्भः। अथ योगाचारमतदूषणप्रवृत्तं बाह्यार्थवादिनं—एतत्पक्षस्तावत् निसर्गदुर्बलः, न अयं मे गणनीयः; योगाचारांस्तु अयमेव दूषयिष्यति,—इति आशयेन प्रोत्साहयितुं नयपरमार्थज्ञोऽयमन्तरनुप्रवेशमिव अस्य कुर्वन्नीश्वरैकात्म्यवादी कथयति **'ईश्वरैकात्म्यवादे तु'** इति। तुशब्दो विशेषं द्योतयन् प्रोत्साहस्य विशेषज्ञतां द्योतयति। सत्यमसि प्रामाणिकधुर्यः—यत् किल एतद्दूषणं **'स्फुटत्वास्फुटत्वादिसंक्रमः'** इति **'केशाद्याभासोदयः'** इति चकारात् **'वैकल्पिकाभासान्तरोदय'** इति च, तत्

न ईश्वराद्वयवादे दर्शितम् । ततस्तीर्थिकपक्षं सर्वथैव क्षणिकत्व-नैरात्म्यादिचिरोपार्जितन्यायैरनैकान्तदूषणधुर्यमयं युष्मद्दर्शने अ-यत्नं प्रवेशयिष्यति विज्ञानवादी दुरात्मा स्वनिकायकलङ्कभूतः, तदमुं सर्वावस्कन्देन निपातय स्वसाधारिति 'द्विविधा हि' इति

'सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।
सृष्टिः साधारणी सर्वप्रमातॄणां स ईश्वरः ॥' (३।२।१५)

इति

'साधारणोऽन्यथा चैशः सर्गः स्पष्टावभासनात् ।' (४।१।११)

इत्यादिना साधारणी सृष्टिर्वक्ष्यते केवलेश्वरकर्तृका, यत्र तावति आभासांशे प्रमातॄणां भेदविगलनेन एकात्मतापत्तिः,

'तस्यामसाधारणी सृष्टिरीशसृष्ट्युपजीविनी ।' (४।१।९)

इत्यनेन तु असाधारणी पशुरूपप्रमातृकर्तृका यत्र न मिश्रतापत्तिः प्रमातॄणाम् । तत्पक्षे च स्फुटास्फुटकेशादिविकल्पितरा-दिश्च वर्ग इति असाधारण्यात् एव तत्र आभासैकतादोषः । तत्रापि च ईश्वराधिष्ठानमस्ति । यद्वक्ष्यते

'सैषाप्यज्ञतया सत्यैवेशशक्त्या तदात्मनः ।' (४।१।९)

इति । अथ प्रोत्साहितो बाह्यार्थवादी परकीयम् 'अथ' इत्यादिना दर्शितं दूषयति 'न युक्तम्' इत्यादिना । अथ अयं बाह्यार्थवादी भगवदैकात्म्यवादिना प्रोत्साहनोपजापसमुत्तेजितो निरपेक्षं प्रहरन् सन्तानान्तरसिद्धिं विज्ञानवादिनो मते नितरां दूषयितुं पीठबन्धं गृह्णाति 'स्वक' इति । यावन्ति सन्ताना-न्तररूपाणि प्रमात्रन्तराणि, तावन्त एव घटाभासा यदि; तत् परस्परव्यवहारो न घटेतेति एतेन अपि च्छिद्रेण एकाभासवादी त्वया प्रवेशयितव्यः, तस्मादङ्गीकुरु बाह्यमर्थम्, यत्र एकस्मिन्

भिन्नप्रमातृगृहीते परस्परं क्रयविक्रयादिव्यवहारोपपत्तिः । बाह्ये च शरीरवर्तिनि एकस्मिन् व्यापारे व्याहारे च अङ्गीकृते तस्य समीहाकार्यत्वात् तेनैव दृष्टेन कार्यलिङ्गेन कारणभूतपरबुद्धिसन्तानो निरपवादमनुमीयते इति प्रमात्रन्तरविषयोऽपि व्यवहारः प्रश्नप्रतिवचननिगूहनव्रीडनाशयसंमीलनादिः परस्परेण कृतो घटते इति। न तत् नयविदा अङ्गीकार्यं, यत् परपक्षोत्थापकम्,—इति अङ्गीकरणकारणस्वपक्षानुपमर्दविरुद्धतदुपमर्दव्याप्तं परपक्षोत्थापकत्वमिति कारणविरुद्धव्याप्तोपलब्धिः । एवकारेण यत् सूचितं–परघटाभासे व्यवहारो न स्यादिति, तत्र हेतुः **'प्रमात्रन्तरघटाभासानां परोक्षत्वात्'** इति । परस्वसंवेदनपरोक्षात् तद्वर्तिनि प्रमातृभेदेन बहुतरभेदे घटाभासे ग्राह्यांशरूपे अस्यापि घटाभासोऽस्यापि, अपरस्यापि,—इत्येवं व्यवहारो न स्यात्, ग्राहकांशरूपे च अतिभूयसि प्रमात्रन्तरशब्दवाच्ये सेनासंघादौ अयमपि चेतयते अयमपि चेतयते इति न भवेत् व्यवहारस्य स्पर्शोऽपि संभावनापि, किमङ्ग संपत्तिः । एवं ग्रन्थयोजना, ननु **'घटाभासानाम्'** इत्येतदपेक्षया चकारो योजनीयः, येन अत्र षष्ठीसप्तम्योरनुपपत्तिर्भवेत्, एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्याः 'गवां स्वामीह येषु च' इति । एवकारबलात् हि परघटाभासेषु प्रमात्रन्तरेषु च व्यवहारस्पर्शोऽपि न स्यादिति संबन्धः । सर्वथा प्रमाणागोचरेऽर्थे न व्यवहारः परमुख इव अवहित्थनिगूहिताकारे । तथाच परप्रमातृगता ग्राह्यग्राहकाकाराः । व्यवहरणं हि ज्ञानाभिधानरूपम् । तत्र च कारणं प्रमाणगोचरत्वं सर्वत्र तदनुभवात्, तस्य विरुद्धं तदगोचरत्वमिति कारणविरुद्धोपलब्धिः । ननु सत्यपि बाह्येऽर्थे घटोऽस्तु प्रत्यक्षप्रमाणगोचरः, ग्राहकाभासस्तु अनुमानेनैव गोचरीकर्तव्यः

'बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात् ।
मन्यते यदि धी ·· ·················· ॥'

इति न्यायात् । तदिह दर्शने प्राणाभासांशोऽपि अनुमितिविषयो भविष्यति, तदसिद्धं प्रमाणागोचरत्वम् । तथाहि अनुमातुश्चै-त्राख्यस्य मातुः स्वप्रतिभासता प्राप्तो यो मैत्रसम्बन्धिना देहप्रति-भासेन सहितो व्यापारव्याहारावभासः, तस्य समीहया सह व्याप्तिर्गृहीता कार्यकारणभावप्राणिना स्वात्मनि । एवंभूतया इत्थंभूतपराभासवत्ता च अन्तःसंविदा सिद्ध अयमेवंजाती-यको व्यापाराभासो व्याहाराभासश्च भवतीति । ततो गृही-तकार्यभावात् तस्मात् व्यापाराद्याभासात् तत्तद्ग्राह्याभाससंवलित-ग्राहकरूपानुमानम् । अनुमितेन च व्यवहारः । तदुक्तं

'·········चित्रमात्रेऽप्येष नयः समः ।'

इति । अपिशब्देन संभाव्यमानत्वेन एतदुक्त्या दूषयति 'न सं-गतम्' इति । अत्र हेतुः 'नहि' इति । योऽस्मादनुमेयो मैत्रः, तदीयया समीहया स्वप्रादेशविशिष्ट एव व्याहाराद्याभासो जनितः, न तु अनुमातृसमतचैत्रसंवेदननिष्ठः,—इति मैत्रसमीहया यो न कार्यश्चैत्रसंवेदननिष्ठ एष व्याहरतीति आभासः, स कथं मैत्रीयामकारणभूतां समीहामनुमापयेत् । ननु सत्या मैत्रसमी-हायां चैत्रसंवेदने मैत्रो भाषते,—इति आभासः । स कथं तस्याः कार्यो न स्यात् । आह 'प्रमातुरस्य हि' इति । मैत्रस्य इच्छानुसारेण अहं वाग्मी भाषे,—इति स्वसंवेदननिष्ठितो य आभासः, तस्य कारणं संभाव्यते । स एव हि इष्टः करणाय, न तु चैत्रसंवेदनगतस्य मैत्रो भाषते,—इति आभासस्य मैत्रसमी-हया क्रियाकरणं स्यादिति । अत्र हेतुः 'तस्य' इति । स हि चैत्रसंविद्गतो न इष्यते कर्तुं चैत्रसमीहया । ननु किमेषणेन प्रयो-

जनम्। बीजेन किमङ्कुर इष्यते। अथच स तस्य कार्यः। आह **'नहि अनभीष्टं च इच्छाकार्यं च'** इति। जडवैलक्षण्यमेतदेव कारणस्य—यदभिसन्धाय करणमिति यावत्। कोऽत्र हेतुरिति चेत् विपक्षे अनभिसन्धायकरणेऽतिप्रसङ्गो नाम। तमाह **'विश्वस्य'** इति। ततश्च सुकृतदुष्कृतसंकरादिर्बहुशाखो व्युपप्लवः। नच केवलमियत्, यावत् प्रकृतमपि विघटेतेति दर्शयति **'एवंच'** इति। सकललोकविरुद्धमप्रसिद्धं च इदमिति कल्प्यमानपदम्। चैत्रस्य सा तूष्णींभावादाविच्छा समीहारूपा। तयैव तर्हि स्वसंविद्रतो मैत्रो भाषते,—इति आभासो जनित इति कल्प्यताम्। अनिष्टोऽसौ चैत्रसमीहयेति चेत् मैत्रसमीहया अपि न इष्ट इति तुल्यो विधिः। चैत्रस्य च अनुमातुः स्वसमीहा सिद्धा। तत्र एतावदधिकम्—मत्समीहयैव मत्स्वसंवेदननिष्ठोऽयमाभासो जनित इत्यन्तम्। अदृष्टमैत्रं संवेदनं न कल्पनीयं स्यादिति उपचयं दर्शयन् सन्तानान्तरस्य अशक्यसमाधानतां दर्शयति। ननु परिहृतमेतदाचार्येण स्वयमेव शंकित्वा, तत् किमिदं चोद्यते इति यस्य भ्रमः स्यात् तं प्रत्याययितुं तद्ग्रन्थपाठपूर्वकं तदर्थं दूषयति **'यदपि'** इत्यादिना **'अतद्वर्णितमिव'** इत्यन्तेन। **'अतद्वर्णितमिव'**इतिवचसा बाह्यार्थवादी इदमाविष्करोति—प्रामाणिकोऽपि आर्यधर्मकीर्तिराचार्यदिङ्नागग्रन्थानुरोधात् तत्पक्षपातादेवमभिधत्ते, न पुनरस्य स्वरुचिरेषेति। अस्य सन्तानान्तरसिद्धिग्रन्थस्य अर्थः—यथैव बाह्यनये व्याहारात् परकायगतात् परसमीहा अनुमीयते, तथैव विज्ञाननये व्याहाराभासात् परकायाभासगतादिति। तत्र यदि परो ब्रूयात् बाह्यवादे तावदेक एव व्याहारः, तत्र युक्तं—यत् ततः समीहानुमानम्, विज्ञाननये तु द्वावाभासावनुमातरि चैत्रे व्याहरति अयमिति

स्वात्मविच्छेदेन, अनुमेये तु चैत्रे व्याहरामि अहमिति स्वात्मा-
विच्छेदेन । तत्र चैत्रेण अविच्छिन्नप्रायभासस्य व्याहारस्य स्वात्मनि
स्वेहाकार्यत्वेन व्याप्तिर्गृहीता, नतु विच्छिन्नप्रायभासस्य परसमीहा-
कार्यत्वेन । तत् कथं सा अनुमीयेत । तत्र उच्यते क्रियाविशेषः
कुड्यादिक्रियाविलक्षणो यो व्याहाराभासादिः, स एव विच्छेदा-
विच्छेदरूपावान्तरविशेषत्यागात् सामान्यं, तत्र दृश्यमानं तस्य
गमकम् । यस्य । व्याहरणस्याहको य इह अविशेषः, स एव
अहमयमितिविशेषान्तरानादरात् सामान्यं, तस्य । ननु यथा
घटवल्मीकयोः पार्थिवत्वसामान्येऽपि कुम्भकारपिपीलिकारूपप्रति-
नियतकारणजन्यत्वं, तथा विच्छिन्नाविच्छिन्नयोरपि प्रत्यययो-
र्व्याहारप्रतिभासयोर्निमित्तं व्यतिरिक्तं स्यात् । भवेत्, यदि
कुम्भवल्मीकवदेव प्रतिनियतकारणजन्यता उपलभ्येत यावता
विच्छेदप्रतिभासयन्तोऽपि क्षिप्तानां शराणां, तथा शिलानां यन्त्र-
निर्माणादीनां च परेषां प्रचलितपरिभ्रमणादिका ये क्रियाप्रति-
भासाः, क्षिप्तैर्या शरशिलायन्त्रादिभिर्निर्मिताः परस्य चेतना-
चेतनरूपस्य च्यवनकालभाविनः प्रचलितादिकाः क्रियाप्रति-
भासास्ते अविच्छिन्नस्वेहापूर्वका दृष्टाः । तत् विच्छिन्नैर्विच्छिन्न-
समीहापूर्वकैर्भवितव्यमिति नियमः कुतः । परकीय-
समीहापूर्वकस्य च परप्रेरितशराघातादिजनितस्य अहं चलन्
निपतामि,—इति स्वात्माविच्छिन्नस्य अपि कम्पादिक्रियाप्रति-
भासस्य दृष्टम् । तस्मात् व्यापाराभासमात्रे समीहामात्रस्य
व्याप्तिः । पक्षीकृतस्तु यः परव्यापाराभासस्तद्धर्मताबलात् स्वसमी-
हानुपलम्भे तृतीयराश्यभावेन पारिशेष्यात् परसमीहामात्रं व्या-
प्तिसंवेदनस्मरणयोर्भवदपि फलतः परसमीहारूपमनुमितं सि-
ध्यतीति । तदेतत् तेन प्रामाणिकेन न वर्णितमिव तेन च

अप्रामाणिकेन वर्णितमिव प्रसिद्ध्या च तेन वर्णितमिति श्रूयते । वयं तु इत्थमुत्प्रेक्षामहे—यदिवा प्रामाणिकवर्णितमपि इदं स्वदर्शनपक्षपातप्रमादादिदोषादप्रामाणिकवर्णितेन तुल्यं जातमिति । इवशब्द उत्प्रेक्षायामुपमायां वा । कस्मादेवमिति आशंक्य आह **'तथाहि'** इति । परस्तावदुत्तरं ब्रूताम्, तेन अस्य दूषणावकाशान्तरमासादयिष्यामि,—इत्याशयेन बाह्यार्थवादी प्रस्तुतप्रमेयसिद्धावनुपयोगं साध्यविशेषणस्य तावत् दर्शयति **'क्रियायाः'**इति । ज्वलनपव(च)नादिका क्रिया न समीहापूर्विका,—इति युक्तं साधनधर्मस्य विशेषणविशेषपदेन, समीहायां तु अनुमितायां सिद्धः परसन्तान इति किं तत्र विशेषपदेन । ननु सन्तानान्तरेण अनुमितेन न कश्चिदर्थः, व्यवहारसिद्धये हि तदनुमीयते । क्रियामात्रात् च संनिवेशादिव पुष्टीभूतहस्तादेः पूर्वभाविकारणरूपं समीहामात्रमतीतरूपमपि सिध्यति । वर्तमानसमीहान्तरानुबन्धित्वेऽपि तस्य सिद्धे 'जीवति अयम्'इत्येतावत् क व्यवहारविशेषे समुपयोगि। क्रियया हि व्याहरणाभासरूपया तादृगसौ व्याहर्तृरूपो व्याहरामि, इत्येवं—तव्द्याहाराभाससमवायिरूपः साध्यते साध्यत्वोचितोऽसावेवेति यावत् । यतश्च एवं, तत एतदायातमिति यावत्तावच्छब्दार्थः । ततो मैत्रलक्षणात् प्रमातुरविच्छिन्नरूपो यः क्रियाविशेषाभासस्तेन तादृगसौ साध्यो यस्य अविच्छेदेन श्वासोन्मेषव्याहारादिः, क्रियाभासः । ततो व्याहरामीत्याभासात् परसन्तानानुमाने चिकीर्षिते तस्य अनुमातुरुत्तमपुरुषवाच्योऽस्मदर्थरूपः सन्तानान्तरत्वेन संमतोऽपि प्रत्यक्ष इवेति तादृशात् क्रियाविशेषाभासादीहाविशेष एव व्याजिहीर्षातत्प्रयत्नतत्पूर्वकप्राणाद्युत्थापनादिस्तातव्यमयाभीष्टप्रश्नप्रतिवचनादिव्यवहारोपयोगी युक्तोऽनुमातुमिति ज्ञापयितुं साध्येऽपि विशेष-

शब्दः । अत्र आह बाह्यार्थवादी **'तदित्थम्'** इति । अत्र हि तात्पर्यं विचार्यमाणं समस्ता प्रक्रियां विलुम्पति । तथाहि—न चैत्रस्य व्याहरामीति आभासः स्फुरति यत एवमनुमिमीते—स हि व्याहरतीति अभिमन्यते, नतु व्याहरामीति । तथाभिमाने हि अस्मदर्थसंभिन्ने व्याहारे स्वसमीहैव एवमुक्ता भवति, न परसमीहा, स्वपरयोश्च तादात्म्यापत्तिः । यस्य च मैत्रस्य व्याहरामीति आभासः, तस्य स्वसंविन्सिद्धा समीहा । किमनुमानेन । तदेतदाशयं आह **'दूरापेतम्'** इति । यद्रूपमनुमानात् पूर्वं सिद्धं, न तदनुमेयं यातुनः । पर्वत इव सिद्धश्च अस्मदर्थः । अनुमेयत्वे कारणमसिद्धत्वम्, तद्विरुद्धं च अत्र उपलभ्यते,—इति कारणविरुद्धोपलब्धिः । यदस्मदर्थरूपम्, तत् परत्र भवति,—इति स्वभावविरुद्धोपलब्धिः । अत्र शरीरान्तरे अयमितिप्रत्ययात् परत्वमिति चेत्, स्वत्र अपि परत्वप्रसङ्गो निमित्तस्य अविशेषादत्र अहमिति हि स्वाभिमतेऽपि देहे,—इति कः स्वपरविभागः । यद्वा **'अतीतत्वेनापि'** इत्यन्तं विज्ञानवादिनो वचनम् । तदेव दूषयितुं भङ्ग्या व्याचक्षाणेन बाह्यार्थवादिना अनूदित **'एवंच'** इत्यादिना **'विशेषशब्दः'** इत्यन्तेन ग्रन्थेन । दूषणाङ्गीकरणमिषेण एषोऽभिप्रायस्तत्र विशेषशब्दं प्रयुञ्जानस्य । अत्र च प्रकृतमेव विघटते इति दर्शयति **'तदित्थम्'** इति । अनेन च नयेन ईश्वराद्वयवादी अवश्यं लब्धान्तरः प्रविशति । द्वयोरपि तदाभासमाने परस्परतादात्म्यगमनेन अस्मदर्थोन्मेषप्रतिभासात्, ऐश्वर्यशक्तेश्च स्वपरविभागप्रतिभासहेतोराभासान्तरेण ऐक्यस्य संभवात्,—इति आशयशेषः । ननु प्रथमोत्तमपुरुषरूपप्रत्ययार्थानादरः । नैव एषः । व्याहरणमात्रात् तादृशमेव प्रकृत्यर्थरूपं समीहामात्रं सिध्येत् । तदाह **'अत्रापि'** इति ।

**'सामान्यरूपा'** इति स्वपरताविशेषणत्यागेन। **'इष्यते'** इति व्याप्तिग्रहणकाले व्यापकत्वेन साधनधर्मस्य, अनुमितिकाले च अनुमेयत्वेन। अत्र आह **'तद्विशेषग्रहणमनर्थकम्'** इति। ततश्च तत्साध्यार्थलाभाभावात् समीहामात्रं पिशाचस्य वा यक्षस्य वा सर्वज्ञस्य वा किमेवं तादृगस्ति कस्यापि शिलादिप्रेरकस्य इव येन अयमित्थं कम्पते, व्याहरति च,–इति निश्चयाभावे व्यवहारासिद्धिः। अतश्च एवं यत् परसमीहा अपि मच्छरीरकम्पाय, मत्समीहा अपि परदेहकम्पाय दृष्टा प्रभविष्णुरिति अभिप्रायः। यच उक्तं **'क्षिप्तशर'** इत्यादिना विच्छेदाविच्छेदयोरपि व्यापारप्रतिभासस्य समीहामात्रमेव निमित्तं स्वपरविशेषणभागस्य व्यभिचारदर्शनादिति, तत्र समीहाया अपि व्यभिचारो दृश्यते। पतामि, चलामि; चलति, पतति,– इति हि अविच्छिन्नो विच्छिन्नश्च व्यापाराभासो विना समीहां वातवेगादिना अपि दृष्ट इति व्यापाराभासेन कारणमात्रानुमानोचितेन समीहा अपि अनुमातुं न युक्ता। यत् येन विना अपि भवति, न तत् तस्य कार्यं धूम इव जलस्य। तथाच कम्पः समीहया विनेति कार्यताव्यापकतदविनाभावविरुद्धमत्र तद्विनाभावित्वमुपलभ्यते,–इति व्यापकविरुद्धोपलब्धिः। **'अथ'** इति वातवेगाभासादिजनितात् कम्पाभासादन्य एव समीहासमुत्थो धूमाभासजादिव धूमाभासादग्न्याभाससमुत्थोऽभियुक्तैकसमधिगम्यो लोकेऽपिच अभ्यासात् प्रतीतः; ततश्च विच्छेदाविच्छेदविशेषत्यागात् सामान्यरूपो वाताद्यक्त(स्थ)क्रियावैलक्षण्याच विच्छेदाविच्छेदत्यागेन यत् सामान्यं समीहामात्रं, तस्य कार्यः; तेन कार्येण युक्तं तत् स्वकारणमनुमातुमिति यदुच्येत। **'तथापि'** इति तस्मिन्नपि प्रकारे कथ्यमाने विच्छेदा-

दिविशेषत्यागेन अपि या समीहा कारणत्वेन संमता, तस्याः क्रियया परस्पन्दादिकया अपिशब्दात् स्वस्पन्दादिकया सह यः कार्यकारणभावः प्रसाध्यते, स समीहितत्वलक्षणविशेषणविशिष्टैव सिध्यति। नहि या न कस्यचित् समीहिता पवनजवनादिनिमित्तान्तरप्रभवा स्वगता परगता वा क्रिया, सा समीहाकार्या युक्ता। ततो विच्छेदाविच्छेदविशेषौ त्यज्येतां नाम, समीहितत्वं तु अशक्यत्यागम्। समीहातो यदि असमीहितमुत्पद्यते, तदेवस्य व्याहारसमीहाया स्थावरजङ्गमं विश्वं व्याहरेत् स्यात्। ननु यदि समीहितैव व्यापारादिक्रिया समीहाकार्या, नतु असमीहिता। किमतः। एतदाशङ्क्य दोषापादनाय योजयति 'नच' इति। इह व्याहारे अयमहमिति समीहा। ततो व्याहरामीति समीहितृरूपस्वसन्तानगतो व्याहाराभासः। तत्समकालमेवच समीहितृव्यतिरिक्तेऽनुमातृप्रमातरि परसन्तानरूपे व्याहरतीत्येवंभूतो व्याहाराभासोऽनुमातृकर्तृकत्वाभावेन नैतत्कर्तृकत्वात् तत्संघातकपरसन्तानसमवायी द्वितीयः। तदिह परसन्तानगतशब्दः उभयथा व्याख्येयः—समीहितृव्यतिरिक्ते अनुमातरि यत आभासते अनुमातृव्यतिरिक्ते च समीहितरि भवति—इति। एप च प्राच्यसहितः सत् (न) सन्तानान्तरे अनुमातव्ये हेतूरार्यः, न पूर्वः शुद्धः नापि परः शुद्धस्तयोः क्रमेण स्वसमीहायामसमीहायामपि च भावात्। तस्य अस्य व्याहरामीति सहितं परसङ्क्रमणेन प्रथमपुरुषशब्देन योग्यं परगतत्वं नाम व्याहारविशेषस्य असमीहितयन्त्रपुत्रिकाव्याहारविलक्षणस्य यत् विशेषणं, तत् चेत् त्यज्यते; तर्हि व्याहरणमात्रात् समीहामात्रमनुमीयेत, नतु व्याजिहीर्षामीत्येवंविधविशेषपरिहारेण व्याजिहीर्षतीति। एतदेवच विशेषतोऽनुमेयमेतद्रूपताजीवितत्वात् सन्तानान्तरतायाः। ततश्च यथा

चान्दने अग्नावनुमित्सिते सामोदत्वं धूमस्य यदि लक्ष्यते, तत् वह्निमात्रं सिद्ध्यति; न चान्दनोऽग्निः। यावत् साध्यं साधनधर्मस्य येन विना न सिध्यति, तावति तद्विशेषणं नाम अङ्गीकार्यं चान्दनाग्न्यनुमाने इव चन्दनामोदवत्त्वं धूमस्य, न सिध्यति च परगतत्वात्मकोत्तमपुरुषार्थसहितप्रथमपुरुषाभिधेयविशेषणवत्त्वेन विना सन्तानान्तरम्। अनङ्गीकार्यत्वे कारणं तत् हि, न असाध्यसिद्धिनिबन्धनत्वम्। तद्विरुद्धं च इदमिति कारणविरुद्धोपलब्धिः। यथा च चान्दनत्वापेक्षया चन्दनामोदो न विशेषान्तरं तत्परिहारेण अनासीनत्वात्। तदेव हि तदपेक्षया विशेषान्तरं, यत् यत्परिहारेण आस्ते चान्दनत्वमिव तार्णत्वापेक्षया। अन्यथा गोत्वादपि शाबलेयो विशेषान्तरं स्यादिति सामान्यविशेषव्यवहारो हीयेत, द्वयोरपि गोशाबलेययोर्विशेषत्वापत्तेः। विशेषयोश्च सामानाधिकरण्यं कथं स्यात्। अस्ति च तत्—गौः शाबलेय इति। तस्मादन्योन्यं विशेषव्यवहारस्तद्व्यापकभावेन परिदृष्टात् नियमात् विरुद्धमनियमं प्रसक्तमवलोक्य विपक्षात् तत्परिहारानवस्थानात् निवर्तमानस्तत्परिहारासीनत्वेन व्याप्यते। तद्विरुद्धं च तत्परिहारानासीनत्वम्, इति व्यापकविरुद्धोपलब्धिः। एवं प्रकृतेऽपि व्यापारव्याहारादेर्मैत्रकर्तृकस्य चैत्रात्मके परप्रमातरि परसन्तानरूपे यत् गतत्वं, तदाभासरूपत्वं मैत्रोऽयं व्याहरति,—इत्येवंरूपं प्रच्युतास्मदर्थविश्रान्तिप्रथमपुरुषाभिधानोचितं तन्मैत्रीयव्यापाराद्याभासस्य उत्तमपुरुषोचितस्य व्याप्रिये इत्येवंरूपादन्यो न विशेषस्तत्परिहारेण अनासीनत्वादिति। ततश्च यथा धूमात् चान्दनेऽग्नावनुमित्सिते धूमस्य चन्दनेन्धनप्रभववह्निकार्यत्वमवश्यापेक्ष्यं, तच्च चन्दनामोदवत्त्वप्रभावादेव संवेद्यं; तथा हि तदामोदवत्त्व-

ग्रहणाय घ्राणीयं प्रत्यक्षं प्रभवति,—इति अन्तःपुरवर्तिनश्चान्दनहुतभुजः सुरभिधूमयोरस्मि प्रत्यक्षप्रभायोद्भूतेन विकल्पेन व्याप्तिग्रहणम्। अनुमानकालेऽपि आमोदमाधुर्यविशिष्टधूमावभासः। एवमेव चाक्षुषघ्राणीयदर्शनप्रत्ययोदितमेलनाविधायिविकल्पस्वभावः समयति,—इति सिध्यति विशिष्टान् सुरभेर्धूमात् चन्दनेन्धनो धूमध्वजोऽग्निकार्यत्वग्रहण इति चान्दनाग्निकार्यत्वग्रहणे व्याप्तिग्रहणवेलायां प्रमाणान्तरमुपयुज्यते। तच न संभावनीयम्। एवमिह प्रकृतेऽपि। नच तत् प्रकृते निर्वहति। विशेषतो हि अत्र परसमीहा अनुमेया। अन्यथा समीहामात्रमनुमेयं चेत्, पिशाचप्रायोऽपि समीहिता चैत्रेये व्यापाराभासे सिध्येत्। अथ अनुमातृप्रमातृस्वसंवेदनवेद्यमानतथाहंरूपाभासनिष्ठैव समीहा सिध्यति, तर्हि प्रमातृसदृशे अनुमातरि तत्सक्रान्तमैत्राभाससदृशगतव्याहाराभाससद्भावात् समीहासदृशं सिध्येत्,—इति तावतामनुमातॄणामेकप्रमातृनिष्ठत्वेन यो व्यवहारमेलनलक्षणः संबन्धः, स न स्यात्। अनेनैव च न्यायेन अनुमितेऽपि घटाभासवति प्रमात्रन्तरे घटाभासस्य भेदादेकत्र घटाभासे क्रयविक्रयव्यवहारो न उभयोर्व्यवहर्त्रोर्भवेत्,—इति पुनरपि महाभूतमस्त जगत् न जायते। तस्मात् परसमीहायां चान्दनानलतुल्यायामनुमेयायां सुरभिधूमचान्दनाग्निग्रहणवत् व्याप्तिग्रहणकाले परगतत्वेन व्याहाराभासस्य परत्वेन न समीहाया ग्रहणं समानकालव्यवहारकारिविकल्पव्यवहरणीयमुपयुज्यते। नच अस्ति परगतत्वम्। परसमीहारूपत्वे हि साहित्यवृत्तिविच्छेदाविच्छेदप्राणे परनिश्चयपूर्वकं मनश्च सन्तानान्तरलक्षण इह अनुमेयपक्षे वर्तते इति अन्योन्याश्रयम्। एवमनुमानकालेऽपि मैत्रात्मकचेतनरूपपरसन्तानसमवायी व्याहरामि अहमिति

मूलभूमौ तावदयम्; ततो मयि संक्रामन् संनिविष्टोऽयं व्याहाराभासो व्याहरति,—इत्येवं परसन्तानगतत्वं नाम विशेषणं प्रमाणान्तरनिर्ग्राह्यम्। नच प्रमाणान्तरमत्र क्रमते परसन्तानस्य अत्र अवधावनवगमात्। अवगमे तु अनुमानैर्थक्यापत्तिः। तत एव अनुमायामितरेतराश्रयम्। ततश्च परसन्तानगतत्वं तावत् दुर्ज्ञानम्। ज्ञातेऽपि परसमीहाकार्यमेतद्व्यवहाराभासरूपमित्यत्र अर्थे व्याप्तिग्रहणावधौ नास्ति प्रमाणम्। तदेतदाह **'नच परसन्तान'** इत्यादि। इयता च अङ्गीकृतेऽपि परसमीहाकार्यत्वे तत्र प्रमाणं नास्ति,—इति उक्तम्। अधुना तु स्वसन्ततौ व्याहरामि,—इत्येवंभूतस्य परसन्तानगततया व्याहरति,—इति आभासस्य या परगतता समीहितृविच्छिन्नस्वभावता, सा समीहाकार्यैव न भवति,—इति बाह्यार्थवादी ब्रूते **'व्याहाराभासस्य'** इत्यादिना। मैत्रस्य तावत् वस्तुस्थित्या एवं समीहा व्याहरेयमिति, ततो व्याहरामीति आभासः स्वसन्तानगतस्तस्य उदेतु तावत्। यस्तु चैत्रविश्रान्तो मैत्रो व्याहरति,—इत्येवंभूतः परसन्तानगतो व्याहाराभासः स तावत् न मैत्रस्य संबन्धिन्या समीहया कार्यः। असमीहितो हि असौ। ननु विशेषसमीहायां सामान्यमपि समीहितम्। सत्यं, तत्तु समीहितैकतमविशेषशरीरमेव समीहितं भवति। अन्यथा स्वातन्त्र्येण अस्य समीहितत्वे कुम्भकारेच्छया त्रैलोक्यं कुम्भानां पूर्णमवलोक्येत। न च एवं, तत इदमापतति—बलादेव सामान्यमुखायामपि समीहायां कश्चिदेव विशेषः समीहितः, फलतो योऽसौ विशेषान्तरतिरस्कारेण उद्यन् दृश्यते। तदमुना प्रकारेण यद्यपि सामान्यं समीहितम्, तथापि स्वात्मवर्ती यो व्याहाराभासो व्याहरामि—इत्येवं-

रूपः, स सत्यं समीहाजन्यत्वेन प्रसिद्धः । यत्तु अनुभाव-
समर्थो यश्चैत्रलक्षणः समीहितृसन्तानात् परोऽन्यः सन्तानः,
तद्गतत्वं व्याहरति अयं मैत्र इत्येवमाभासनोचितं व्याहारस्यैव
विशेषरूपम्; तत् कस्य जन्यं भवेत् । न चैत्रस्य, न मैत्रस्य,
द्वयोरपि तत्र नास्ति समीहा । यतः समीहा च यदि एवं कर्तुं
प्रभविष्णुः—मयि मैत्रे यो व्याहरामीति आभासः तत्समये
एव चैत्रे मैत्रो व्याहरतीति आभास उदेतु-इति; तर्हि यदा
एवं मैत्रः समीहते—मयि यो विच्छेदविरहितो व्याहरामीति
आभासः, स चैत्रेऽपि अविच्छिन्न एव उदेतु-इति, तदा चैत्रोऽपि
एव मैत्रोऽहं व्याहरामीति अविच्छिन्नाभासभागी भवेत्, तदि-
च्छातोऽद्भुतचेष्टाप्रसिमारविषया यशोर्जनकाम्यया सदैव विश्वं
तदाभासवत् स्यात्, उच्चारदं च न केनचित् दृश्येत । अनु-
स्यादृच्छा हि तत्र सम्भवेत् । न च एवमस्ति । तत् न समीहा-
कार्यः परसन्ताने विच्छेदयुक्तो व्याहाराभासः । तत् तस्य
न समीहाकार्यं, यत् समीहान्तरे न अन्यथा भवति पट इव
कुविन्दस्य । तथा च विच्छिन्नाभासो व्याहारो मैत्रस्येति न
समीहाकार्यः । समीहाकार्यत्वं समीहान्तरे अन्यथाभवनेन
व्याप्तं हस्तस्य इव मुष्टीकरणम् । अन्यथा सर्वं समीहाकार्यं
सर्वस्य स्यात्,-इति सुकृतदुष्कृतस्वस्वामितादिसङ्करोऽनन्व-
शानः । तच्च व्यापकमन्यथाभवनमिह न उपलभ्यते,-इति
व्यापकानुपलब्धिः । तदेतदुक्तं 'परत्र च' इत्यादिना । परस्य
मैत्रस्य समीहया सामान्यविषयया अपि विशेषं स्पृशन्त्या
व्याहरणाभासः परत्र चैत्रसंवेदनेऽपि अविच्छिन्नत्वेन व्याहरा-
मीति अमुना रूपेण जन्येत, न च एवमिति न समीहाकार्यत्वे
प्रमाणमस्ति परगततायाः । एतदेव अभिप्रायापगर्भीकारेण

उपसंहरति **'एवम्'** इति। यदेतदुक्तं, **'तत्'** इति तस्मात् हेतोरेतत् लब्धम्—यत् किल समीहितादिविशेषत्यागे यद्व्याहरणाभाससामान्यं तद्द्वारेण अपि इतराभासेष्टश्चैत्रगतो यो विच्छिन्नो व्याहरणाभासो मैत्रसन्तानगतेन व्याहरामीति आभासेन सहैव भवन्, अत एव न तत्कार्यत्वेन शंक्यः। तत्समीहायास्तत्सन्निधितराभासे कारणता नास्ति। नापि तामिष्टिमपेक्ष्य तस्य इतराभासस्य कार्यता अस्ति। व्याहरामीत्येवमाभाससहभावेन च य इतराभासो यो व्याहरतीत्येवंरूपः, स इच्छाकार्यं नैव भवति, तावति न इच्छा कारणमसमीहितत्वात् तावतः। ननु समीहितत्वमसमीहितत्वं च यदा न अपेक्ष्यते, अपितु व्याहरणाभाससामान्यमात्रम्; तदा परगतेन तेन इतराभासेन सह मैत्रगतायाः समीहायाः किं न कार्यकारणभावः। सत्यं, यदि सा विशेषानपेक्षा निर्वहेदिति दर्शयति **'स्वगतमेव'** इति। योगसिद्ध्यधिकरणनीत्या हि सामान्यमपि अभिसन्धीयमानं विशेषनिष्ठतायामेव पर्यवस्यति, इह च संवेद्यते एव विशेषनिष्ठता येन ष्ठीवेयमिति इच्छा भवन्ती प्रयत्नेन श्लेष्मावृतं स्थानं आन्तरावयवविशेषसंयोगिना वेगवता पवनेन करणेन अभिहत्य श्लेष्माणं क्रियाद्वारेण ततो विश्लेष्य समीहान्तरव्यवधानेन ष्ठीवामीति बहिर्निरसनं श्लेष्मणः संपादयति। ननु एवं चैत्रसन्ताने भवति। मैत्रस्य इच्छया स्फुटत्वात् अस्य अर्थस्य ष्ठीवनमुक्तम्। ष्ठीवनशब्दः शिष्टप्रयुक्त इति न असाधुः। तत एव चन्द्राचार्यः 'ष्ठिवषिवोर्दीर्घश्च'(१।३।९८) इति अवोचत्। तस्मात् विशेषाभिसन्धानं सामान्याभिसन्धावपि नान्तरीयमेव, विशेषश्च इह ष्ठीवामीति अविच्छिन्नरूप एव समीहितः। ततो युक्तमुक्तमसमीहितेन चैत्रगतेन विच्छिन्नाभासेन सह मैत्रसमीहाया

नास्ति कार्यकारणभाव इति । अविच्छिन्नाभासजन्योऽसौ चैत्र-गामी विच्छिन्नाभासो भविष्यतीति च न वक्तुं शक्यं, तयोः सद्भावनैयत्ये कार्यकारणतायोगात्,—इति अधिकस्य अर्थस्य अत्र आवापः। इष्टिशब्दो भाष्यकारवचनात् साधुः 'अग्रेष्टिः' इति, अन्यथा क्रियामिति वा सरूपत्वाभावे क्तिन् इत्यनेन बाध्येत भाष्यकारीयं करणसाधनम्। तत्र 'श्रुयजीषिभ्यः' इति औपसंख्यानिकमिति चेत्, इहापि तदेव भविष्यति । नच अर्थभङ्गः, धात्वभिधेयस्य हि भावनावादे करणत्वमपि फलं प्रति स्वयं च साध्यत्वमिति इष्यते इषिकर्मतया भाव्यते फलम् अनया,—इति इष्टिरित्येव सम्पद्यते। कर्मानपेक्षायामपि इष्यते अनया इति कर्तृसमवायिरूपं धर्षितृत्वमनया भाव्यते। तया हि धर्षिता कर्ता सम्पद्यते इति । एवं तत्र तत्र अयथात्वम्,—इत्यलमवान्तरेण बहुना। इदानीं विज्ञानवादी, स्वाविच्छिन्नव्याहरणाभासेन सह नियमेनैव इतराभासस्य समीहितता अस्ति एव अभिमन्यानभेदादिति दर्शयन् विच्छिन्नाभासतायाः समीहाकार्यत्वं साधयितुमन्वयं व्यतिरेकपुरःसरं दर्शयति 'ननु यत्र' इति । 'अन्यथैव' इति अनपवार्येत्यर्थः । एवमुक्ते विज्ञानवादिना बाह्यार्थवादी तूष्णीकः क्षणं यावत् चिन्तयति, तावदीश्वराद्वयवादी परव्यामोहव्यपोहनरणरणकत्वरितहृदयः स्वकरावलम्बनप्रत्याशया बाह्यार्थवादिना सह्यमानो वस्तुपरमार्थं प्रदर्शयिष्यते, तत् न सहते 'तदेतत्' इत्यादिना । यद्यपि मैत्रस्य तथा समीहा चैत्रेऽपि—मैत्रो नृत्यति धीयति,—इति आभास उत्पद्यताम्—इति तथापि चैत्रः कथं जानीयात्—अनपवार्य यदिदं नृत्तं, तत् परसमीहाकार्यं भवति—इति । नहि अनेन परसमीहाया अद्यापि नाम ज्ञातम् । अनेनैव न्यायेन चैत्रं

परमजानतो मैत्रस्यापि कथं तथा समीहा भवेदिति चिन्त्यम्। ननु स चैत्रोऽपि यदा भगवन्तमभिपूज्य रेचकाङ्गहारैः परितोषयितुं नृत्यति, तदा संवृतेऽवकाशे निर्जने च। यदा तु सप्रीतिगोष्ठीप्रमुदितः प्रियतमया चैत्रेण च मैत्रेण सह नृत्यति, ननु तौ ततो निर्गमय्य; तदा प्रिया अपि पश्यतु, मैत्रोऽपि पश्यतु इति,—भवति अस्य अभिसन्धानम्। तत् स्वात्मनि व्याप्तिरनेन गृहीता अनपवारणपूर्वकतदाचरणस्य परविषयतावगमनाभिसन्धानस्य च। एतदपि कथम्। तथाहि—स्वयमनपवार्य यत् नृत्यति उद्गाहयति वा, तत्र अस्य अभिसन्धानमस्ति। मैत्रोऽपि पश्यतु,—इति यदुक्तम्, तदेवमुपपद्येत यदि मैत्रशरीराभासे समीहारूपे द्रष्टृतास्वभावं जानीयात्। स्वात्मवर्तिकार्यकारणभावजिघृक्षासमयेऽपितु कथं परसन्तानज्ञानम्। दृश्यतां हि यदा पामरकदासेरकावन्योन्यं क्षीवतो वादिनावुद्गाहयतो युवानौ नृत्यतः, तदा अयं पर एतत् जानातु,—इति यदभिसन्धानम्; तत् परप्रमातृज्ञानपूर्वकम्। परज्ञानं च तथाभिसन्धिजनितनृत्ताभासज्ञानपूर्वकमिति अन्योन्याश्रयम्। तदाह **'तथाभूत'** इति। परत्र उत्पद्यतामयमाभासः,—इत्येतदभिसन्धानजनितोऽयं व्याहाराभास इत्येवं निर्ज्ञातात् ततः प्रमात्रन्तरस्य निश्चयः कर्तव्यः। एवं निर्ज्ञानं च परप्रमातरि ज्ञाते तस्मिन् ज्ञाते स्वात्मनि अभिसन्धानमुचितं परत्र उत्पद्यतामयमाभास इति। ततश्च अनपवार्यचेष्टा, ततो व्याहाराभासजन्म, ततः कार्यकारणभावनिश्चयः, परप्रमातृज्ञानं च यथोक्तविशेषात् व्याहाराभासात्,—इति। अतोऽन्योन्याश्रयं विशिष्टस्य व्याहाराभासस्य विशिष्टया समीहया सह कार्यकारणभावग्रहणावसर एव परगताभासोत्पादनाभिसन्धानस्य परगतनृत्ताद्यवभासानां समीहितृविच्छेदेन

उच्यतां च प्रमाणान्तरादनुमानव्यतिरिक्तादनुपयुज्यमानव्याप्ति-
ग्रहणात् कुतश्चित् प्रत्यक्षप्रायात् कार्यकारणभावो यदि अवगतः
स्यात् धूमस्य अग्नेश्च यथा । तदन्येन धूमेन यथा अग्न्यन्तरस्य
अवगमः, तथा अन्येन विच्छिन्नवृत्त्यवभासेन अन्यस्य
प्रमातुरवसानं घटेत, नच एतदस्ति,–इति दर्शयति 'यावता'
इति । 'अन्यतः' इति प्रत्यक्षात् । आगमो हि व्याहाररूपो-
ऽनेन सम्यग्वेदिना इदं परमगाढरूपानस्मान् बोधयितुं कृतं,
परतः संपादादिपूर्वकमुक्त, व्याख्यातमनुष्ठितं चेति कार्यो वा
लिङ्गो वा परस्पर परभूतप्रमातृनिश्चये सति एव भवति,–इति ।
ततोऽपि परसन्तानावगमे अन्योन्याश्रयमेव । एवं प्रमाणवृत्तम-
विचार्यैव वस्तुवृत्तेरभवन्नपि तथाभूताभिसन्धानेन सह विच्छि-
न्नव्याहाराभासस्य कार्यकारणभावो ज्ञातुं न शक्य इति उप-
पादितम् । अधुना तु अन्वयव्यतिरेकासंभवात् वस्तुवृत्तेन असौ
न भवति,–इति प्रकटयति 'न च' इति । नच युक्तेति संबन्धः ।
व्यतिरेकाभावं दर्शयति 'तथा' इति । बालो रुदन् न अभि-
सन्धत्ते–परः शृणोतु–इति एकाकित्वेऽपि जनाकीर्णत्वेऽपिवा
कुतश्चित् दुःखादसावव्यक्तध्वनिना रुदन्नुपलभ्यते, नच तत्र
रोदनाभासो न उत्पद्यते । ननु मा द्राक्षीत् इति अभिसन्धाने-
ऽवश्यमावरणापसारणादिना भवितव्यम् । तत्र च तदनुत्पत्ति-
रस्त्येव, कः प्रसङ्गार्थः । अयं भावः—एवमुच्यमाने अपवारणेन
सह वस्त्राभासोदयस्य कार्यकारणता स्यात्, न अभिसन्धिना,
स च इह अनुमेयत्वेन प्रक्रान्तः । आवरणोपसंहाराभासोऽभि-
सन्धेः कार्यं इति चेत्, तत्रापि आवरणं चैत्रोऽप्युपसंहरति,–
इति चैत्रेय आभासः, तस्य आवरणान्तराभावादिविशेषान्वेषणे-
ऽनवस्थेति न किञ्चिदेतत् । मा द्राक्षीदिति च अभिसन्धानेऽपि

आवरणोपसंहारयोगेऽपि सर्वज्ञक्रिमिप्रभृतिप्रमात्रन्तरगताभास-सहस्रोदयः,—इति नैव तथाभिसन्धानाभावे तथाभूताभासानुदयो युक्तोऽव्यतिरेकात्। यत एवं विज्ञानवादिन एतत् न उपपद्यते, **'तत्'** इति तस्मात् हेतोरस्मन्मतमेव अयं स्वेच्छया पतति गच्छति धावति,—इत्येवं लोकेन यदपदिश्यते पतनाद्यस्मदर्थ-विश्रान्तं कुड्यादिपतनविलक्षणं प्रमात्रन्तरप्रतिभासाक्षेपकं तेन कृतसाक्षिकमवलम्बनीयम्। किं तत्। आह, बुद्ध्या ज्ञानेन उदितया समीहया इच्छया प्रयत्नपर्यन्तया युक्तो यः प्रमाता मैत्रः, तस्मादविच्छिन्न एव यो व्याहरामीति आभासः स्वात्मनि प्रत्यक्षप्रतिभासी तत एव आन्तरस्पर्शनाद्यवगतस्थानकरणाभि-घातकारणोपयोगक्रमेण उत्पद्यमान इति अवधारितः; तस्मिन्नेव यतश्चैत्रः प्रमाता परमेश्वरेण आभासान्तरैक्यादुपसंहृत्य एकी-भावेन सृष्टः

'मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः॥'(स्त०चि०११२)

इति

'सदासृष्टिविनोदाय············· ।' (उ०स्तो०२२।९)

इति च न्यायेन, ततः सोऽपि सर्वं मैत्रवदेव अवबुध्यते, परतस्तु शरीराद्यहंभावदार्ढ्यात् स्वपरविभागगणनापगमात् विक-ल्पयति—मैत्रो व्याहरति—इति एवमीश्वरवादिसंमतमेतदिति उपसंहारग्रन्थादस्मात् मन्तव्यम्। यदि तु बाह्यवादिमतत्वेन तदेतत् **'मन्दमति'** इत्यादि योज्यते, तदा उपसंहारो न इह श्लिष्यति। एकरूपता तावत् व्यवहारस्य अनेन उक्ता। सा च बाह्यतायामपीति लब्धोच्छ्वासो बाह्यवादी आह **'एवंच'** इति। तत एव तद्देशकाले यथावभाते चैत्रस्य मैत्राभासे प्रवृत्ति-

युक्ता । अपरथा कम्पते मैत्र इति यश्चैत्रस्य आभासस्तद्देशाभाससहितः, स प्रमातृलोकस्वमैत्राभिधानप्रमात्रन्तरजनितो न भवति,—इति कुतो निश्चयः । एतावदेव हि तदा स्यात्—यदि अत्र आभाति स्वरूपबहिर्भूतमिव च, तदन्यतः संक्रान्तं दर्पण इव घटादिः । अतादृशस्य अन्यतोऽसंक्रमणे विपक्षे बाधकमस्ति स्वरूपबहिर्भावविरुद्धं तत्स्वरूपत्वं स्वच्छताया इव दर्पणनिष्ठाया,—इति स्वभावविरुद्धोपलब्धिप्रसङ्गात् विपक्षतो हेतुर्व्यावर्तते, इति साध्येनैव व्याप्यते । चैत्रप्रमातरि च आभाति व्याहारः स्वरूपबहिर्भावेन—मैत्रो व्याहरतीति, तदनेन अन्यतः संक्रान्तेन भवितव्यम्,—इति स्वभावहेतुः । अन्यश्च तद्देशतत्कालत्वादिना दुरवधार एव । दर्पणे तु बिम्बमपि प्रत्यक्षान्तरसिद्धमेव इह तु न तथा । दर्पणे च प्रतिबिम्बस्य बिम्बानन्तरभाविता न बिम्बयौगपद्यम्, इह तु यौगपद्ये कथं समर्प्यसमर्पकभाव इति स्यात्,—इति अनवक्लृप्त्या द्योतयति ।

'तत्रापि दर्पणे दृष्टं यौगपद्यमाशुभावो वा'

इत्याशयेन तु पक्षो यत्र न उत्तिष्ठति इति 'स्यात्' इत्यनेनैव द्योतयति, नापरस्य स्यादिति । तत् सत्यमुक्तम्—

'न देशकालनियमः सन्ताननियमो न च ।
न च कृत्यक्रिया युक्ता विज्ञप्तिर्यदि नार्थवः ॥'

इति । एवं तद्देशत्वाद्यनवधारणदोषमुक्त्वा दोषान्तरमपि विज्ञानवादिन आपादयति 'एवंच' इति । चः समुच्चये । दोषान्तरस्य अनेनैव व्याहरतीति आभासो व्याहरामीति आभासनबिम्बभूतेन प्रतिबिम्बभूतः पृथग्भावेनाभासमानः समर्पितः, इति न्यायेन घटाभासोऽपि अहंभावपृथग्भावेन अस्मदर्थसामानाधिकरण्यमसहमान इदं भवति,—इति प्रथमपुरुषौचित्येन

स्थितोऽन्यगतेन केनचित् समर्पित इति आयातम् । तत्र च प्रत्युत दोषः—सर्व एव प्रमात्रन्तरवर्तिन आभासाः समर्पकाः प्राप्ताः विशेषाभावात् । दर्पणद्वयेऽपि हि अन्योन्यप्रतिबिम्बार्पणेऽसंख्यप्रतिबिम्बोदयः, किमङ्ग प्रमातृकोटिपरार्धानामन्योन्यप्रतिबिम्बार्पणे । तदाह **'अपर्यवसानं स्यात्'** इति । किंच समर्पकसंमतोऽपि प्रमात्रन्तरवर्ती असावाभासोऽस्मदर्थविश्रान्तिवैलक्षण्येन इदमिति निर्भासमानः पृथग्भावाभिमानयोग्यत्वात् प्रतिबिम्बकल्पः,—इति तस्य अपि अर्पकेण भाव्यम्, तत्रापि एवम्,—इति अनवस्था, तत्परिहाराय तु पर्यन्ते घट एव अस्मदर्थसंभिन्नः सकलप्रमातृव्यतिरिक्त आभासनसारोऽभ्युपगन्तव्यः 'अहं घटो भासे' इत्येवंरूपः । तत्रापि च घटता यदि न अधिका, तदहं घटः, अहं पट इति निर्भासमानयोर्घटपटयोरैक्यमेव स्यात् । अधिका चेत्, तत्रापि प्रतिबिम्बतेति बिम्बेन अन्येन भवितव्यमाभासरूपताशून्येनेति बाह्य एव अर्थः सिद्धः । अनेन आशयेन उक्तम् **'अपरोऽयं बाह्यार्थवादप्रकारो ज्ञानवाद्यानाम्'** इति । तत्र च अङ्गीकृते बाह्येऽर्थे किं प्रमात्रन्तराभासानां प्रमात्रन्तराभाससमर्पकतया प्रत्युत अपर्यवसानदूषणानुबन्धिन्या । स एव बाह्योऽर्थः सर्वेषामाभासार्पको भविष्यति,—इति अपर्यवसानदोषपरिजिहीर्षां परकीयां शंकते **'अथापि'** इति । वासनाप्रबोधमात्रे तेषां व्यापारो न स्वप्रतिबिम्बार्पणे, वासना च घटसहस्रैरपि पूर्वघटानुभवजनिता प्रतिबोधिता तमेव एकं पूर्वानुभूतघटाभासमुन्मेषयति, ततो न अपर्यवसानात्मा आभासानामतिप्रसङ्गः । **'ननु'** इति । आभासान्तराणि परोक्षाणीति न तत्र तादृशदर्शनसंभावनमस्ति, पूर्वानुभूतदेशस्य घटाभासस्य च उन्मेषः स्यात्, देशकालाननुन्मेषे

वा घटभासस्य । पटद्वयादेस्तु पूर्वाननुभूतस्य कुत उन्मेषः । ननु घटद्वयाभासोऽपि अभूत्, तद्वासनैव प्रबुध्यते । सत्यं, तद्देशकालाकारसहचरप्रमान्तरादिति विशेष्यत्वं तु न कदाचिदाभासस्य अभूत्,–इति तद्विशिष्टघटाभासवासनाया एव अभावात् कुतः प्रबोधो भविष्यति येन तद्रूपमाभासोदयो भवेत् । पृथग्वासनाप्रबोधे विशेषणविशेष्यतानियमोऽयद्वयमपूर्वोऽवभासते तद्वासना च नाभूदेव कुतस्तु प्रबोधोऽधिपतित्वेनेति, अनिर्भासमानत्वेऽपीति यावत् । '**प्रबोध्यते**' इति व्याचष्टे '**तथाभास**' इत्यादिना । एवमभिधाक्रमे सति तद्वस्त्वभिधीयमानम् इति उक्तं स्यात् । एव रूपमुक्तं भवेत् । किंरूपम् । आह '**प्रमान्तर**' इत्यादि '**इति**' इत्यन्तम् । '**पूर्वं प्रसङ्गः**' इति आभासपर्यवसानमधिपतित्वं च प्रकृते न उपपद्यते इति दर्शयति तुशब्देन '**अधिपतिस्तु**' इति । '**दृष्टः**' इति मद्दर्शने । ननु सूत्रे हेतुः प्रबोधकः किमिति उद्भाव्य न दूषितः । आह '**बाह्यार्थवादिभिरेव**' इति । अपूर्वं हि अत्र उच्यते । कृतश्च अत्र प्रयासो बाह्यार्थसिद्ध्यादावुपाध्यायधर्मोत्तरादिभिः । तथाहि अहंकारात्मकमनःसप्तमानां शब्दादिसुखादिविज्ञानानां जनिका याः शक्तयो वासनाख्यास्तदाधारभूतमेकमालयविज्ञानं स्वापमदादौ प्रवृत्तिविज्ञानसप्तकाभावेऽपि सन्तानवृत्त्या वर्तमानं तत् स्वसन्तानवर्तिनो निमित्तस्य अभावात् परसन्तानानां च सदा सन्निधानात् कथं क्रमेण प्रवृत्तिविज्ञानानि कुर्यात् । तत आह '**दृश्यते च**' इति । अत्र चकारः समुच्चये । न केवलं पूर्वोक्तोऽत्र अभिप्रायः, यावदयमपीति पूर्वसूत्रे च उक्तो न्यायः–इन्द्रियवदधिकं किंचित् कल्पनीयं, स बाह्योऽर्थः । 'पदार्थः

'..............बाह्यसिद्धिः स्यात् व्यतिरेकतः ।'

इति । ननु ईश्वराद्वयवादिना अपि स्वपक्षे दोषानापत्तिरुक्ता । सत्यं, सकललोकप्रसिद्धविज्ञानवाह्यवस्तुवादोऽपि यदि न घटेत, तदीश्वराद्वयवादशरणता समस्तगतिक्षये सत्यं प्रामाणिकानां युक्ता, घटते च असाविति किमलौकिकदुरारोहवादान्तरारोहणप्रयासेन । तदाह **'ईश्वराद्वय'** इति ॥ ५ ॥

एवं वाह्यार्थवादिना विज्ञाननये प्रतिषिद्धे **'चेत्'** इत्यनेन वाह्यार्थसंभावनायां दृढीकृतायामीश्वराद्वयवादी आह

**स्यादेतदवभासेषु तेष्वेवावसिते सति ।**
**व्यवहारे किमन्येन बाह्येनानुपपत्तिना ॥ ६ ॥**

'किन्तु' इति वाक्यशेषः । संभाव्येत तत् यत् भवता उक्तं, किन्तु भवदुक्तसंभावनातोऽपि दृढतमसंभावनान्तरमस्ति । यदिवा तव इयं तावत् संभावना तद् दृष्टेऽपितु, **'एतत्'** इति वक्ष्यमाणं यदस्माभिरिदमधिकं संभावनायोग्यम् । किं तत् । आह **'तेष्वेव'** इति । इह निराकरणे कथं तस्यैव ग्रहणमेकसामग्रीकत्वमिन्द्रियादावपि समानं, परस्य च न परनिष्ठता युक्ता[१] परत्वस्य अनन्यनिष्ठताप्राणत्वात्, तदनात्मप्रकाशनं स्वभाव एव बोधस्येति अयुक्तम् । यत् बाधितं, तत् स्वभाव एव न, पीतिमा इव शङ्खस्य । बाधितं च ज्ञानस्य अन्यनिष्ठत्वमिति स्वभावताव्यापकस्य अबाधितत्वस्य विरुद्धमुपलभ्यते इति । तदवश्यं सत्यपि बाह्येऽर्थे तत्समर्पितेषु आभासेषु भवता अपि अङ्गीकृतेषु **'तेष्वेव'** इति च निःसपत्नतया विजृम्भमाणेषु । एतदुक्तम्—अनुमितोऽपि बाह्योऽर्थः प्रकाशमान एव वक्तव्यः, प्रकाशाद्भेदे(द्भेदे)हि अप्रकाशनप्रसङ्गादनुमितत्वमपि वस्तुनो मूर्छा-

१ क. 'न युक्ता' पाठः ।

ग्राह्यं भवेत् । अत एव प्रमाणान्तरमपि अनुमितमनुमानसंविद्-भ्येत् भिन्नमस्ति, तत्र सहोपलम्भनियमवैचित्र्यादिर्हेतुरनैकान्तिकः स्यात्, ततश्च अस्ति तावत् सम्भवः—यत् विज्ञानबाह्यं चकास्ति इति नीलादयोऽपि बाह्या भवेयुः, न च एतदुचितमनाभासन-प्रसङ्गात्, अध्यक्षश्च प्रकाशः, तद्भिन्नमध्यक्षसिद्धमिति असत्, एवमेकराज्येन ये विजृम्भणयोग्या आभासाः, न च अनुपयोगि-नस्तैरेव अन्योन्यं व्यवहारात्, कल्पितेषु अपि बाह्येषु तदाभा-सेनैव भासमानैः क्रयविक्रयदानप्रतिग्रहाभासादिर्व्यवहार इति तेषु समाप्ते व्यवहारे अन्येन प्रमाणातिरिक्तेन तत एव अप्रमा-णत्वात् निष्प्रमाणकेन बाधकप्रमाणनिरस्तेन च बाह्यार्थवर्गेण किमधिकेन अन्विष्टेन,—इति सूत्रार्थः । 'अर्थैः' इति बाह्यतया अपि कल्पितैः । बाह्यश्च अर्थः सावयवनिरवयवोभयविलक्षणो विरुद्धधर्माध्यासादिकं दूषणमवलम्ब्य प्रमाणबाधितः । अवय-विनि दूषिते तदङ्गकमानुमेयानां परमाणूनामपि अभावः । दृश्यमानद्रव्याभावे तन्निष्ठगुणकर्मसामान्यादेः का वार्ता । तद-भावे कः समवायः । दृश्यमानकार्यगतविशेषोपयोगितया च आत्मकालाकाशादीनां कल्पनेति तदभावे न किंचित् बाह्यमस्ति । यत् सूत्रं मुनेः—

'सर्वाप्रसिद्धिरवयव्यसिद्धेः' (न्या० सू० २।१।३४)

इति । **'निरवयवश्च परमाणुरूपोऽर्थः प्रमाणबाधितो बहुभिर्बहुभिः प्रकारैः षड्योगादिकं विकल्प्य'** इति वृत्तिग्रन्थस्य योजना । एतत् सर्वं सक्षेपेण अवतारयति **'व्यव-हर्त्रपेक्षया'** इत्यादिना । व्यवहर्त्रैव अन्विष्यते वस्तुतत्त्वम् ।

---

१ क. ख 'चा' पाठ ।

न हि तदन्वेषणं व्यसनमात्रम्। **'निरपाय'** इति अपायः प्रमाणाभावो दूषणसंभवश्च, तद्रहिता **'अधिकतर'** इति आभासा एव दर्पणात् प्रतिबिम्बानि इव संवेदनादधिकानि, यच्च ततोऽपि अधिकतरं न कचित् भावि तत एव दृष्टं, तच्च वस्तु कथं स्वच्छन्दचेष्टितमिति न प्रमाणबलोपनतमित्यर्थः। दृष्टं च इदं प्रामाणिकानाम्—यत् सत्यपि वस्तुनि अनुपयोगिना अंशेन न प्रयस्यन्ति विचारितेन यथा इन्द्रियादिषु षड्धातुसमीक्षाकाराद्यो वा(वा)-र्हत्यो वा। ऐतैर्हि 'भूतपञ्चकं चेतना च'इतीयति व्यवहारसमाप्तिरङ्गीकृता तत्रैव अन्यस्य इन्द्रियादेरनुप्रवेशात्। अन्यैरपि भूतचतुष्टये विचित्रमेलनोदितसंवेदनाख्यविकारविशेषेऽनुदिततद्विकारे च ग्राहकग्राह्यव्यवहारसमाप्तिरुपगता। **'यथैव'** इत्यस्य **'तथैव'** इत्यनेन संबन्धः। **'स्यादेतत्'** इति संभावनां सौत्रीं व्याख्यातुं दृष्टान्तद्वयोपादानम्। **'अनङ्गम्'** इत्यनेन **'किमन्येन'** इति सौत्रं व्याख्यातम्। अनुपयोगिनोऽपि वस्तुनो विचारचञ्चुरन्विष्यतात् तत्त्वम्, इह तु बाह्येऽर्थे इदमपि नास्ति,—इत्याह **'नापि'** इति। अनेन **'अनुपपत्तिना'** इति विभक्तम्। **'प्रतीतिपरम्परात्मक'** इति। क्रयविक्रयादेरपि तथाप्रकाशनमेव प्राणाः। यदेव इदमस्य इत्थं प्रकाशते तदेतेनैव मम प्रकाशमानस्य प्रकाशमानतायामेव अर्थक्रियायामुपयोगः। तदनेन उभयोः प्रकाशमानेन मूल्येन स्वोपयोगं प्रकाशमेनं करोमि,—इति। **'हि'** यस्मादेवं, **'तत्'** इति तस्मात्। **'बाह्य एव'** इति सौगतैस्तावदध्यवसायबलात् प्रामाण्यं वदद्भिरनुमानमपि बाह्यविषयमेव,—इति उक्तं

'प्रामाण्यं वस्तुविषयं द्वयोरपि······।'

---

१ क० 'एकैः' पाठः.

इति । अस्मन्मते तु विकल्पस्य अपदर्यं वस्तुनिष्ठत्वमेवेति उक्तं

'भ्रान्तित्वे चावसायस्य ......।' (१।३।५)

इत्याद्यन्तरे । तत एव यदाह बाह्यवादी—विकल्पस्य असत्यप्रकाशनत्वमिति, तदस्मन्मते निरवतारणमेव । साराज्ञानवादिना विकल्पः स्वात्मनि प्रकाशः, अर्थे तु अवसायः,—इत्युक्ते कथमसत्प्रकाशनम् । तदास्तां तावत् । 'विकल्पप्रतिभासिता' इति उपलब्धिक्रियाकरणतया सामान्येन्द्रियं, निरतिशयसुखतत्साधनविषयतया स्वर्गः, अनाहतसहजानन्दघनैकसारपूर्णतात्मना अपवर्गश्च अभावमुखमभ्येति एव अन्यथा अभिलषणीयत्वतत्साधनान्वेषणतदुपदेशतदवधारणतदनुष्ठानाद्ययोगात् । यदाह ग्रन्थकृदन्यत्र—

'इष्टार्थितायामिष्टं या विमृश्येतेष्टकारि वा ।
नचाप्यदृष्टमिष्टं चौरपीडा दृष्टभोगभूः ॥'

इति । अर्थक्रियापि च आभासमानतयैव अभिलषणीया,—इति सा अपि आभासनिश्रान्तेति ततोऽपि न बाह्यसिद्धिः । यथाच भट्टः

'आभासभेदे त्वर्थः कः ...... ......।'

इति उपक्रम्य

'यत्फलायेति चेज्ज्ञानं तत्फलेनेति का गतिः ॥'

इति आभासपरम्परामेव व्यवहारोपकरणभूतामवादीत् । ततश्च प्रसिद्ध्यैव बाह्यः सिध्यति,—इति प्रत्युत विपरीतमेतदिति आभासानामेव वस्तुतामभिधाय प्रामाणिकत्वात् स्वयं स्वपक्षे दूषणमाशङ्क्य दर्शयति आशयशुद्धिप्रदर्शनेन अवितार्किकतां वक्तुं 'केवलम्' इति । 'पर्यनुयोज्यमिदम्' पर्यनुयोगार्हम् । किम् । आह 'आभासमानतायाः' इति । 'पूर्वमूर्ध्वं च'

१ क॰ 'निरवतरणं' पाठ । १ क॰ 'तत्फलं चेति' पाठ ।

इति । पुरस्तात् तु न परस्तात् तु न कालाध्वसंकोचमाभासस्य दर्शयन् आभासनमवश्यं भवने च अभवने च निमित्तमपेक्षते । तत् चेत् न अस्ति, तत् निर्हेतुकता । ततश्च कार्यकारणाभावात् घटार्थी न मृदमाहरेत्, न कुम्भकारकुलमभिगच्छेत्, न धूमार्थी हुतभुजमाददीत । कार्यकारणतामूलश्च ज्ञाप्यज्ञापकभावो यतः । प्रत्यक्षेण तावत् जनकस्य एकसामग्र्यधीनस्य वा ग्रहणम् । कार्यहेतोस्तद्भाव एव प्राणाः । स्वभावहेतोरपि—

'एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥'

इति । अयमेव नीतिमार्गः सर्वत्र—इति वक्ष्यते

'कार्यं हेतुः स्वभावो वात एवोत्पत्तिमूलजः ।' (२।४।११)

इति । एतावांश्च व्यवहारः सन्निर्निमित्तकत्वे विघटते । ननु शङ्कितमेतत् दूषणं, किं दूषणमेव । नेत्याह **'एतच्च'** इति ।

'चिदात्मैव हि देव.................. ।' (१।५।७)

इति,

'स्वामिनश्चात्मसंस्थस्य........... ।' (१।५।१०)

इत्याद्युद्देशेषु यत एतदपि अदूषणम्, अन्यश्च दोषो नास्ति, तत एतदायातमिति दर्शयति **'एवंच'** इति इत्यपि यावत्, परमभूमिरागमेषु परमरहस्यापि सती नैव अनाभासमाना भवति, अपितु आभासमानैव,—इति तात्पर्यम् । एतदादिसिद्धसूत्रे च व्याख्यातं, महागुरुभिः श्रीशिवदृष्ट्यावादिसिद्धे समस्तशास्त्रार्थप्रतिज्ञाहेतुरूपत्वेन व्यवहारसाधनप्रमाणप्रदर्शनं स्वप्रकाशेऽपि भगवति निरूपितम् । एतत् तात्पर्येण व्याचष्टे । तत्र यदुक्तं पूर्वं 'पुरुष एवेदं सर्वम्' इति अविशेषेण यदद्वयमुपक्रान्तं, न तत् सम्यगधिरोहति हृदयम् । घटादीनामन्योन्यविलक्षणानां स्फुर-

तामेकरूपत्वमिति हि निर्युक्तिकं सहसैव वचनमात्रेण कः प्रतीयात् । तस्मात् जीवद्बोधसोपानव्यवधानेन अद्वयाभिधानमुचितमिति । तत् सप्तम्या सूचितम् । तत्र आभासस्वरूपत्वेन स्वनिष्ठत्वाभावे जडानामन्यसलग्नतायां तदन्यतादात्म्यपर्यवसायिनां बोधात्मत्वादित्यनेन निरूपितायां व्याख्यातं भवति,– इति हृदये गृहीत्वा घटादीनामिति षष्ठी प्रयुक्ता आभासस्वरूपत्वादित्येतदपेक्षामुख्यत्वेन । स्वातन्त्र्यादेव अनन्यापेक्षस्वात्मपरामर्शरूपत्वादिच्छाशक्तेर्न प्रसरप्रतिघातः, अत एव अनिरुद्धत्वादिच्छाप्रसरस्य दृक्क्रियात्मकः प्रसरो नित्यप्रवृत्तवर्तमानरूपः । यदाह स एव श्रीमान्

'स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ।
तदेच्छा तावती ज्ञानं तावत्तावत्क्रिया तथा ॥'(शि० दृ० १।३)

इति उपक्रम्य

'एवं न जातुचित्तस्य वियोगस्त्रितयात्मना ।
शक्त्या निर्वृतचित्रस्य तद्भागविभागयोः ॥' (शि० दृ० १।६)

इति । अनेन च संविदानन्दात्मनः सर्वत्र एकरूपत्वेन अनपायित्वेन धर्मिरूपेण शक्तिमदात्मना अवस्थितस्य भगवतः स्वातन्त्र्योद्रेकबलेन उन्मेष्यमाणानां च इच्छादीनां शक्तित्वं तिसृणां देवीनां दर्शितं, यतोऽसौ त्र्यम्बक इति प्रसिद्धः । तथाच शतरुद्रियं

'तिस्रो देव्यो यदा चैनं नित्यमेवाभ्युपासते ।'

इत्यादि । अविरतस्फुरणत्वादेव नवाभासयोगाभावात् न तत्र प्रमाणमुपपद्यते उपयुज्यते वा । अत एव न विद्यते आदिर्यस्य तथाभूतः सर्वेषां च आदिभूतः । एतत् व्याख्यातम् 'आदिसिद्धे'

---

१ क० 'स्वरूपत्वात्' पाठ ।

इत्यत्र विस्तरतः। इयता '**स्फुरत्**' इति व्याख्यातम्। शतृप्रत्ययावत्र प्रवृत्तौ। व्याप्नुवन् भवति इति विभुरित्युक्ते व्यापनीयविशेषानभिधानादशेषवस्त्वन्तर्भावेन दर्पणवत् वैश्वरूप्यावभासनसारत्वं विभुत्वमुक्तम्। एवं यतः सर्वेषु भावेषु अहमिति स्वतन्त्रस्ततोऽनिरुद्धेच्छाप्रसरः, ततोऽपि प्रसरद्दृक्क्रियायोगात् प्रकाशविमर्शतादात्म्ययोगेन प्रमाणाद्यनपेक्षोऽकालकलितः, इयता लब्धवैश्वरूप्यस्तदव्यतिरिक्तस्यैव दर्पणाभासवैचित्र्यवदाभासभेदस्य प्रकाशनात्। इयति च सिद्धे पूर्णत्वस्य बलादेव लाभ इति व्यतिरिक्ताकाङ्क्षावैकल्यात्

> 'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।
> उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः॥
> स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च।'
>
> (अज० प्र० सि० २३)

इति नयेन परमानन्दप्रकाशस्वभाव इति यथोपयोगं क्रममाश्रित्य सूत्रपदानां व्याख्यानं कृतम्। '**निर्वृतचित्**' इति निर्वृतिर्विद्यते नित्यं यस्य,—इति मत्वर्थीयाजन्तेन समासं कुर्वन् अत्यन्तावियोगमेकार्थीभूततां च प्रकाशानन्दयोर्दर्शयन् विज्ञानानन्दरूपस्य भगवतो धर्मित्वं निरूपयति। '**स्वाकार एव**' इति। घटादीनां पार्यन्तिकं यत् पारमार्थिकं रूपं, स एव स्वाकारः, स्वमात्मानमेव च घटादीनामाकरोति इति स्वाकारः। स च श्रेयोरूपत्वात् '**शिवः**' सर्वकल्पितग्राहकपारमार्थिकस्वभावत्वात् परमात्मा, प्रसिद्धब्रह्मविष्णुरुद्रादीश्वरभावप्रसरपरिग्रहात् परमेश्वरः प्रमाणव्यापारनैरपेक्ष्येण स्फुरणात् सिद्धः। '**एवम्**' इति अनेनैव प्रकारेण, इदं च अन्यत्र उक्तं श्रीशिवसूत्रेषु। '**तेषाम्**' इति घटादीनां '**प्रकाशात्मतया**' इति जीवद्भो-

धसोपानक्रमेण परमात्मरूपारोहणं, परमात्मनश्च पैश्वरूप्यम्। विश्वं च स्थूलपृथिव्यादिसूक्ष्मरूपादिभेदेन दशधा, कर्मबुद्ध्यन्तःकरणभेदेन त्रयोदशधा, स्थितेन तज्जडाभिमतभावोपादानरूपक्षुभितगुणतत्त्वतत्कारणमक्षुभितसमस्तसाम्यात्मकप्रकृतितत्त्वयोगेन द्विधा, एतद्रूपैतद्वेदकप्राणपुम्तत्त्वतदावरणोपकरणरागनियतिकलाविद्याकालमायात्मना सप्तकेन, आवरणहानितारतम्यक्रमविभक्तविद्येश्वरसदाशिवशक्तिशिवलक्षणतत्त्वपञ्चकेन षट्त्रिंशद्रूपं परमात्मनि भगवति श्रीमत्परमशिवभट्टारकेऽभेदभूयं प्राप्तम्,–इति एकैकोऽपि परमाणुः स्ववेदकद्वारेण तां परमात्मभूमिमभेदेन उपसंक्रान्तसद्धिश्वरूपस्वभाव एव। तत एव श्रीमद्विषमदृशि प्रमातृभेदसम्बन्धकृताः पञ्चदशादिभेदाः पृथिव्यादिषु

'शक्तिमच्छक्तिभेदेन धरातत्त्वं विभिद्यते।

स्वरूपसहित तच्च विज्ञेयं दशपञ्चधा॥' (मा॰वि॰२।२)

इत्यादिना निरूपिताः,–इति आस्तां तावदिद। 'प्रदेशोऽपि' इति एतदादिसिद्धसूत्रेऽपि व्याख्यातम्। नच एतत् वचनमात्रं, नापि शुष्कयुक्तिमात्रम्, अपितु आनुभविके सर्वेव अर्थक्रियासंबन्धदर्शनात्,–इत्याह 'अत एव' इति। आत्मा स्वसंवेदनतत्त्वम्। तत्र हि निरुच्यते। परमेश्वररूपतायां जडमपि यावच्छरीरमित्थमिति एवकारः। 'सिध्यति' इति व्यस्ततत्त्वतादात्म्यभावनातो

'जलेन जलरूपी स्यात् स्थलेन स्थलतां व्रजेत्।'

इत्यादियुक्तिभिरपरसिद्धिलाभः, समस्ततादात्म्यभावनयो जीवन्मुक्ततायां परमेश्वरैकरूपतावेशात् परसिद्धिलाभः। यत् मया स्तुतं

१ ख॰ 'करणाक्षुभित' पाठ। २ क॰ 'भावनायां' पाठः।

'आत्मन्येव न मामि नाम विसरद्रोमाञ्चरेखाङ्कुर-
क्रान्त्या किञ्चिदणीयसीरपि दिशो जानामि रुन्धे हठात्।
यन्मे भैरव भैरवेति रटतो हृद्ग्रन्थिविस्फोटन-
त्रुट्यत्पाटवपाशपञ्जरभरः कायोऽपि मोक्षायते ॥'

इत्यादि। **'घटादिकमपि च'** इति तत एव मन्त्रतादात्म्यभावनापूजितकलशस्थण्डिलाकारादिसन्निधानायत्तानि विषभूतशमनादीनि फलशतानि दृश्यन्ते। रहस्यञ्च अयमर्थ इति न अतीव प्रततोऽत्र अवसरे। **'अभिनिविश्य'** इति गाढेन मूर्खश्रोत्रियाग्रहतुल्येन तिरस्कारासहिष्णुना अभिनिवेशेनेति यावत्। **'तदतिरिक्तम्'** इति दृष्टं प्रयोजनमदृष्टं च आभासेभ्य एव, गरुडविकल्पाश्च विषशमने आभासादर्थक्रियाज्ञानमात्रस्य निर्विशेषत्वात्। किं बहुना। परपुरुषार्थलाभोऽपि तथाभासभेदायत्त इति कोऽन्योऽभिलष्यते अर्थो यो न सिध्येदाभासैः, सिध्येच्च आभासबाह्यैः। यदाह तत्रभवान्

'बुद्धिशब्दौ प्रवर्तेते यथाभूतेषु वस्तुषु।
तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ॥' (वा०प० ३।७।१०८)

इति। अनेन प्रख्योपाख्यारूढस्य एव प्रकाशविमर्शदशाविशेषाश्रयेण व्यवहारोपयोगो दर्शितः, विकल्पस्वप्नाद्याभासानां च स्फुटं ह्लादादिहेतुत्वं न ज्ञानमात्रतया। नच नियतैव अर्थक्रिया, अब्धिजलं तृषमपि कुर्वत् न वस्तु। आभासान्तरभेदस्तु सर्वत्र समानः। न प्रमातुरध्यवसानं भावानन्यथाकर्तुं शक्तम्। अभिलषिता अपि मृदोऽपि कनकार्थक्रियार्थी दृष्ट इति किं तेन। चशब्दं वृत्तिगतं **'प्रमाणबाधितः'** इत्येतदानन्तर्येण तावत् व्याचष्टे **'न केवलम्'** इति। बाह्यस्य साधकं तावत् प्रमाणं

१ क० 'श्रोत्रियग्रह' पाठः।

प्रमाणधौरेयमेव प्रत्यक्षं परेण उक्तम्, तत् प्रत्युत प्रकाशरूपं प्रकाशाभेदमेव साधयतीति । तमेव चकारं 'विरुद्धधर्माध्यासादेः' इत्येतदनन्तरमपि योजनीयमिति व्याचष्टे 'तथा' इति । चकारशब्देन न केवलमित्ययमर्थः समुच्चयेन आकृष्यते । नच केवलमिदमेव बाधकं यत् प्रमाणमुखेन प्रवृत्तं, यावत् स्वतोऽपि इति स्वमुखेन प्रमेयस्वरूपनिरूपणप्रवृत्तप्रतीतिद्वारेण अपि प्रवृत्तं प्रमेयस्वरूपमेव सत्त्वाविष्करणेन उन्मूलयत्येवं बाध्यमिति यावत् । पूर्वकं हि बाधकं प्रमेयस्वरूपमनपेक्ष्यैव सांशमनंशं विरुद्धमविरुद्धं यत् भवतु, तत् भवतु । प्रकाशात् भिन्नं न प्रकाशते इति तु सर्वभासेन प्रवृत्तम् । इदं तु मध्यमं यद्येवं स्यात्, कथमिदं प्रकाशते । अथ एवं, तत् कथमेवमिति मेयं च भासनं च अपेक्ष्यं तृतीयं तु भासनानपेक्षया शुष्कमेव वस्तु आश्रित्य भविष्यति 'प्रतीत्यनपेक्षत्वे च' इति । एवं स्थिते मध्यमं बाधकमाह 'एकानेकरूपतया' इति । प्रतीतिस्तावत् पटोऽयं विचित्रो वितत इत्येवं वस्तुविषयवर्तिनी सन्निधमत्वादेकं विततया विचित्रतया च देशाकारभिन्नं प्रमेयमागृहीतमभिमन्यते, नच तथा तद्वस्तु एकत्वानेकत्वयोरन्योन्यपरिहारेण विरोधात् । ननु यदेव एकं, तदेव इदमनेकं निर्भायात् । स्यात् विरोधो, ननु एवमिति परमतमाशङ्कते 'अथ' इति आदौ । दूषयति 'तदपि न' इति । अवयवधर्मेण यदि अवयवो(वी) न समाविश्यते, न कदाचिदवयविनि चलतीति, आस्रियते इति, रज्यते इति वा बुद्धिर्भवेत् । नहि अवयवस्पर्शमवधूय साक्षादवयविनि कश्चित् कम्पावरणरागादीनुपलभ्यात् । अथ समाविश्यते, तदेकावयवे कम्पा-

---

१ ख० 'उन्मूलयतीव' पाठः । २ ख० 'भासनप्रवृत्तम्' पाठः ।
३ ग० 'क्ष्यं' पाठः । ४ ख० 'वर्तिनि सन्निबन्धनत्वात्' पाठः ।

दिमंति यथा तद्धर्मसमावेशादवयवी कम्पादिमान्, तथा कम्पाद्यनाविष्टापरावयवधर्मसमावेशादकम्पादिमान्; एवमवयवनाशानाशाभ्यामवयविनाशानाशवैशसमिति समानवासनावसरोपनतमहोत्सवबन्धुमरणजनितातिहर्षशोकावेशिवल्लभभामिनीयुगलहृदयानुवर्तनव्यसनपरवशहृदयनायकवत् कष्टां दशामधिशायित एषोऽवयवी वराकः । '**सर्वात्मना**' इति तत्रैव वर्तमानोऽन्यत्रापि वर्तते इति व्यासज्या वृत्तिरिति यदुच्यते, तत् प्रमाणवृत्तमवधीर्य स्वच्छन्दाभिधानम् । तदन्ययोरविरोधेन एकत्वे व्यासज्य इति को व्यासङ्गार्थः । विततत्वं च न आभासेतैव । विरोधे वा तद्वृत्तित्वातद्वृत्तित्वे कथमेकस्य स्याताम्,—इति को व्यासङ्गार्थः । तत्र तद्वृत्तित्वमेव अन्यत्र अन्यवृत्तित्वमिति । '**तत्र**' इति विषयभेदादविरोधो रूपस्येव । रूपरसयोरुपादानसहकारिताभेद इत्यपि असत् । नहि रूपस्य रूपतां मुक्त्वा अन्यत्किञ्चिदुपादानत्वं सहकारित्वं वा । तदेव तु रूपं क्षणिकं कार्यमिति यथा अन्यापेक्षव्यवहारमात्रपात्रं, तथा नियतपरभावसदृशासदृशवस्त्वन्तरापेक्षया उपादानसहकारिव्यपदेशावकाशसहिष्णु स्यात् । व्यवहारविरोधो न वस्तु भिनत्ति तदनाश्रयत्वात् । तदनाश्रितोऽपि यदि वस्तु भिन्यात्, घटपटौ भिन्नौ विज्ञानं भिन्द्यातामिति अनियमो भेदस्य भवेत् । अवलोक्यते च नियमः । ततो भेदस्य कारणं तदाश्रितत्वं, तद्विरुद्धं च तदनाश्रयत्वमिति कारणविरुद्धोपलब्धिः । तत एव अविकलं वस्तुभेदे कारणं वस्तुगतो विरोधः; स च देशभेदे स्थिरव्यवहारभेदे । एकस्य हि मैत्रस्य स्वगृहे सुखासीनस्य यदि व्यवहर्तारो भिन्नतया रूपं व्यवहरन्ति, मम मित्रं, मम शत्रुर्मम मध्यस्थो, मम न किंचिदिति; न इयता स स्वात्मनि स्वरूपवैशस-

मापतद्भिमन्यते। यदि स्वामी रूपमाविश्य ब्रूयात्—इह आसीनतामनुज्ञाप्नेव भयानधुनैव यदि न बहिस्तिष्ठतीति, तदयं देशभेदमतिविप्रतिषिद्धमभिमन्येत मृत्युवदनपतिततामेव आत्मनः। 'तत्र' इति च यदुक्तं, तदपि वचनमात्रम्। एवं हि स घटः घट इति एकं वस्तु भवेत्, तत्र सादृश्यैव, अन्यत्र अस्य घटतेति न घटपटरूपातिरिक्तं किं तदन्यशब्दद्वयवाच्यम्। देश इति चेत्, तद्भेदात् पुनरपि विरोधः। इहापि यौ दिग्भागभेदभिप्रायवचौ मुपरया किमन्यदस्ति यत् तत्र अन्यतेति चोद्यते। यत् देशान्तरभेदोपगमे पुनरपि विरोध एव, एकैकापाये सा? विनाशः सर्वापाये तु विनङ्क्ष्यन्ति। कोऽत्र दोष इत्याह 'एकैक' इति अवयवाश्रितत्वात्। भिन्नेन एवहि सहार्यो घटते पुत्रेण इव पितुरिति भावः। एवं काणादसंमतं वाह्यं दूषयित्वा वैभाषिकपरिभाषितमपि दूषयति—'अथ' इति 'निरवयवाः' इति। तत एव न शङ्कितो विरुद्धधर्माध्यास इति भावः। 'संचिताः' इति पुरुषकर्माधिपत्यादिदर्शनग्रपदंशदर्शनादिभापकादालोकतिमिराणुभिरव्यवधानात् निरन्तरभावेन अवतिष्ठमाना इति यावत्। नच एवं 'परमाणुमयत्वे' इति। येतत्तं दिग्भागभेदवत्त्वम्। तथ बहूनां परमाणूना भिन्नदेशत्वेऽमूर्तत्वेन अन्योन्यरूपदेशाक्रमणयोग्यत्वाभावात् प्रतिलब्धे किमिति न घटते इत्याशङ्क्य आह 'तथाहि' इति। अयं भावः—यदि सान्तराः परमाणवो घटः, तदृश्यता, सचयस्य अवधिनियमाभावः, अर्थक्रियानुपयोगः, धारणाकर्षणाद्यसंभवः, आलोकपुञ्जघटयोरेकदेश एव दर्शनम्, पार्थिवतैजसादिवस्त्वन्तरदृक्प्रसङ्ग इति शतशो दोषाः, नैरन्तर्ये तु परस्परसंश्लेषः। तत्र परमाणोः परमाणुना आश्लेषे अनुपा-

---

१ ख० 'देशदर्शनं' पाठ.।

श्लिष्टं भागान्तरमस्य अपरं नास्ति, अपरस्यापि एवमिति द्वावपि मिलितौ न अधिकं रूपं समुत्थापयेयाताम्। एवमन्यमेलनेऽपि वाच्यम्। तदाह **'अनन्त'** इति। एवं क्रमसंश्लेषे दोषः; अक्रमसंश्लेषे तु वक्ष्यति **'एकपरमाणुसंपृक्तस्य'** इत्यादिना। मध्यमपरमाणोर्हि युगपत् परमाणू यदा योज्येते, तदा एकपरमाणुसमाश्लिष्टेन रूपसर्वस्वेन मध्यवर्ती परमाणुः संश्लिष्ट इति तौ पूर्वापरसंमतावपि परमाणू तन्मध्यवर्तिपरमाणुमग्नशरीरावितिं एकपरमाणुमात्रनिर्भासप्रसङ्गः। अव्याप्यवृत्तिता च न संयोगस्य अत्र उपपद्यते अव्यापनीयस्य अंशान्तरस्य असंभवात्। द्वाभ्यां संयुक्ताभ्यां व्यणुकं च अवयविरूपं यदि आरभ्येत, तत् तदारम्भकापेक्षया परमत्वत्यागेन अणुरूपं किंचित् स्थूलमित्यपि स्यात्। दूषितश्च आरम्भणीयोऽवयवी। **'आदर्शने'** इति निर्विकल्पे आलोचने इत्यर्थः। **'अनुपलक्षणीयत्वम्'** इति अनिश्चय इति यावत्। ननु बहवः परमाणवो गृह्यमाणा इत्थं चकासति। तत् केऽमी पर्यनुयोगा इत्याशंक्य आह **'प्रथम'** इति। दिगवभासभेदात्मा यः संनिवेशः, स चेत् परमाणुसमूहे गृह्यमाणे अभिमानमात्रसारः, तत् परमाणुसमूहत्वाविशेषात् क्वचिदृजुरयम्, अन्यत्र वक्रोऽयम्, अपरत्र चतुरश्रोऽयम्, इतरत्र त्र्यश्रिरयम्,—इति नियमेन सर्वप्रमातृसंवादी भिन्नार्थक्रियाकारित्वेन प्रतिभासो न भिद्येत। **'तथा तथा ते परमाणवः'** इत्यपि तथाशब्दच्छन्नं बाह्यवस्तुनिष्ठं किमपि परमाणुतातिरिक्तं तत्त्वान्तरमुररीकरणीयमेव,—इति एकान्तः। यदेवंभूतं, तत् चेत् न अङ्गीक्रियते बहिरस्ति,—इति; तर्हि नीलस्य अपि किं बहिःसत्ताङ्गीकरणत्वेन। नीलानुपगमे च कस्य परमाणुत्वं साध्येत। सिद्धे हि नीले तस्य वस्तुव्यापकविरुद्धधर्मा-

नभ्यासविरुद्धधर्माध्यासयोगाविनाभूतावयविरूपताप्रतिषेधे निरंशपरमाणुरूपता कालभेदाभावाच्च क्षणिकता सिध्यति अर्थक्रियाकारिणो वस्तुत्वात्, त्रिकालभेदे च विरुद्धधर्मयोगापत्त्या अवश्यमवस्तुत्वापत्तेः। देशतः कालत आकारतश्च संकुचितमेव नीलम्, नतु विततं, नापि स्थिरं, नापि चित्रम्,—इति हि व्यवसीयते। तत् नीलमर्थक्रियाकारि चेत्, तदङ्गीकृतमृजुपथवाचापि परमार्थसदेव उपगम्यं तेन वपुषा अर्थक्रियोपपत्तेः। नीलस्य च परमाणुतया अनवसीयमानत्वादिदमपि अन्यत्र अनवकाशं शुद्धनीलस्य अर्थक्रियाकारिणोऽध्यवसायेन विषयीकारात् तावत एव अर्थक्रियाकारित्वात् सत्त्वमन्यस्य संनिवेशस्य स्थैर्यवदसत्त्वेति। एतदाह 'ननु' इति। एकस्मिन् ज्ञाने यद्वयः परमाणवः प्रतिभान्ति इयं प्रतिभासनयोग्या इति त एतावदेव इदमिति यावत्। अथ तृतीयं बाधकमाह 'स्वरूपेणैव' इति। षट्कोणे देवताक्षादौ यदा अणवः समीयन्ते, तदा ध्रुवे अवधिभावेन आश्रिते मध्यवर्तिनि एकत्र युगपदेव संलग्नाः षडणवः। यदि न कल्प्येत, तत् समषट्कोणवस्तुसमुदयः कथमिति तस्य मध्यवर्तिनोऽवश्यं षड्भागा आपद्यन्ते। भाग एव अणुरिति चेत्। तत्रापि एषैव वार्ता। ततश्च सदेव इदमायातमवयवावयविप्रमङ्गश्च एवमाप्रलयादिति। 'एकदेशवृत्तिः संयोगः' इत्यपि एकदेशयोगमेव आक्षिपति। 'अव्याप्यवृत्तिसंयोगषट्कोपाधिकृतोऽयं भागषट्कभ्रमः' इत्यपि असार निरंशतायामणोरणुत्वेनैव अव्यापनस्य शब्दमात्रसारत्वात्। निरंशोऽपि हि महति भवेत् तत्प्रदेशयोगस्य कल्पितस्य आकाशादावकल्पितस्य वा पर्वतादौ सम्भवात्। 'तथा' इति षट्कोणतया। 'तदपि वा' इति निपातद्वयेन इदमाह—

१ 'ध्रुवे' क० पाठ।

कश्चिदपि संनिवेशो न उपपद्यते । पार्श्वसंभवायत्तो हि सर्वः संनिवेशः । प्रतिभासवलोत्थापितोऽयं संनिवेशाभिमान इत्यपि न युक्तम् । प्रतिभासस्य नियामकहेत्वभावे नियमेन कचिदेवं कथंचिदेव संनिवेशाभिमान इत्ययमर्थस्तावत् निर्युक्तिकः । अर्थक्रियायोगश्च यो बाह्यार्थसद्भावप्रतिपादने मूर्धाभिषिक्तः, स सर्वः संनिवेशायत्तो न मृत्परमाणुमात्रायत्तो घटमृत्पिण्डयोरेकार्थकारित्वादृष्टेः । 'तथा तथा ते परमाणवः' इत्यपि निभृतभणितिमात्रं न संनिवेशाधिक्यं विशेषं प्रत्याख्याय उपपद्यते । यच्च उच्यते—ज्ञानमेकं गृह्णदेव अपरं गृह्णातीत्येतावता वैतत्याभासो द्वित्वावभासवत्,—इति, तत्र अपि यथा तथा तयोर्ग्रहणे अस्ति द्वित्वाभासो, नैवं संनिवेशाभासः । प्रज्ञप्तिसत्त्वे च अस्य अर्थक्रियाकारिणः संवृतत्वे किमपरमनुरुध्य व्यसनमणुसंचयसमर्थने । किंच अवयविनं दूषयितुमणुसंचयमात्रवस्तुवादिना यदभ्यधायि घटस्य एकत्र पार्श्वे छाया, परत्र आतपः, मध्यभागः पार्श्वद्वयेन आवृतः, पार्श्वद्वयमनावृतम्, अतश्च तथाभूतावयवविश्रान्तशरीरोऽवयवी युगपदेव विरुद्धां छायां कथं क्षमतामातपसंयुक्तश्च नच इति, आवृतश्च नच इति च । आवरणेन रक्तादयोऽपि उपलक्ष्यन्ते । चित्रतन्तौ भागो रक्तः, अंशान्तरमरक्तं, भागान्तरमसितमन्यत् पीतमित्यादि । तस्मात् वस्तुत्वस्य व्यापकं विरुद्धधर्मसंवन्धवन्ध्यत्वं यत्, तद्विरुद्धस्य विरुद्धधर्मसंसर्गस्य उपलब्ध्या वस्तुत्वनिषेधोऽवयविनः,—इति तत्परमाणावपि समानम् । पार्श्वद्वये हि मध्यपरमाणोर्यदि परमाणुद्वयं, तदा प्राग्वृत्तितया सूर्यसंमुखस्य अणोरातपयोगः, प्रत्यग्वृत्तेस्तु तदयोगः, मध्यवर्तिनश्च द्वाभ्यामावरणमिति घटते । यावता मध्यवर्तिनो निर्भागस्य पार्श्वद्वये सति मध्यवर्तित्वानुपपत्तिः, इति परमाणुत्रयादारभ्य

स्थूलघटादिपर्यन्ते वस्तुनि छायातपविभाग आवृतानावृतत्वरक्तारक्तादिर्विशेषो य उपलभ्यते, सोऽणुप्रचयवादे निर्विवादसिद्ध इति यदुक्तम्, तदुक्तिसारमेव, न युक्तिसारमणोः सांशत्वेन विना अस्य विधेरयोगात्, निरंशत्वे वा पार्श्वद्वयादियोगे षडंशत्वात्तद्देशत्वयंशमापत्तिः । अशङ्क्यमये अस्य एकत्वे अवयविवादस्यैव अभ्युपगमप्रसङ्गः । अंशस्य अणुत्वाशान्तरपर्यनुयोगेन प्रलयान्तरापातः । किंच छायालोकनीलपीतादिपरमाणुप्रचये चित्रत्र भागावच्छेदावधेरयोगः । विजातीयतया अवच्छेदे चित्रे एकत्वेन कथं प्रतीतिः, वस्तुतो मध्यपूर्वापरत्वाद्यभावे नियमाभावात् सन्निवेशभेदप्रत्ययः कथमित्यादयो दोषाः । एतदुपसंहरति '**विज्ञानवादिभिः**' इति । आलम्बनपरीक्षादौ दिङ्नागे, विज्ञप्तिमात्रादिसिद्धावासवन्धन्यां, प्रज्ञालंकारादिषु भाट्टदर्शनेषु, तत्र तत्र च अन्यत्र वितत्य अयमर्थ उक्त इति । अयं भावः— दूषणकलापेन अनेन विषयस्य असत्त्वमावेदयता बाह्यार्थविषयं यत् प्रमाणं परेण प्रत्यक्षं समभाव्यत, तदसमर्थतया प्रमाणाभासीकर्तव्यम् । ततो निष्प्रमाणको बाह्योऽर्थः कथं सिध्येत्,— इतीयति विश्रान्तिराधेया अन्यथा प्रमाणेन प्रसाधिते वस्तुनि दूषणस्य अकिंचित्करत्वात् । प्रमाणाभावश्च बाह्येऽर्थे वितत्य उक्तः

'वर्तमानावभासानाम्········ ।' (१।५।१)

इत्यादिना, वक्ष्यते च वितत्य, इह किममीभिरावेदनकारिभिर्नीरसविचारैरिति ॥ ६ ॥

ननु बाह्याभासकमवैचित्र्येण हेतुना प्रसाधितम् । तत् कथं तदनुपपत्तिरिति उक्तमित्याशङ्क्य सूत्र

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥ ७ ॥

संविद्रूपं तावत् विषयव्यवस्थास्थानं सर्ववादिभिरङ्गीकृतम्,

अनुसन्धानादिवलाच्च तदेकम् । ऐश्वर्यं च अस्य देवत्वमाभाससंयोजनवियोजनस्वातन्त्र्यात्मकमुपपादितम् । प्रकाशतादात्म्यं च अर्थानां वितत्य उक्तम्, वक्ष्यते च । ततोऽन्तर्गतवैश्वरूप्यं तदैश्वर्यादेव च । तस्य अभ्युपगमे स्वातन्त्र्याप्रतिहतलक्षणेन इच्छाविशेषेण भवितव्यम् । इच्छया च निर्माणं स्वप्नसंकल्पादौ दृष्टमेव घटादेर्मृदादिप्रसिद्धकारणपरम्परापराकरणेन । तदत्र असत्यघटादिरिति चेत्, अस्तु तावदेवम् । तथापि योगी पुरसेनादिनिर्माणमिच्छावशादेव करोति,—इति सिद्धम् । तत्र हि तदिच्छया झटिति संघटिताः परमाणव उपादानम्,—इति उच्यमाने यदि प्रसिद्धो घटसंपादकः समस्तकर्मशिक्षाधर्माधर्मदण्डादिसहकारिसहितः स्वोपादानोचितः कपालादिकारणकलापोऽभ्युपेयेत, तत् कुलालविशेष एव अयं योगीति आयातम् । तृणमात्रेणापि तु प्रसिद्ध्युल्लङ्घने स्वप्नसंकल्पकामशोकादिविषयपरिदृष्टभावाभासनिर्माणसामर्थ्ये संविद् एव । इच्छां प्रत्याय किमकारणमेव कारणान्तरान्वेषणाय प्रयस्यते । यदाह भट्टदिवाकरवत्सः—

'न दृश्यते त्वत्प्रतिभासशक्तेः
स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
तद्दृष्टसामर्थ्यतया सदैषा
विश्वप्रपञ्चप्रथनैकहेतुः ॥'

इति । योगिनश्च शरीरप्राणाद्यारूपितमपि चैतन्यं तावति नैर्मल्यात् निर्मातृ, स्वशरीरप्राणादिसहितप्रमात्रन्तरापेक्षया बाह्यत्वेन तस्य अर्थस्य, चित्तत्त्वमेव सर्वत्र निर्मातृ । एतदेव दर्शयितुं वृत्तौ टीकावतरणिकायां च दृष्टान्तः पृथङ् न व्याख्यातो दार्ष्टान्तिकरूपाभिधानेनैव अस्य व्याख्यातत्वात् तत्र आवृत्तियोगेन च ग्रन्थस्य उभयत्र अपि वाचकत्वात् । यतो '**देवश्चिदात्मा**'

ततः '**प्रकाशयति**' इति हेतुमति लिङ् । '**हि**' इति यत एवं देवत्वात् चिदात्मा आभासवैचित्र्यं प्रकाशयति, तस्मात् '**अनुपपत्तिना किमन्येन बाह्येन**' इति पूर्वेण संबन्धः,—इति सूत्रयोजना। एवशब्दः—अप्रयाससिद्धोऽयमर्थो बहुतरमभीष्टसंपादकश्च—इति द्योतयति । एतदेव स्फुटीकृतं '**स्वात्मरूपतया**' इत्यादिना कर्तुः कर्मणश्च विशेषणेन । तदयमर्थः—चिद्रूपं यतः स्वात्मरूपमहमिति अनन्यापेक्षप्रकाशविमर्शम्, ततस्तस्य यदाभासनं, तत् तावदुपपन्नं न प्रयत्नसाध्यम्, तद्भेदिनश्च भावराशेः प्रकाशात्मत्वादुपपन्नमाभासनमिति । '**अन्तःस्थितं**' इत्यस्य वृत्तिः '**अनन्तशक्तित्वात्**' इति । भगवति एव हि विश्वमदः शक्तिवैचित्र्यम् । यदागमः

> 'शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
>
> शक्तयस्तु जगत्सर्वं शक्तिमांस्तु महेश्वरः ॥'

इति । सूत्रार्थं सङ्क्षेपेण विवक्षुर्हिशब्दस्य हेतुतां द्योतयितुं साध्यं पूर्वसूत्रनिष्ठमर्थमुपक्षिपति '**न च**' इत्यादिना । हिशब्दं व्याचष्टे '**यतः**' इति । यदिदं वस्तु वक्ष्यते, तस्य अस्मिन्नर्थे हेतुत्वेत्यर्थः । '**तथा**' इति बाह्याभासतया । एवकारार्थं व्याचष्टे '**पूर्वम्**' इत्यादिना । '**सर्वथा**' इति न बाह्यसद्भावेन, न वासनाप्रबोधेन, न पूर्वकर्मैकप्रघट्टाभासेन, न वा इच्छाभेदेन, न धारणाभासभेदेन, न उपसर्पणप्रत्ययप्रभासाभिधानप्रमान्तराभासादिना वा अयमुपपन्न आभासभेदः । तत्र अतिदुर्घटकारी परिदृष्टासमिद्धशक्तिः परमेश्वर एव शरणम् । ननु किमपेक्षया बहिष्ट्वम्, न तावत् प्रकाशात्, तद्बहिर्भूतस्य अप्रकाशनापत्तिप्रसङ्गात्,—इत्याशंक्य कल्पितप्रमात्रपेक्षया बाह्यत्वम्, न तु जातु परप्रकाशादिति दर्शयितुं सत्त्वभुवनलक्षणायाः स्थूलसूक्ष्मरूपायाः प्रमे-

यत्सृष्टेः पञ्चाशत्प्रत्ययभेदभेदितबुद्धिधर्मप्रबन्धलक्षणभावसृष्टि-विचित्रीकृतभूतात्मकप्रमातृसृष्टिसाहित्येनैव स्वरूपं निर्णयन् पीठ-बन्धं तावत् करोति **'तस्य च'** इत्यादिना । **'अस्मान्'** इति न स्वात्मानं प्रति, नापि भावान् प्रति भेदेन दर्शयतः, अपितु कल्पितप्रमातॄन्प्रति भेदेन दर्शयतः, तदपेक्षयैव, नतु स्वात्मापेक्षया, नापि भावापेक्षया स्रष्टृता,—इति उभयतो योज्यम् । तत्र इयं सृष्टिः—

'परसूक्ष्मव्यूहयोगात् विभवाच्च चतुर्विधा ।'

इत्यागमे निरूपिता । तां विभजति **'सच'** इति ईश्वरः । यावत्सं-विद्विश्रान्तता दर्पणप्रतिबिम्बवदीश्वरदशायां ध्यामलेदंभागश्रीस-दाशिवभूम्यनन्तरं स्फुटेदंभावायां सृष्टिवर्गस्य अहमिदमिति, तावत् पूर्णत्वेन स्वरूपपरिरक्षणेन उत्कर्षयोगेन च परत्वम् । **'अन-न्योपादानम्'** इत्यनेन निरुपादानतां पारमार्थिकीं व्याचष्टे । एतच्च विशेषणद्वयं व्यूहविभवसृष्टावपि योज्यम् । परत्वं हि त्रिषु उत्तरेषु, सूक्ष्मत्वं द्वयोः, व्यूह एकत्र । **'पूर्वपूर्वानुप्राणितं हि यथोत्तरम् ।'** इति आगमाधिकारे वितनिष्यामः । व्यूहविभवसृ-ष्ट्योरपि च वस्तुतो निरुपादानतैव । नियतिशक्त्या तु उपादानावभा-सस्तन्मात्रादिपु अपि अस्ति । अहंकारात् तन्मात्रेन्द्रियाणि, सोऽपि महतः, सच गुणेभ्यः, ते साम्यात्, तत् कलातः, सा मायातः, माया च भगवच्छक्तिविजृम्भा अपि विश्वोपादानरूपतावभासि-तजडत्वस्वभावा तत्त्वरूपा । एतच्च लभ्यते 'अनागतावेक्षणं तत्प्रयुक्तिः' इति । तथाहि यत् विभवसृष्टौ वक्ष्यति **'नियति-शक्त्या स्वकारणमुखेन'** इति, तत् सुसूक्ष्मव्यूहसृष्ट्योरपि उपजीवनीयम् । आद्यां सृष्टिमुल्लङ्घ्य यन्मध्यवर्तिनी तन्मात्रसृ-

ष्टिरत्र उक्ता आदिशब्देन प्रकारार्थेन उपरिवर्तितत्त्वान्तरसंग्रा-
हिणा, तत्र अयं भावः—शब्दादय एव स्थूलत्वेन प्रमेयीभूताः
स्वोपलब्धिकरणसपादकबुद्धिकर्मेन्द्रियतत्त्वरूपादिसिद्धौ प्रयोज-
कीभवन्ति । तदुपलम्भबलादेव च एतदुचितप्रमातृलाभे तत्प्र-
मात्रुपकरणचक्षुरूपघटादिसिद्धिरिति ते एव सर्वत्र प्राणाः ।
तथा च पञ्चप्रयोगेऽपि नभःप्रभृतीनामेव सूक्ष्मशब्दादिरूप-
तया उपयोगः,—इति यत् किञ्चित् प्रमेयं, तत् सर्वमेतन्मयमेव
परमार्थतः । तत एव पञ्चतत्त्वपरमार्थता अपि विश्वस्य आगमे
निरूपिता । तदेतदागमाधिकारे वितनिष्यामः । 'योगिनः' इति
व्याचष्टे 'तत्' इति सूक्ष्मतन्मात्राद्याभासपरमार्थान् । 'अवि-
शेषेभ्यः' इति तन्मात्रेभ्यः । गन्धो हि सौरभाद्यवान्तरविशे-
षविनिर्मुक्तो गन्ध इत्येव भासमानः, तदेव, न अधिकं तत्र
अन्यत् चकास्ति,—इति तन्मात्रमविशेषश्च उच्यते । व्यूहः शब्दा-
दीनां क्षोभः, परस्परसाहित्यं च

'एकद्वित्रिचतुष्पञ्चगुणं व्योमादितः क्रमात् ।'

इति न्यायेन । 'दृश्यतापत्ति' इति रूपादीनां या सर्वप्र-
मातृषु दर्शनोपलक्षितार्थक्रियाविशेषसपादनयोग्यता, तत्पर्यन्तः ।
तेन गन्धतन्मात्रस्य चेत् दृश्यता तादृशी जाता, किमन्यदस्तु
आभासान्तरं यत्तत्त्वरूपं स्यात् । कतिपयदृश्यं सर्वजनदृश्यं च
यदाभासरूपं सामान्यं, तत् यतो विभवात्मना तन्यते, ततस्तत्
तत्त्वमुच्यते । घटादि च न अन्येन रूपेण तन्यते । तद्धि
पृथिव्यादेर्विमिश्रतया अन्योन्यव्याप्त्या विभागेन च विचित्रेण
भवनम्,—इति विभव उच्यते । तदेतदाह 'आनन्त्यात्' इति
परिच्छेदस्य अन्तस्य इयत्तात्मनोऽसंभवात् । 'ततश्च' इति
तत्त्वेभ्यः । 'भुवनाकारेण' इति भोगाधिकरणभूतब्रह्माण्डा-

दिरूपतया। 'घटपट' इति भोग्यरूपतयेति। अन्ये तु घटादि-सृष्टिमेव भावसृष्टिमाहुः। तत्त्वानि हि सामान्याभासरूपाणि गुणगुणिभावेन विचित्रेण सामस्त्येन मिलितानि भोक्तृभोग्यतदूद्व-याधिकरणरूपतया भूतभावभुवनात्मना भान्ति। प्रत्ययसर्गस्तु बुद्धितत्त्वधर्मस्तेषु एव अनुप्रविष्टः। '**नियतिशक्त्या**' इति तत एव यावत् सा नियतिर्न विघटते इति प्रमाणान्तरात् निश्चितं, तावत् भवत्येव कार्यकारणानुमानम्। परमार्थतस्तु भगवानेव विश्वनिर्माणशक्तिमान् यथा तु स्वप्नदर्पणादावपि, कुम्भकारादिकारणपुरःसरघटनिर्भासोऽपि, स्वच्छभावस्वतन्त्रभावयोरेव महिमा तत्रापि मन्तव्यः। '**स्वकारणमुखेन**' इति स्फुटयति '**घटं हि**' इति। तत्रस्थो यः प्रमाता किमिसर्वज्ञादिरन्ततो वा, स एव कुम्भकृत्; तस्य आभासो घटोऽयमिति विमर्शविश्रान्तः प्रकाशस्तदेव प्रकृतं सारं रूपं यस्य घटस्य, तं जनयति '**अयम्**' इति ईश्वरः। '**एवम्**' इति नियतिशक्त्या तत्रस्थप्रमात्राभासमयं च। '**अन्यतः**' इति कुविन्दतन्त्वाद्याभाससामग्र्याः। एवं प्राथमकल्पिके घटाभासे भगवता निर्मिते तस्यैव आभासस्य अनुवर्तमानता या, सा स्थितिरिति उपपाद्यते। '**ततश्च**' इति सृष्टेरनन्तरम्। '**तत्**' इति कुम्भकृद्दण्डाद्याभासनाशेऽपि तं निर्मितं घटाद्याभासप्रपञ्चं देशान्तरगतप्रमातृविश्रान्त्या तदाभाससाहित्येन जनयति, तत्साहित्यमस्य सृजति, घटाभासस्य च स्थितिं करोति, पूर्वप्रमातॄणां च तदाभासवत्तां संहरति। यथोक्तं ग्रन्थकृतैव

'सदासृष्टिविनोदाय सदास्थितिसुखासिने।
सदात्रिभुवनाहारतृप्ताय भवते नमः॥' (शि०स्तो०२०।९)

इति, श्रीपरमेष्ठिना अपि

---

१ ख. 'सामान्येन' पाठः। २ क. 'मन्तव्यं' पाठः।

'प्रत्युपकारकृत्योक्तिशिवत्वाभिजकर्मणे ।
प्रवृत्तस्य निमित्तानामपरेषां क मार्गणम् ॥' (शि०दृ० १।१३)

इति,

'..........ताश्च नित्यमवस्थिताः ।
मन्त्येव स्वभावेन तत्परत्वप्रवृत्तिः शिवः ॥'

इति, भट्टश्रीनारायणेन अपि

'प्रविश्रणमविश्रान्तस्त्रैलोक्यं कल्पनाशतैः ।
कल्पयन्नपि कोऽप्येको निर्विकल्पो जयत्यजः ॥'

(स्त० चि० १२०)

इति । ननु किमर्थं मध्ये देशान्तरनयनादि आभास्यते । आह 'नियतिशक्त्या' इति । यदा कुम्भकारगृहात् घटस्य अन्यत्र नयनं, तदा एव वृत्तान्तः, यदातु प्रमात्रन्तराणामागमनं, तदा को वृत्तान्तः । आह 'पूर्वदेश' इत्यादि । 'तावत्यंशे' इति घटाभासांशे । 'अन्तःप्रवेशनेन' इति प्रकाशस्य एकीभावेन । अनेन क्रमेण घटाद्याभासान् तेषामागतानां प्रमातृणां ग्राह्यान् करोति, तांश्च प्रमातृंश्च तद्ग्राहकान् । ननु भिन्नत्वात् प्रमातृणां प्रमात्रन्तरमेयो[1] घटाभासो यः स्थितः, स कथं प्रमात्रन्तरमुपसंक्रामेत् । अत्र आह 'तत्त्वत एकरूपत्वात्' इति । एतत् न अपूर्वम्, प्रत्युत भेदोऽयमागन्तुक इति भावः । 'कृत्त इति' । चिद्रूपस्य हि असावाभासः । सर्वे च ते चित्स्वभावाः । ननु एवं शरीराभासा अपि न कथं परस्परतः । क एवमाह नेति । तदाह 'यावत्किञ्चित्' इति । प्रमातृणां सम्बन्धि यावत् बाह्येन्द्रियवेद्यं, तावत् साधारणं शरीरादि, न पुनरन्यत्, तत्तु असाधारणं सुखसवल्पादि । प्रमेयाणां च सम्बन्धि यावत् बाह्येन्द्रियवेद्यं,

---

१ ख० 'मय' पाठ ।

तावत् साधारणं रूपादि, अन्यत् तु असाधारणं रसादि। तदाह 'केवलं तु' इति । आन्तरं स्प्रष्टव्यं शूलादिदुःखमन्तः-कन्दहृत्तालुनाडीस्पर्शसुखं वा समाधानकालसंवेद्यं बिन्दुनादा-दिरूपशब्दात्मकं, विषयवती वा प्रवृत्तिरिति कथितम् । गन्धादि अपि तद्वत् नियतिशक्त्या एकस्मिन्नेकस्मिन् मायीयप्रमातरि नियमेन स्थापितम्, मन्त्रेश्वरादिप्रमात्रपेक्षया तु साधारण-मेव,–इति मायीयपदेन आह । 'कृतम्' इति नियत्या । तेन तर्हि परसु[मु]खादिना परस्य कथं व्यव[व्या]हार इत्याह । ननु घटाभासो देवदत्ते विष्णुमित्रे च तुल्य इति भवतु एकः, व्याहाराभासस्तु व्याहर्तरि–व्याहरामि,–इति, एवं श्रोतरि–व्याहरति,–इति; तत् कथमनयोरभेदः, भेदे च अनुमानं न युक्तम्,–इति उक्तं वितत्य वासनासूत्रे । सत्यं, इत्थं तु एतत् संगच्छते इति विभाव्यताम्–इह यावत् किञ्चित् बाह्ये-न्द्रियगोचरीकार्यम्, तावत् सर्वं साधारणमेवेति उक्तम्–एवंच श्रोत्रपथगामी योऽसौ घटमानय,–इति शब्दः, स तावत् व्याहरणशब्दवाच्यो द्वयोरपि एक एव अवभासते । ततः स्वात्मीयव्याहाराभासवदेव वस्तुतस्तावत् स्वसंवेदनेनैव अवि-कल्पकोऽपि भाति, विकल्पे तु स्वपरविभागसंस्कारात् परता अध्यवसीयमाना अपि व्याहरणाभासमात्रेण अन्यथाभावाद-किञ्चित्करी नीलस्य इव स्थिरता । व्याप्तिग्रहणकालेऽपि तेनैव व्याप्तिः । ततो विशिष्टादाभासात् तच्छरीरसहभाविनीं व्याह-रेयमिति इच्छामस्सदर्थविश्रान्तामनुमिमीते । तथाहि अस्य प्रति-पत्तिः—अत्र शरीरे व्याहरामीति आभासः केवलं शरीरप्रमा-तृताभिमानदार्ढ्यात्, तच्छरीरं परत्वेन अभिमन्यमानस्तदाच्छुर-

१ 'ससाधना' पाठः । २ क० 'व्यवहारा' पाठः ।

णात् व्यपदिशति—अयं व्याहरतीति। परस्तु न अनुमेयता परप्रमातुरपि,—इति उपपादितमुपोद्घात एव

'तत्र ज्ञानं स्वतः सिद्धं ... ।'(१।१।५)

इति सूत्रे। वासनाप्रबोधसूत्रेऽपि उक्तं 'तदेवं बुद्धिसमीहाशुक्तप्रमात्रविच्छिन्नात्' इत्यादि। तत इदं व्याहारमात्रसाधनमनुमानं मौलिके सिद्धे स्वसंवेदने, आभासमेलनात्मकं च इदं व्याहरामि, व्याहरति,—इति उभयमपि। एकमहन्ताभासेन, अपरं देहाभासेन व्याहरणाभासाधिपेन मिथं यतः, ततस्तदधिकाभासपरिहारे यत् व्याहरणाभासरूपमेषतया चकास्ति, तदेव हेतुर्न्तव्यम्। तच्च एकरूपमेव, ननु विज्ञानानय इव भिन्नस्वभावमिति न कश्चन विरोधः। नियतिशक्तौ च यालेऽर्थे वासनाप्रबोधः, धर्माधिपत्य प्रथमेच्छाकोरणाभास उपसर्पणाभासः प्रमात्राभास इत्यपि तत्तदपेक्षया कारणं निर्वहत्येवेति। अत्र चोदयति 'ननु च' इति। अयं भावः—इह तावत् प्रमातरि पूर्वमवस्थितो घटाभासः, तेन मिश्रीभवति प्रमात्रन्तरमिति किमनेन। आश्वेव प्रमात्रन्तरविज्ञानसङ्क्रान्तोऽनेन घटाभासो जन्यतां, तावता सिद्धं प्रमात्रन्तरस्य युगपदभिमतघटाभासवत्त्वमिति किमलौकिकप्रमात्रभेदाभ्युपगमसाहसेनेति। अत्र आह 'नैतत्' इति। उपपत्तिं स्मारयति 'उक्तम्' इति। अय भावः—स पूर्वप्रमातरि स्थित आभासस्तस्य प्रमात्रन्तरस्य संवेद्यः सन् वा कारणमात्मवर्तिघटाभासोदये स्यादसंवेद्य एव वा। न तावत् संवेद्यः सन्, तत्संवेदनोपायाभावात्। सन्तानान्तरानुमानेन हि तत्संवेदनं, तच्च न घटते इति बाह्यार्थवादिनैव उपपादितम्। अथ असंवेद्य

१ क॰ 'व्यवहार' पाठ। २ क॰ 'करण' पाठ।

एव कारणं, तत् सन्तानान्तराणामविशेषात् सर्वे तदाभासा जनका भवेयुरित्यादिपूर्वोक्तदोषापत्तिः । तदाह **'अतिप्रसङ्गात्'** इति । एवं बोधमात्रं नीलादिलेखस्मात् सोपानादिकबोधमात्ररूपत्वसोपानान्तरं समारुह्य ऊर्ध्वधरायामैश्वर्यमासादयितुं प्रश्नं करोति **'ननु एवम्'** इति । **'आधिपत्येन'** इति । न अत्र कारणता मन्तव्या, अपितु तत्सत्तामात्रम् । एकरूपवादे हि कः कार्यकारणभावः । यदिवा तदमिलितपूर्वप्रमात्राभासादन्योन्यसंमिलितप्रमात्राभासो जायते इत्याशयेन अधिपतिरिति कारणविशेष एव उक्तः । अतिप्रसङ्गदोषश्च ऐक्यमात्रेण परिहृत इति दर्शयति **'न चैवम्'** इति । पूर्वसूत्रोक्तश्च दोषो न अवतरति,—इति दर्शयति **'न चापि'** इति । अत्र आह **'एतदपि नास्ति'** इति । न संभवत्येव इदमनीश्वररूपत्वं संविद इति यावत् । संविदो हि इदमेव जडवैलक्षण्यं—यदपरिच्छिन्नप्रकाशत्वम् । नीलतया अपि भाति, पीततया अपि भाति,—इत्यादिना च भिन्नानां वस्तूनामुत्पत्त्या व्यक्त्या वा कार्यकारणता उपपन्ना,—इति वितनिष्यते क्रियाधिकारे । ततः सा अपि परमेश्वरेणैव निर्भास्यते स्वप्न इव घटकुलालयोः । नियतिशक्त्या च मृदाद्याभासमुखेन वा घटादितया लोके, मन्त्रौषधरत्नाभासद्वारेण वा शाम्बरिकवृत्ते, धातुप्रकोपमित्राद्याभासपूर्वकत्वेन वा तिमिरस्वप्नादाविच्छामात्रोद्भासनपुरःसरं वा योगिनिर्माणे स एव प्रकाशते,—इति । एतत् तावदैश्वर्यमिह दर्शितम्, पूर्वं च आभाससंयोजनादिना स्मृत्यादौ स्वातन्त्र्यम्, अन्यदपि च अग्रतो दर्शयिष्यते । ततः संवित् चेदेका सिद्धा, तदैश्वर्यमपि अस्या एष्टव्यमन्यथा स्वभावविरुद्धजडत्वप्रसङ्गात् । संविदीश्वररूपा संवित्त्वादेव,—

---

१ क० 'सोपादानात्' पाठः । २ ख० 'ऊर्ध्वधाराम्' पाठः ।

इति स्वभावहेतुः । संविदेव विश्वकारणमन्यासंभवे तत्संनिधौ तदुद्भावात् । अत एव यत् चित्तत्त्वस्य ऐश्वर्यमुक्तं, ततो हेतोर्योगिदृष्टान्त उपात्तः । किमर्थम् । आह 'इति दर्शयितुम्' । किं तत् । आह 'संसारिणाम्' इत्यादि । 'अन्यथा' इत्यादिना उपबृंहणं करोति । 'उपादानम्' इति प्रसिद्धकारणसामग्रीं विनेति यावत् । नच अवस्तुत्वं योगिनिर्माणस्य, नचापि प्रसिद्धकारणजन्यघटत्वापेक्षया अन्यजातीयत्वमिति दर्शयति 'अर्थक्रियाकारी' इति । योगी हि अभिमन्यते—प्रसिद्धार्थक्रियोपयोगयोग्यमेव घटरूपमुल्लसतु—इति । तदेतदलौकिकमिति निरूपयति 'केश' इति । नच तत्र अवस्तुत्वं केशोरगादिविमर्शस्य भावात् । अर्थक्रिया अपि तत्र ह्रादोद्वेगादिका अस्त्येव केशान्तरसाध्या नास्ति अर्थक्रिया इह । सा च प्रमातुः संमता सत्त्वव्यवहारकारणतया इन्द्र जलनिधिजलमसत् स्यात्, साभ्यन्तरप्रवेशात् न तथा,—इति तुल्यम् । स्तम्भितो हि अग्निर्न दहति, न पचति । नच अर्थक्रियातः सत्त्वमाभासान्तरत्वात् तस्या इत्यादि उक्तप्रायम् । तदभावेऽपि न आभासस्य अवस्तुत्वम्,—इति च वक्ष्यते

'अर्थक्रियापि सहजा नार्थानामीश्वरेच्छया ।

नियता सा हि तेनास्या नाक्रियातोऽन्यथा भवेत् ॥' (२।३।१२)

इति । एतत् निरूपयति 'तदेवम्' इति । ननु 'अर्थजातम्' इति जातशब्देन सामस्त्यं स्वीकृतम् । नच समस्तमीश्वरः प्रकाशयति । स हि महासर्गे सृज्यमानमर्थं प्रकाशयेत्, मध्येऽपिवा प्रथमोत्पादावस्थायाम् । व्यवहारकाले तु यदर्थजातमाभासते, तदवस्थितमेव । अत्र उच्यते 'यावच्च' इति । 'उत्पादकाले' इति महासर्गे कारणाभासापेक्षया विना, तया तु सह प्रथमोत्पत्तिकाले

व्यवहारकाले वेति प्रमात्रन्तरेभ्यो विश्लेष्य अन्यैर्मेलयति,—इति व्याख्यातं '**सदासृष्टिविनोदाय**' इति । '**विवृतम्**' इति वृत्तावर्थराशिशब्देन जातशब्द एवंभूतार्थवादी व्याख्यात इत्यर्थः । '**अर्थराशिः**' इति यो वृत्तौ ग्रन्थः, स '**यावच्च किंचित्**' इत्यादिना '**सर्वोऽर्थः**' इत्यन्तेन टीकाग्रन्थेन विवृतः,—इति व्याख्यानं न युक्तं विवृतिकारस्य स्वोक्तिव्याख्यानेऽप्रमाणौचित्यात् ॥ ७ ॥

ननु परनिष्ठत्वं नियमेन यदाभाति, तत् द्विधा दृष्टं किंचित् सदृशात्मकसंक्रमितं दर्पणे इव गजादि, किंचित् स्वशक्तिवलोल्लसितं तदेव स्वप्नसंवेदन इव । तदिदं न निश्चयार्हं—किं स्वप्नयोगदिशा आभासवर्गो बोधस्वातन्त्र्यादुल्लसितः, उत आदर्शदृशा तदतिरिक्तस्वसदृशभावान्तरसंक्रमणबलात्,—इत्याशङ्क्य कार्यव्यतिरेकेण समर्पकबाह्यभावानुमानं सूत्रान्तरेण निराकर्तुं तात्त्विकमनुमानवृत्तं तावदाह

**अनुमानमनाभातपूर्वे नैवेष्टमिन्द्रियम् ।**
**आभातमेव बीजादेराभासाद्धेतुवस्तुनः ॥ ८ ॥**

यत् किंचिदनुमानं, तत् समग्रं विकल्परूपम् । विकल्पश्च अननुभूते न उदेति । एतच्च सर्ववादिनामिष्टम् । ननु इन्द्रियादृष्टप्रभृति यदनुमीयते, तत्र किं वृत्तपूर्वोऽनुभवः । सत्यं वृत्तपूर्वो यत इन्द्रियादृष्टप्रभृति न केनचित् विशेषरूपेण अनुमीयते, अपितु सामान्येन दृष्टरूपालोकाधिकं किंचित् कारणमिति । तत्र मृज्जलयोः संनिहितयोरभवन्नङ्कुरः, स हि सति बीजे भवन्, दण्डचक्रयोः सतोरसन् घटः, सति मृत्पिण्डे भवन्, तदधिकबीजहेतुकस्तदधिकमृत्पिण्डहेतुक इति क्रमेण प्रत्यक्षानुपलम्भजो निश्चयो जायते । तत्र च कारणत्वं नाम सामान्यमकारणव्या-

मृत्तमनधिकव्यापृतं च, अधिकत्वं प्रत्येकं व्यावृत्तिनिष्ठात् प्रत्यक्षव्यापारात् गृहीतमेव । बीजं हि तत्र कारणरूपं वस्तु इति गृहीतम् । अन्यथा एवत्र बीजे कारणशब्दः सङ्केतितो, न मृत्पिण्डादौ सङ्केतितो भवेत् । तस्मात् कारणत्वाभाससामान्यं पूर्वंप्रत्यक्षस्वीकृतम् । ततस्तत्र युक्तं विकल्पनम् । विकल्पनविशेष एव च अनुमानम् । अनुमानमनाभाते विषये न भवति विकल्परूपत्वात् । अनाभाते हि अर्थे भवत्पूर्वसंवेदनं निर्विषयं भवेत्, तद्विरुद्धं च इदमिति स्वभावविरुद्धोपलब्धिरिति सूत्रार्थः । प्रथमं सूत्रभागं गम्यमानार्थनिरूपणेन स्फुटयति वृत्तिकृत् **'पूर्वावभात'** इत्यादिना **'अनुमानम्'** इत्यन्तेन । **'पूर्वावभातान्तःस्थितः'** इति पूर्वकालेति समासः । पूर्वशब्दोपादानेऽपि हि अन्तःस्थितत्वस्य अपरकालताप्रतिर्व्यक्ता । नच विमर्शनमात्रमनुमानम्, अपितु प्रतिप्रवृत्तियोग्यवस्तुनिश्चयरूपम्,–इत्याह **'नान्तरीयक'** इत्यादि । **'आभासः पुनः'** इत्यादिभविष्यत्सूत्रविभागावेतस्य सूत्रस्य तात्पर्यमित्याशयेन भाविसूत्रार्थोपक्रममेव एतत्सूत्रमवतारयति **'यावत्स्व'** इति । युक्तिगतैः सांशत्वप्रसङ्गादिभिर्बाधितत्वमनाश्रित्य अपि परीक्षकसम्मतमेव प्रत्यक्षमिति अनादृत्य अपि हालिकनैचतया अपि न प्रमाणसिद्धत्वमस्तीति आशयः । भाविसूत्रे च अनुमाने दूष्यमाणे प्रत्यक्षमपि दूषितमेव,—इत्यभिप्रायेण आह टीकाकारः **'प्रत्यक्षेण तावत्'** इति । एक एव हि नीलाभासः । स च ज्ञानवर्ती, अपरथा कथमाभासेत । एकसामग्रीकत्वमपि न परस्य परनिष्ठतां कुर्यात् रूपरसादीनामिव । रूपमेव अस्य संवेदनस्य तादृगिति चेत्, अहो स्वोपगमसमर्थ-

---

१ ख. 'कारणभाव' पाठः ।

नग्रहः परस्य—यत् सामान्यप्रभृतौ यः स्वयं परमार्थीकृतस्तं विरुद्धधर्माध्यासमनस्तं मन्यते। तदयं ज्ञानादव्यतिरिक्त आकारः। तत्र समर्पकोऽन्यो न अवभासते दर्पणगते यथा। यच्च उक्तं समानाभिहारात् न पृथक् भासते इति, तत् न। समानाभिहारे हि पृथगाभासनं तावदस्ति अन्यथा कलकलताया एव अनुपपत्तेः। पृथक्त्वेन तु नास्ति आभासनम्, इह तु समर्पकस्य पृथगाभासने पृथक्त्वेन च अनाभासने कलकलवत् मिलितरूपं नीलरूपं नीलद्वैगुण्यं भासेत। देशकालादि अपि समानमेवेति चेत्, अत्र अपि द्वैगुण्यप्रसङ्ग एवेति साकारत्वे दोष एव। सति बाह्ये निराकारश्च न ग्राहक इति उक्तम्। यच्च उक्तं 'प्रत्यक्षतोऽपि सिध्येत्' इति 'अनुमानेन ससंवादः कृतः' इति 'ननु क्षणिकत्ववदपूर्वः प्रसाधितः' इति च, तत्र अपि उच्यते। प्रत्यक्षस्य यद्यपि अध्यवसायापेक्षं प्रामाण्यमिति घोष्यते, तथापि तत्र अयं परमार्थः—प्रत्यक्षं प्रमाणं नीलाभासरूपतया स्वसंवेदने स्फुरत् सिद्धप्रमाणभावमेव विकल्पेन तथा व्यवह्रियते। तत एव विकल्पस्तदपरिगृहीतं स्थैर्यादि अध्यवस्यन्नपि न तत्र प्रमाणम्, अद्यापि आभासयामि इति हि प्रत्यक्षव्यापारमनुकुर्वन् विकल्पः—सदमात्यकविकल्पस्वातन्त्र्येण न प्रामाण्यमुपाश्रयते। तद्द्वयमगृहीते गृहीतत्वेन अध्यवसायमुत्थापयन् प्रमाणफलत्वात् निष्कास्यैतैव। यदुक्तं बाह्यार्थप्रतिबन्धबलात् प्रत्यक्षस्य अत्र प्रामाण्यमिति, तत्र अपि प्रतिबन्धस्य ग्रहणं न वा। यदि ग्रहणं, तर्हि प्रतिबन्धग्रहणादुत्पद्यमानं संवेदनमनुमानमेव निश्चयात्मकं भवेत्, न प्रत्यक्षं तत्र तत् स्यात्। अनुमानं च विचार्यं वर्तते। अथ वस्तुतः प्रतिबन्धोऽस्ति,—इति उच्यते, तत् सिद्धे बाह्येऽर्थे भवे-

१ ख० 'वा न' पाठः।

देशा याता । स च न अत्रापि सिद्धः,—इति कः प्रतिबन्धार्थः । न च चक्षुः प्रतिबन्धोऽस्ति,—इति प्रत्यक्षमर्थे प्रमाणम्, अपितु साक्षात्कारित्वात्, अन्यथा चक्षुषि अपि सत् प्रत्यक्षं भवेत् ।

'अर्थस्यासंभवेऽभावात्............ ।'

इति तु अर्थजत्वसिद्धेऽन्वयव्यतिरेकोक्तिः, अर्थजत्वात् च अर्थसाक्षात्कारित्वमस्येति । एवमर्थाविनाभावमूलं प्रामाण्यं द्वयोरुक्तम् । अयं एव तु इह असिद्धः । अथ आलोकस्य अत्र प्रत्यक्षो बाह्योऽर्थः,—इति अस्ति अभिमानः, सांख्यवदारिह च प्रमाणं चिन्त्यते,—इति उच्यते, तत् स्थैर्यसामान्यद्रव्यप्रभृति अगो-पालोकसिद्धं किं न अङ्गीक्रियते । तत्रापि मूढाः परे विसंवाद-यन्ति इति च तुल्यम् । यत्तु 'सदृशार्पकं दृष्टं दर्पणादिप्रति-बिम्बस्य' इति उक्तं, तत्र उभयमपि बिम्बप्रतिबिम्बात्मकं परमा-र्थतः संविदाकारमात्रं स्वप्न इव दर्पणसमान्तर्दर्पण इव च । तत्र किं केन अर्पितमिति न निश्चितः कल्पः । किंच अर्पकेण विना न उपपद्यते ज्ञानगत आभास इति उच्यमाने, स्वप्नद्विचन्द्रादौ किं वाच्यम् । न चापि दर्पणदृष्टान्तोऽत्र समः । इह हि संवे-दनादुपादानात् विषयात् च नीलाकारो बोध उत्पद्यते । तदा तु एवं दर्पणात् गजात् च गजाकारो दर्पण इति युक्तम् । अपेतेऽपि गजे दर्पणस्य स्वसदृशसन्तानानुबन्धिना तद्धित्सदृश-सदृशैकस्वभावानुबन्धिसन्तानविज्ञानलक्षणेन वपुषा अवस्थि-तस्य मृत्पिण्डस्य इव दण्डचक्रादिसहकारिकलापप्रसादोपनतशरा-वरूपता गजाकारता अनुवर्तते । एवमविभागसन्ततिजननसनि-दृष्टाधिककारणान्तरसंनिधानावधिः समर्प्यसमर्पकता च दर्पण-

१ ख. 'अर्थजसिद्धे' पाठ । २ क. 'सदृशसमर्पक' पाठ । ३ ख. 'बिम्ब' पाठः । ४ ग. 'प्रसाद' पाठ ।

गजयोस्तुल्यकालकृतैव । तत एव न पारमार्थिकः कार्यकारण-भावोऽयम्, अपितु विम्बप्रतिविम्बव्यवहारः । तत एव विभ्रमोऽयम्, न परमार्थः,—इत्यपि अस्ति प्रवादो यो ज्ञानाकारे न केनचिदद्यापि क्रियते । प्रकृते तु ज्ञानार्थयोः कार्यकारणभावोऽस्त्येव, तत एव हि ग्राह्यस्य पूर्वकालभावित्वम् । यदाह

'भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥'

इति । नच ग्राह्यं भिन्नकालत्वेन चकास्ति इदमहं गृह्णामीति तुल्यकालतयैव अध्यवसानात् । ज्ञानाकारस्य प्रतिविम्बाभासस्य इदं तुल्यकालत्वमध्यवसीयते इति चेत्, मूढ कथमुक्तवानसि—वाह्याकारोऽध्यवसीयते, अध्यवसायवलाच्च प्रत्यक्षसिद्धता वाह्यस्य—इति, प्राच्यश्च विषयक्षणोऽर्पकाभिमतस्तत्सदृश इति कुतः । दर्पणप्रतिविम्बे हि विम्बमपि उपलब्धमिति निश्चितं सादृश्यमात्रे, इह तु विम्बस्य नाम अपि न अवगतम्,—इति कथमेतत्तुल्यता भवेत् । तस्मात् यदि अनुमानात् पूर्वं व्यापरिष्येत अत्र प्रत्यक्षं, तत् पाश्चात्यमनुमानं संवेदकतायां[1] योज्येत नाम; नतु एवमस्ति,—इति । तदाह **'आभासद्वयाभावात्'** इति । ननु मा भूदाभासद्वयम्, तथापितु बाह्यस्य अनाभासमानस्य अपि प्रत्यक्षगम्यता भविष्यति अनुमानगम्यतैव । न, एतत्तुल्यमिति ब्रूते **'आभासमान'** इति । पश्यामि एतदिति हि आभासमानतैव प्रत्यक्षप्रमेयता । ननु इयमेकस्य तावदस्ति नीलस्य, ततः प्रत्यक्षसिद्धो नीलः । स एवच वाह्यो भविष्यति । किं द्वितीयनीलाभासान्वेषणेन । अत्र अपि आह **'भिन्नस्य'** इति । एतच्च

---

१ क. 'संवेदनतायां' पाठः ।

*'...............नामवाह्यसिध्यति ।'* ( १।५।२ )

इति वितत्य निरूपितमधस्तात् । एतेन 'अर्थक्रियाकारित्वादथाधितो नीलः किं बाह्यस्त्वज्यते' इत्यपि प्रत्युक्तमर्थक्रियाया अपि बाह्यायाः कस्याश्चिदसिद्धेः । अवृत्त्याभासमात्राभासवस्त्वनाभासादय एव हि व्यावहारिकाः, न अधिकं किञ्चिदिति प्रत्यक्षेण बाह्यस्य असत्त्वे अनुमानमपि दण्डापूपिकयैव न संभवति,—इत्याह 'नापि' इति । धूमाग्न्योरनुपलम्भाभेदपलम्भौ धूमस्य अनुपलम्भोऽप्युपलम्भादुपादेव धूमस्य उपलम्भ इत्येवं प्रत्यक्षद्वयेन अनुपलम्भत्रयेण च सहैव कार्यकारणता व्यवस्थाप्यते । तत्रापि अनुपलम्भोऽपि अन्योपलम्भ एव,—इति प्रत्यक्षव्यापारादेव अकारणता व्यवस्थाप्यते भावसिद्धि॰[द्धेः]। नच बाह्योऽर्थः प्रत्यक्ष इति तेन सह कस्यचिदपि न कार्यकारणभावसिद्धिरिति तस्मिन्ननुमेये न ज्ञानं कार्यहेतुः । अथ नीलस्य स्वभावान्तर बाह्यत्व साध्यतामर्थक्रियाकारित्वादिना स्वभावहेतुना,—इति । तत्रापि आह 'अप्रत्यक्ष' इति । अप्रत्यक्षो धर्मो यस्य साध्यस्य, तस्य स्वभावहेतुरपि कथं साधकः । प्रत्यक्षग्रहणं प्रमाणोपलक्षणम् । प्रमाणसिद्धे हि धर्मिणि सिद्धेन तन्मात्रानुबन्धिना स्वभावेन स्वभावो यो व्याप्तः, स तन्मात्रान्वयिनं साधयति धर्ममिति । *इह च नीलमेवं न किंचन स्वतन्त्रं प्रसिद्धं प्रमाणेन, यस्य धर्मिणोऽर्थक्रियाकारित्वाख्येन धर्मेण तन्मात्रानुबन्धी बाह्य*-तालक्षणः स्वभावः साध्यते प्रमाणेन अप्रकाशस्य प्रकाशनायोगात् । प्रकाशात्मत्वे च सर्वे धर्मि साधनसाध्यरूपं संविद्व्यतिरिक्तमेव सिध्येदिति । अनेनैव न्यायेन विज्ञाननये सन्तानान्तरसिद्धिरयुक्तेति सूचितम् । तथाहि तत्र चैत्रस्य यो मैत्र-

१ 'अन्येन' ग. । २ 'इव' ग. ।

शरीराभासः प्रत्यक्षस्तत्रैव चेत् सन्तानान्तरं प्रमातृरूपमनुमीयेत, तर्हि प्रमातुरनुमेयस्य इयत्ताव्यवस्था न भवेत् । अनुमातृसंख्यया हि तदनुमेयाः प्रमातारः स्युः । अत्र मैत्रात्मनिष्ठो यो मैत्रशरीराभासस्तत्रैव सर्वैरनुमातृभिर्बुद्धिसन्तानोऽनुमीयते । तत् सिद्धे तस्मिन्धर्मिणि भवेदद:, तस्यैव तु कथं सिद्धिरनध्यक्षत्वादनुमानस्य च चित्तारूढत्वात् । नैनु न नीलमत्र धर्मीक्रियते, नापि तस्य संवेदनातिरिक्तत्वं धर्मः साध्यते; किन्तु स्वसंवेदनसिद्धस्य नीलाभासविज्ञानस्य अपरिदृष्टेन बाह्येन हेतुना सहेतुकत्वं साध्यते । तेन च यद्यपि व्याप्तिर्न गृहीता, तथापि कार्यव्यतिरेकेणेति कादाचित्कतया यदिदं कार्यं नीलाभासं विज्ञानं, तत् तथाभूतमधिकं हेतुं विना न उपपद्यते,–इत्येवं नियमवतो व्यतिरेकात् सामान्यमुखेन अपि अन्वयः सिध्यति एव । तत्र आह '**तथापि**' इति । यदि तावदधिकं हेतुमात्रं साध्यते, तत् कापिलाभ्युपगतसंविन्मात्रस्वभावाधिकं संविदैश्वर्यमिच्छात्मकमुररीकृतमेव कारणतया स्वातन्त्र्यं नामेति सिद्धं साधितं स्यात् । अथापि संविद्बाह्यताविशिष्टं तदधिकं साध्यते । तदनुपपन्नं संविद्बाह्यस्य स्वप्नेऽपि अनाभातस्य विकल्प्यत्वायोगादनुमेयता अनुपपन्ना यतः । इयता '**अनुमानम्**' इत्यादि संक्षेपेण व्याख्यातम् । '**इन्द्रियम्**' इत्यादि व्याचष्टे '**चक्षुरादेः**' इति । पूर्वाभाते एव अनुमानम्,–इत्येतत् साधयितुं तावदाह '**अनुमानं हि**' इति । यत एवं, तस्मात् युक्तः सूत्रार्थः । ननु विकल्पमात्रमेव किमनुमानम् । नेत्याह '**अव्यभिचारी**' इति । स्वभावहेतुना तादात्म्यादेव तत्प्रमाणरूपं साध्यं सिद्धमेव सत् व्यामोहादव्यवहृतं व्यवहार्यते परं लोकः । कार्यहेतुना तु अपूर्वं साध्यते,–

---

१ 'इयत्त्वा' ख. । २ 'ननु नीलं' क. पाठः । ३ 'अधिक' ख. पाठः ।

इति तत्रैव अनुमानस्य स्वतन्त्रं प्रामाण्यम्। किंच कार्यकारणभावमूल एव स्वभावहेतुरिति वक्ष्यते

'........ स्वभावो यत्र व्योत्पत्तिमूलजः।' (२।४।११)

इत्यत्र। तत् कार्यहेतोरेव सर्वो हेतुप्रपञ्चः पक्ष्यप्रायः,—इत्याशयेन कार्यपदम्। तस्य अनुमानविकल्परूपतायामपि प्रामाण्यं साधयितुमाह **'तच'** इति। **'अनुमानं कर्तृ प्रथयति'** इति संबन्धः। **'नच तावता'** इति अन्तःस्थितसंस्कारशेषस्य यद्वीरूपतयावभासनलक्षणेन विच्छेदमात्रेण आभासितेन *अपि विशिष्टौ देशकालौ विना कार्यीयव्यापारपर्यन्तप्रवृत्तिजनन-*मनुमानेन न कृत भवेत्,—इति विशिष्टदेशकालालिङ्गितेऽर्थे प्रवृत्तियोग्ये यत् विकल्पनं, तत् प्रमाणरूपमविसंवादकतया अनुमानमुच्यते, अन्यत्तु पदार्थमात्र एवं एकान्तिनि असंबद्धपदार्थसमूहे वा संबद्धरूपेऽपि पूर्वानुभूतानधिके वा अधिकेऽपि वा बहिरसंनिहिते सन्निहितेऽपिवा नियतदेशकालयोगात् कार्यीयप्रवृत्त्ययोग्ये पदार्थस्वभावव्यवस्थात्मकमनोवाग्व्यापारलक्षणप्रवृत्तिकर्तव्यतायां च प्रत्यक्षात्मके प्रमाणान्तरमहिमानमाविष्कुर्वन्ति यत् विकल्पनं—घट इति, दश दाडिमानीति, स रस इति, नद्याम्नीरे इति, यत्र धूम इति, न तत् प्रमाणं प्रवर्तकत्वायोगात्। एतद्विलक्षणं तु अनुमानमिति दर्शयति **'एष पुनः'** इति। **'व्याप्तिविमर्शात्'** इति यत्र धूमस्तत्र अग्निरित्यस्मात्। ननु धर्मिणि योऽग्निः सभवति तावदत्रेति अयोगव्यवच्छेदात्, स व्याप्तिविमर्शेन स्वीकृतः सामान्येन व्याप्तेर्ग्रहणात्; तत्रेति धर्म्यंशेन च विशेषेण तद्विशिष्टोऽग्निः साध्यते,—इति विशेषोऽनुमेयः स्यात्, न सामान्यमिति 'सामान्यविषयमनुमा-

१ 'कथयति' ख.। २ 'एव वैषा' ग. पाठ।

नम्' इति हीयेत;—इत्याशङ्क्य आह '**धर्मप्रत्यक्ष**' इति । अन्वयव्यतिरेकवत् पक्षधर्मता अपि नाम तृतीयमङ्गमनुमानस्य । सा च प्रत्यक्षेण अधुनातनेन[1] गृहीता,—इति प्रत्यक्षविकल्पानुगृहीतो व्याप्तिविकल्पोऽनुमानस्य न विशेषविषयतामानयति विशेषांशस्य प्रत्यक्षसिद्धत्वात्, आधाराधेयतायाश्च व्याप्तौ सामान्येन स्फुरणात् 'यत्र यत्र' इति । '**इन्द्रियम्**' इत्यादि व्याचष्टे '**पूर्वानुभूतमेव**' इत्यादिना । ननु कथमिन्द्रियमनुभूतम्, नित्यपरोक्षं हि तत् । अत्र आह '**नहि**' इति । ननु बीजस्य, मृदश्च निमित्तताज्ञाने कथमन्यदीया निमित्तता ज्ञाता स्यात्,—इति शङ्कां वारयति '**नहि तत्र**' इति बीजस्य निमित्तताज्ञाने । '**उत्तरत्र**' इति । ननु कुम्भं प्रति मृदो निमित्तताज्ञाने बीजमपि निमित्तभावेन स्वीकृतमिति कुतः । अत्र उच्यते '**प्रसक्त**' इति । प्रसङ्गश्च कारणतासामान्यप्रतिभाससमुत्थापितः इति भावः । ननु विशेषसंवेदनावसरे कथं सामान्यं संविदितं स्यात् । कथंच न स्यात्, प्रत्युत विशेषोपरञ्जकतैव जीवितं जातेरिति उक्तं 'सर्वज्ञस्यापि जातिः प्रकाशमाना' इत्यत्र अवसरे । सौगतानामपि प्रति[2]व्यावृत्त्यध्यवसायः,—इति तद्व्यवह्रियमाणप्रमाणभावस्य प्रत्यक्षस्य एकैकव्यावृत्तिविश्रान्ततैव । इहापि प्रत्याभासं प्रमाणे व्यापार इति वक्ष्यते

'.................देशकालाद्यभेदिनि ।
एकाभिधानविषये मितिः..............।।' (२।३।२)

इति । प्रत्यक्षानुपलम्भौ हि कार्यकारणभावं साधयतः । तत्र प्रत्यक्षं प्रत्याभासं प्रमाणम्, अनुपलम्भोऽपि अन्योपलम्भस्वभावत्वादेवम् । आभास एवच सामान्यमिति वक्ष्यामः । ततश्च

१ 'अधुना तेन' ख० पाठः । २ 'वृत्त्याध्यव' ख० पाठः ।

मृदो घट इति प्रत्यये यत् यस्य नियममनुविधत्ते, तत् तस्य कार्यमिति अपि सामान्यमवभातमेव । ततश्च रूपोपलब्धिर्यस्य नियममनुविधत्ते, तत् नेत्रमिति तत्पूर्वं प्रमाणं गृहीतमेव । तदेव सामान्यतो दृष्टमिति दृष्टव्यपदेशो युक्त एव । तदाह **'समर्थयिष्यते'** इति ॥ ८ ॥

एष तु न बाह्यस्य अस्ति वृत्तान्तः,—इति कथमनुमीयेतेति ब्रूते

> आभासः पुनराभासाद्बाह्यस्यासीत्कथञ्चन ।
> अर्थस्य नैव तेनास्य सिद्धिर्नाप्यनुमानतः ॥ ९ ॥

पुनःशब्द इन्द्रियादेरपि कारणसामान्येन दृष्टात् विशेषं द्योतयति । बाह्यस्य आभासात् बहिर्भूतमनाभासमानमप्रकाशमानं यदर्थरूपम्, तत् कथंचिदपि विशेषान्तरतिरस्कारेणापि बाह्यतया अनाभासमानतया नैव आभातम् । आभातत्वमनाभासमानता च,—इति कथं परस्पराभावप्राणमेकदा सगमयितव्यमेकत्र । नहि भवति अनीलतया इदं नीलमिति । तेन बाह्यस्य न केवल प्रत्यक्षेण न सिद्धिः, यावदनुमानेनापि । **'कथंचन'** इति च आवर्तते । तदयमर्थः—अनुमान तावत् बाह्ये न अस्ति, भवतु वा, तथापि तत् संवेदनरूपं तावत् स्वसंवेद्यं । 'व्यतिरिक्तस्य च संवेदनमनुपपन्नम्' इति उक्त प्राक्

'प्रकाशात्मा प्रकाश्योऽर्थः' ·· · · · ।' ( १।३।५ )

इति । ततश्च यदपि किंचित् प्रमाणमुपयाच्यते 'सत्यं ब्रूहि, भेद प्रति साक्षि भव' इति, तत् भेदस्य असत्त्वता पश्यदपक्षपातित्वेन न्याय्यात्पथो विचलितुमशक्यमभेदमेव आगूरयति,—इति न केनापि प्रकारेण प्रकाशबाह्यस्य सिद्धिरिति सूत्रार्थः ।

---

१ 'विदलितु' ख० ।

ननु घटः प्रकाशात् बहिर्भूतोऽपि दृष्टः पटैकविषयात्,—इत्याशङ्कां शमयितुं वृत्तौ '**घटादि**' इति आभासस्य विशेषणम्। स हि तस्य प्रकाश एव न भवति,—इति यावत्। '**तेन**' इति व्याचष्टे '**ततः**' इति। अपिशब्दं '**ततः**' इत्यनन्तरं योजयित्वा वृत्त्यर्थो व्याख्येयः। न भवत्येव तावदनुमानम्। '**ततोऽपि**' इति संभवतोऽपि अनुमानात् न बाह्येऽर्थे सिद्धिरिति '**बाह्यस्य**' इति विवक्षितं सूत्रे पदमिति विवृणोति '**कादाचित्क**' इत्यादिना। चित्तत्त्वस्य यदैश्वर्यं, तस्येति योज्यम्। '**आहत्य**' इति कारणतासामान्यपृष्ठे बाह्यतात्मकं विशेषणान्तरं टङ्कयितव्यमित्यर्थः। '**सच**' इति बाह्यत्वविशिष्टोऽर्थः। ग्रामात् दर्पणात् गृहात् देहात् संवेदनात् बाह्यमिति बाह्यतः सामान्यमेकं, तच्च गृहाद्बाह्यमिति प्रतीतौ सिद्धम्। ततश्च समर्पकं दर्पणादिबाह्यं संवेदनादपि सेत्स्यति क्रमिकाभासवैचित्र्यात् हेतोरित्याशयेन पूर्वपक्षयति '**ननु चक्षुरादि**' इति। न इदं बाह्यत्वं घटस्य ग्रामाच्च संवेदनाच्च एकं, संवेदनात् बाह्यं हि असंवेदनरूपं; ननु गृहात् बाह्यमगृहरूपम्। एवं सति हि गृहैकदेशः कुड्यादिर्गृहान्तर्वर्त्यपि च घटादिर्गृहबाह्यः स्यात्। नच एवम्। गृहसंनिकृष्टं च यद्वत् बाह्यं गृहात्, न तद्वदेव संवेदनात् तस्य अमूर्तस्य संनिकर्षादिदेशव्यवहार्यत्वाभावात्। ततः शब्दसामान्यमात्रेण इदं साध्यमेकं प्रतिभाति,—इत्यभिप्रायेण उत्तरयति '**अत्र उच्यते**' इति। '**नासीदेव**' इति पौर्वकालिकमाभासनं निषिद्धमिति यो मुह्येत्, तं बोधयति '**अत्र हि**' इति। लोके हि अत्यन्तासंभवि एवं व्यपदिश्यते—न दृष्टं, न श्रुतमद्यापि तावदेतत्—इति। आवृत्त्या सूत्रभागं विवरीष्यन् पूर्वं सूत्रविष-

---

१ 'ष्टं यद्वत्' ख.। २ 'भव्यैवं' ख. पाठः। ३ 'सूत्रार्थविषय' ख.।

यभागेन परदर्शनाभिप्रायेण उपसंहारदिशा संक्षिपति **'एतच्च'** इति। उक्तमिति सवन्धः। कथं तस्य अनाभासमानविषयत्व परैरुक्तम्,—इत्याह **'विकल्पो हि'** इति। तमावृत्त्या सौत्रमर्शं व्याचष्टे **'अध्यवसायोऽपि'** इति। पुनःशब्देन परमतात् स्वमतं विशेषवत् द्योतयति। **'उक्तः'** इति

'भ्रान्तित्वे चावसायस्य ·· · ·· ··।' (१।३।५)

इति

'भासयेच्च स्वकालेऽर्थात् ··· ······।' (१।४।२)

इत्याद्युद्देशेषु, वक्ष्यते च

'केवलं भिन्नसवेद्य·· ··········।' (१।५।२१)

इत्यादिप्रदेशेषु। **'बाध्यम्'** इति आवश्यके ण्यत्। **'ततोऽपि'** इति सभवतोऽपि अनुमानात् प्रमाणान्तरादपिवा,—इति अपि-शब्दार्थः॥ ९॥

यत एवं बाह्येऽर्थे सवेदनान्तःप्रतिबिम्बरूपाभासोत्थापके प्रमाणं न किंचिदस्ति, तस्मात् युक्तमुक्त

'चिदात्मैव हि देवोऽन्तःस्थितम्·· ····।' (१।५।७)

इति। तत्र तु इद निरूप्यम्—यदि अन्तःस्थित एव चिदात्मनोऽर्थराशिः, तत् कथमसौ न भासते। कः खलु आह साहसिको न भासते इति। एतदाह सूत्रेण

**स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।**
**अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते॥ १०॥**

चोऽप्यर्थे भिन्नक्रमः। न केवलमिदमित्यनेन वपुषा निर्भासमानस्य बाह्यभावजातस्य भासनं सकललोकसिद्धमस्ति, यावत् भगवतः प्रकाशैकरूपस्य अन्तःस्थिततया अपि भासनमस्त्येव, केवलं बहिर्भावलक्षणेदन्तानुल्लासादहन्तौचित्येनैव अस्ति अवभासनं

ननु नास्ति । तदभावे हि कुविन्दस्य 'पटं करवाणि' इतिप्रथम-परामर्शे इच्छाशब्दवाच्ये यदि एष्टव्यं नियामकं न स्यात् घटस्य इव पटस्य निष्पत्तिः, ततो भवितव्यं तावदेषणीयेन पटेन । तदेव तस्य पटस्य निर्माणमिति चेत्, अस्तु एतत् बुद्धिभूमावशुद्धविद्याभूमावपि वा । तत्रस्थतया तु निर्माणं संविदवस्थितस्यैव एष्यमाणस्य युक्तम् । तत्रापि चेतनेन अनिष्टनिर्देशत्वादिच्छान्तर-कल्पने अनवस्था । यत् नरेश्वरविवेकः

'निर्मित्सायां च निर्मेयमेष्टव्यमपृथक्प्रथम् ।
अन्यथेदन्तया भानाद्भवेन्निर्मितिरेव सा ॥
तस्या अपिच निर्मित्सा प्रागुपेया तथापिच ।
एषा वार्तानवस्थैवं ततश्च प्रकृते क्षतिः ॥'

इत्यादि । तेन अवश्यंभाविनो विमर्शात् तत्प्रकाशोऽनुमीयते । एतच्च पूर्वं दर्शितं

'भासयेच्च स्वकाले················ ।' ( १।४।२ )

इत्येतत्सूत्रटीकायां 'प्रकाशस्वभावश्च परामर्शो यस्य' इति व्याख्यानावसरे । **'आत्मनीव'** इति वृत्त्या आत्मसंस्थत्वमत्र हेतुत्वेन स्फुटीकृतम् । आत्मनि हि निर्भासमाने तदभेदस्थितं कथं न निर्भासेत । तथाच विवरीष्यति **'आत्माभेदश्च'** इति । एकशब्देन अवश्यमेषणीयनियन्त्रितया इच्छया भवितव्यमिति आह ।

'चिदात्मैव····························· ।' ( १।५।७ )

इत्यनेन सूत्रेण सह अस्य संगतिं करोति **'प्रमातुः'** इत्यादिना । **'तथोचितेन'** इति अहमित्यात्मना । **'भासनमस्त्येव'** इति संक्षिप्य व्याचष्टे **'भासते एव'** इति । शिष्टस्य संक्षिप्तव्याख्या **'परामर्शदर्शनात्'** इति । **'प्रमाता इत्यादि'** इति योऽसौ

१ 'क्व कथम्' ख. । २ 'मर्शनात्' क. ।

**'देवः'** इति पूर्वमुक्तः । ननु किमनेन **'आत्मसंस्थस्य'** इति *आभासमानभावविशेषणेन व्यभिचाराभावात्*,–इति दर्शयति **'सर्वस्य'** इति । **'ततः'** इति पुनरुच्यमानादेवमवगम्यते–यद्यपि विश्वं भगवदात्मनि सदा स्थितं, तथापि तच्छक्त्यैव अध्यारोपि-तप्रमातृभावप्राणादिरूपापेक्षया इदमित्यपि भेदेन भाति, तदा तु सिसृक्षात्मनि परिस्पन्दे तत् विश्वमात्मनि सम्यक् तिष्ठति कथं-चिदपि भेददशामनाश्रितमिति । **'स च'** इति अर्थेष्वपि स्वयं प्रकाशः सर्गे सर्वसाधारणे स्थिरे चिकीर्षिते भगवतः स्वप्नभ्र-मयोरादौ प्रारम्भे पाशवसर्गचिकीर्षायां च अस्थिरासाधारण-रूपायां तावति भगवद्रूपसमाविष्टस्य इव प्रमातुः स्रष्टव्येषु तत्त्वभुवनादिषु तेषु तेषु च भावान्तरेषु सहजः स्वरूपप्रकाशन-मात्रायातः प्रकाशस्य स्वभावपरामर्शः,–इति नयेन । विकल्पनो-त्प्रेक्षादौ तु पूर्वानुभवभावे प्राच्यप्रकाशपरामर्शस्यैव पुनरुन्मेषा-दसहजोऽसौ प्रकाशः, यदि वा सहजत्वं प्रकाशस्य इदन्तायाः कथंचिदपि अनुल्लासादहमित्येवस्वरूपेण स्थितेः । तच प्रथम-सृष्टौ चिकीर्षितायाम् । सृष्टस्य तु सृष्टेदन्ताकस्य मध्ये निःस्तिमि-तस्य इव यदहंरूपत्वमिदत्वेन अप्रकाशनात्, तत् पूर्वप्रकाशा-यत्तमिति सहजत्वं विमर्शांशेन प्रकाशांशेन च अहप्रकाशस्य योजनीयम् । ननु असावर्थेषु भवतु प्रकाशः, अहमिति तु कुतः । आह **'स च'** इति । प्रकाशो हि तावदस्त्येव । **'नच इदम्'** इति निर्माणरूपतैव तथा स्यात् । तत्रच अनवस्थेति हि उक्तम् । इदमिति चेत् विच्छेदो नास्ति, तदर्थादायातमविच्छे-देन । अविच्छेद एवच आत्मविश्रान्तिलक्षणः प्रकाशस्य अह-मितिरूपमिति दर्शितम् । इदमिति च बाह्यताभासेन[1] योजना

---

1 'भासन' ख॰ पाठ ।

प्रकाशते । तथा च विना नीलमाभासान्तररूपं कथमिव न भवेत्, बाह्यताभासस्य अपि एषैव वर्तना,—इत्यनेन क्रमेण सर्वमिदं सिसृक्षाभूमौ संस्कारभूमौ च आत्मनि अहमिति प्रकाशमानमवस्थितमेव । एकान्तभेदग्रहग्रस्तास्तु नीलादीनामभावमेव बहिरसंभवदशायां मोहात् मन्यन्ते । नच एतत् युक्तम्,—इत्याह **'तस्य'** इति । नीलादीनामन्तःप्रकाशस्य अभावे तद्विषया कथमिच्छेति चेतनोचितमिच्छापूर्वकतया यत् निर्माणं, तत् विघटते । ननु इच्छा अस्तु नीलादिस्रष्टव्यविषया, किं तत्प्रकाशेन । आह **'प्रकाशपरामर्शयोः'** इति । इच्छा हि परामर्शविशेष एव । परामर्शश्च प्रकाशस्य स्वभावः । स्वभावः स्वभाविनश्च अभावे स्वभाव इति न युक्तम् । एतच्च दर्शितं वितत्य

'भासयेच्च स्वकालेऽर्थात्‌ .................... ।' ( १।४।२)

इति सूत्रे । **'एष च'** इति यो निर्मातृतामयोऽभ्युपगमलक्षणः प्रकाशः, सैव इच्छा । स्वसंवेदनसिद्धत्वाच्च कः सचेताः प्रत्याचक्षीत एनमर्थमिति दर्शयति **'भुङ्क्ते'** इति । सामान्यरूपत्वेन यत् भोग्यगन्तव्यादिरूपं ग्राह्यं, शरीरेन्द्रियप्राणबुद्ध्यादिविशेषानुल्लेखने च यत् ग्राहकं तदाभासतोऽन्योन्यभिदि च यस्मिन् मनोविज्ञाने मध्यमात्मनि अन्तःसंजल्पे, तद्रूपतामप्राप्त एव यः प्रथमः पश्यन्तीशब्दवाच्यः इच्छालक्षणः प्रसरो यत्र प्रमातृप्रमेययोः सामान्यरूपतया अपि न विवेकोल्लास इति, एतद्वस्तु स्वयमेव निर्भासते । अत्र हेतुमाह **'यतः'** इति अभिन्नस्य प्रमातृप्रमेयरूपस्य अनुन्मिषितविभागस्य अपि यदि वस्तुतः प्रकाशो न स्यात्, तत् त्वरितं लिपिपाठे वेगसरणे त्वरिताभिधाने च

१ 'वार्ता' ख. ।

रेखातो रेखान्तरं, देशात् देशान्तरं,स्थानकरणादेः स्थानकरणान्तरं च गच्छतस्तास्तास्त्यक्तव्यान् ग्रहीतव्यांश्च भागानपरामृशतः, तयोश्च त्यागोपादानयोः कर्तारमविमृशतस्तानि विचित्राणि त्यागोपादानानि कथं भवेयुः परामर्शपूर्वकत्वेन एषां दृष्टत्वात्। तदिमानि भवन्ति स्वकारणं परामर्शमनुमापयन्ति । नच असौ भेदेनैव परामर्श एषामिति । भेदेन हि परामर्शे वाचिकमानसपरिस्पन्दपरम्परातोऽभिलापसंकेतसरणप्रबन्धसद्भावे त्वरिततैव न निर्वहेत्। आह च अपोहे **'क्वचिद्वाङ्मनसस्पन्दं विना'** इत्यादि । तदयं प्रयोगः—प्रमातृप्रमेयप्रकाशस्त्यागोपादानयोरस्ति चेतनक्रियात्वात्,—इति कार्यहेतुः । यदस्ति, नच पृथक्, अवश्यं तदपृथक् तृतीयराश्यभावात्,—इति स्वभावहेतुः । **'एवं वाचनधावनादि'** इति ग्रन्थोऽयं प्रमातृप्रमेययोरभेदेन अपि अस्ति सद्भाव,—इत्येतावति अस्मिन्नंशे हेतुतया व्याख्येयः, नतु **'भुञ्जे गच्छामि'** इत्येतदनेन स्पृश्यते इति । तदाहुः श्रीपरमेष्ठिपादाः

'यदा तु तस्य चिद्धर्मविभवामोदजृम्भया ।
विचित्ररचनानानाकार्यसृष्टिप्रवर्तने ॥
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा तुटिः ।'(शि०दृ० १।८)

इति उपक्रम्य

'सा च दृश्या हृदुद्देशे कार्यस्मरणकालतः ।
ग्रहर्पावेदसमये दरसदर्शनक्षणे ॥
अनालोचनतो दृष्टे विसर्गप्रसरास्पदे ।
विसर्गोक्तिप्रसङ्गे च वाचने धावने तथा ॥
एतेष्वेव प्रसङ्गेषु सर्वशक्तिविलोलता ।'

इति । अत्र हि तात्पर्यमेतत्—सर्वशक्तिपरिपूर्णतात्मकं चितो

१ 'मर्शत' क पाठ । २ 'अभिमृशत' क । ३ 'परस्परत' ख ।

यद्रूपम्, तत् यदा स्वातन्त्र्यात् संवित्स्वभाव आमृशति तत उन्मुखीभूतायां चिद्रूपतायां तत्प्रसरप्रथमविकासलक्षणायामिच्छाकलिकायां स्थितः सर्वाविभागेन स्थितिं भाविन उपयोगिरूपस्य प्रमातृप्रमाणप्रमातव्यवर्गस्य विमृशन् भाविभेदाः शक्तीरभेदकल्पेनैव पिण्डीकृताः सतीर्गोलकशिम्बिकादिविकल्पेन उत्थापयति, तत एवच भाविनियतक्रमककार्यं जायते। यथा श्लोकं स्मरेयममुमिति सुस्मूर्षया एकयैव मध्यवर्तिषु वर्णपदादिषु प्रत्येकस्मृतिसन्ततिप्रबोधनकारणमेषणमन्तरेणैव नियतक्रमकस्मरणपरम्परोदय इति। नच वाच्यं—सर्वमविभागेन संवेदनान्तःस्थितम्, तत् कथं नियतस्य कार्यकलापस्य उदयः इति। यत इमं कार्यविशेषमित्थं करोमि,—इति तावत्कार्योपयोगिनि वस्तुजाते असौ प्रथमेच्छा भवन्ती सर्वं तावदुपयोगि विकल्पयति। तत्संस्कारसंस्कृतात् तु अभ्यासभावनोपकृतप्रमातृरूपादुत्तरोत्तरबोधस्पृष्टकार्यक्रमोदयः। एवं वाचनधावनादावपि मन्तव्यम्। यदाह शास्त्रकृदेव

'अत एवाभ्यासवतामपोहेन विनापि तत्।
प्रबोधात्केवलादेव जायते वाधनादिकम्॥'

इति। तेन प्रथमेच्छाविषयीकृतं विचित्रतया तावत् कार्यं प्रसूयते यदि मध्ये तदिष्टप्रतिघातकमिच्छान्तरं नोदेति। नियतिशक्त्या च तत्र तत्र तत्तत् सहकारि अपेक्षणीयं धावन इव बलादि। ततश्च स्थितमेतत्—कुम्भविशेषं पटविशेषं च चिकीर्षतः प्रथमेच्छास्पन्दे कुम्भकृत्कुविन्दादेः कर्तव्यतादि निर्भासते एव। तदत्र निर्णये विज्ञाननयदूषणप्रस्तावे यदाभासवैचित्र्यकारणत्वेन शङ्कितम्, तदपि उपपन्नमेव। तथाहि मुख्यत्वेन तदैश्वरेच्छैव अनन्तसृष्टिसंहारप्रबन्धसहस्रं क्रोडीकृत्य अव-

१ 'भ्यासे भाव' ख. २ 'तदी' ख. पाठः।

स्थिता तस्य नियतक्रमकस्य हेतुः । तन्मध्य एव नियतिशक्त्या श्रीमत्सदाशिवादीनां मन्त्रेश्वरादीनां किंबहुना ब्रह्मादीनामिच्छा। तत्रापि जन्माभाससमय एव एकप्रघट्टकमिलितकर्मप्रबन्धरूपसंवेदनम् । तन्मध्येऽपि प्रथमकारणाभासः उपसर्पणप्रत्ययाभासः पर्यन्तेऽपि वा समनन्तरप्रत्ययाभासः । सोऽपि हि आभासभागमिलितितावत्प्रमातृवर्गमेलनाजनितविचित्रभावभूतात् नीलाभासात् भविष्यतश्च अन्य एव । तत एव एतत् वाच्यं—सदैव तत एव नीलाभासात् पीताभासोदयः स्यात्—इति । नहि स नीलाभासः कदाचिदपि न भवति

'मुहुर्मुहुरविश्रान्त............ ।' (स्व० चि० ११२)

इति न्यायात् । ननु एवं धूमाभासार्थी किमुपादत्ताम् । उक्तमत्र 'यत्रैव आभासांशे नियतिशक्त्या कार्यकारणभावो गृहीतः, तत्रैव उपादानं तदर्थिनः' । वक्ष्यते च एतत्

'योगिनिर्माणताभावे ............ ।' (२।४।११)

इत्यत्र । प्रथमकर्मप्रघट्टकस्य अपि नियतिवदनावलोकितयैव कारणत्वम्,—इति कार्ममलप्रस्तारप्रसङ्गे भविष्यति । तथाहि जन्माभाससमय एव तद्गतराशिविशेषपरिस्पन्दात्मकं लग्नाभास तदानन्तर्यात् तत्सद्भावनियतनियताभासान्तरयोजनया प्रमात्रन्तराभासयोजनया च शबलीकृतं सर्वात्मना विद्रुपोऽवश्यं जन्ममध्यभविष्यदनन्ताशेषाभाससाक्षात्कार एव भवति । परमार्थतो हि तत्तन्नियतदेशकालावस्थितविचित्राभासशरीरतास्वीकृतवैश्वरूप्यः परमेश्वर एव प्रकाशवपुर्विश्वत्र कारणम् । यदि हि कुम्भकारगृहदेशे मेरुर्भवेत्, यदि च कुम्भकरणावसरे महाकल्पावसानवासरः स्यात्, तत् तदानीं तत्र नोदियादेव तादृक् कुम्भः,—इति त्रैलोक्यत्रैकाल्यनियताभासमध्यवर्ती क्षणाभा-

सोऽपि विश्वमाक्षिप्य वर्तमानः परमेश्वरस्वरूपः, स एव स्वेच्छा-वशात् तत्तत् निर्मिमाणः स्वात्मवैचित्र्येण असंख्येन निर्भासते—इति स्थिरवादादनून एव अस्मिन् दर्शने क्षणभङ्गवादोऽपि। यथाह अवधूताचार्यः

'प्राकाम्यमात्मनि यदा प्रकटीकरोषि
व्यक्तीः प्रतिक्षणमनेकविधा दधानः।
त्वय्येव सोऽपि भगवन्भजतेऽर्थवत्तां
प्रायो विदग्धरचितः क्षणभङ्गवादः॥'

इति। आस्तां तावदेतत्। स्थितमिदम्—चिदात्मनि विश्वं प्रथमेच्छापरामर्शभूमावहमित्येव उचितेन रूपेण भाति—इति। अन्ये तु **'भुञ्जे गच्छामि'** इत्येतदनुसारेणैव उत्तरग्रन्थं व्याचक्षणाः **'पाचनधावन'** इति पठन्ति भोजनेच्छाया अनन्तरं पाकं प्रयुङ्क्ते, गमनेच्छातो धावति,—इति। **'यतः'** इति च उदेतिक्रियापेक्षा अपादानपञ्चमीति॥ १०॥

ननु भगवति परामर्श इच्छालक्षणः इति किमेतत्। परामर्शो हि विकल्पः। नच शुद्धसंवेदनरूपे भगवति समयबलायत्तस्य वेद्यत्वविकल्प्यत्वनान्तरीयकस्य शब्दयोजनस्य अवकाशः। तदेव हि विकल्पतायां निबन्धनम्, वेद्योपरक्ते तु प्रकाशे विकल्पता वेद्यांशविश्रान्ता अभिलापयोजनया वेद्यापेक्षया अस्तु कदाचित्, स्वयमविकल्पत्वेऽपि न शुद्धा संवित् विकल्परूपा संवेद्यत्वानुपलब्धेः। विकल्परूपतायाः कारणमभिलषणीयता। तस्या व्यापकं वेद्यत्वमिति कारणव्यापकतानुपलब्धिः। कारणमपि कार्यकार्यस्य व्यापकमेव, व्यापकव्यापके च व्यापकता युक्तैव,—इत्याशयेन व्यापकानुपलब्धिरेव युक्ता, किं शब्दाधिक्यमालावर्धनेनेति

१ 'रूप एव' ख.। २ 'स्थिरत्ववादात्' ख.। १ 'व्यापकानु' ख. पाठः।

तु आशयः आर्यधर्मकीर्तेरेवंप्रायाः पृथक् प्रयुक्तीरपरिगणयतः;— इति उक्त प्राक् । तदत्र अनभ्युपगम एव समाधिः । तथाहि न अत्र समयायत्तशब्दयोजना उक्ता यतो विकल्पता आपतेत्, अपितु विमर्शरूपता बोधस्य नैसर्गिकी,—इति अभीष्टमेव इदं नः इत्याशयेन आह सूत्रं

**स्वभावमवभासस्य विमर्शं विदुरन्यथा ।**
**प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥ ११ ॥**

अवभासोऽवभासमानः एव भवन् स्वयमवभासनस्वभावश्च । *अवभासयति अर्थानिति अवभासः प्रकाशः, तस्य विमर्शमहमिति* अकृत्रिममसाङ्केतिकं स्वातन्त्र्यरूपमात्मविश्रान्तिलक्षणं स्वभावं जानन्ति ते[४] तत्त्वविदो ये मन्त्रशरीरं बोधतत्त्वं श्रीमातृका-श्रीमालिन्यादितत्त्वं मन्यन्ते । युक्तं च एतत् । यदिहि परामर्श-लक्षणं स्वातन्त्र्यमस्य रूपं न भवेत्, प्रकाशः स्वात्मनि प्रकाशः, घटोऽपि स्वात्मनि घटः, ततश्च घटपटयोरिव स्वात्मनः प्रकाशाप्रकाशयोरपि अजडजडभावलक्षणो न भवेत् विशेषः । परस्य संबन्धी प्रकाशः,—इति चेत्, घटोऽपि मृदः संबन्धी । परेण जनित इति चेत्, घटक्षणान्तरमपि एवम् । परेण एकसामग्री-जन्यत्वं बोधस्य,—इति चेत्, रूपेण अपि रसस्य तत् । परोन्मुखता बोधत्वहेतुरिति चेत्, अयस्कान्तोऽपि बोधः स्यात् लोहोन्मुखत्वात् । अथ स्वभावत एव बोध आत्मानमिव अनात्मानं प्रकाशयति,—इति उच्यते, तदात्मप्रकाशनस्य कथमनात्मप्रकाशनं रूपं स्यात्,—इत्येतदेव चिन्त्य परस्य परनिष्ठत्वानुपपत्तेः । ननु इदमेव रूपमाससार ज्ञानस्य यदन्यनिष्ठमेव इदमु-

---

१ 'अपरिविगणयत' ख. । २ 'अनुप' क० । ३ 'मानमेव भवत्' ख० । ४ 'ते ते' ख० ।

त्पन्नम् । नहि ज्ञानस्य अन्यद्रूपं किंचिदुपलब्धम्,—इति कस्य उपालम्भः, न कस्यचिदन्यस्य स्वदर्शनपक्षपातमोहात् । एवंहि सामान्यावयविप्रभृतयोऽपि एवंरूपा एव आसंसारं—यदेकरूपा अपि अनेकविश्रान्ताः—इत्यादि अभिदधता किं न पादौ प्रसार्येयाताम्,—इति अस्तमियुर्विचारकथाः । तदलमनेन। अथ गत्यन्तरक्षयात् परसारूप्यं बोधस्य, बोधरूपता स्फटिकस्यापि स्यात्। अपिशब्दो गत्यन्तरक्षयं द्योतयति । यत एवं, तस्मात् बोधस्य इयमेव बोधरूपता—यदसौ घटादिवत् प्रकाशे न अन्यापेक्षः प्रकाशते । अनन्यापेक्षता च एषैव यत् स्वात्मीयविमर्शेऽहमिति भोक्तृतामये अविच्छिन्ने भुञ्जानतात्मनि चमत्कारे रूढिः । नीलं हि तथा प्रकाशात्, सोऽपि तथा ज्ञानोदयात्, सोऽपि अहमेवं प्रकाशे इति पार्यन्तिकात् अनन्याकाङ्क्षात् विमर्शात् ततः परमाकाङ्क्षाविरहात्,—इति उक्तमसकृत्। वृत्तौ सौत्रं स्वभावशब्दं व्याचष्टे **'मुख्य आत्मा'** इति **'स्वोऽव्यभिचरणीयो भावः'** इति । **'अन्यथा'** इति व्याचष्टे **'तं विना'** इति । **'अर्थोऽपरक्तोऽपि'** इति व्याचष्टे **'अर्थं'** इति। भेदितग्रहणेन प्रतिकर्म व्यवस्थामात्रं सिध्यतु अतः, ननु अजाड्यम्,—इत्याशङ्क्य विवृतिकारो **'अन्यथा'** इत्युपक्रमं द्वितीयं श्लोकार्धं प्रमुखे विवृणोति तदर्थस्य प्रकृते साध्येऽर्थे पूर्वोक्ते हेतुत्वं यतः । ननु आदर्शः किं न घटात् विशिष्यते । आह **'नचासौ जाड्येन'** इति । सत्यं विशिष्यते स्वरूपान्तरेण घट इव पटात्, जाड्यं तु उभयत्र तुल्यमेव । चो हेतौ । यस्मात् घटच्छायाधार्यपि मुकुरो न घटस्य किंचित् तद्व्यवहरणरूपत्वाभावात् तस्य, तथा प्रकाशोऽपि अर्थच्छायाधारी न अर्थं

१ 'प्रकाशेन नान्या' ख० । २ 'काङ्क्षाम्' ख० पाठः ।

प्रति व्यवहरणरूपो भवेत् । ननु सारूप्यं केवलं बोधतायां न प्रयोजकम्, अपितु प्रकाशरूपत्वम् । तच्च प्रकाशते, परं च प्रकाशं करोति,—इत्येवंरूपम् । तर्हि आदर्शोऽपि आदर्शो भवति, घटं च आदर्शीकरोति,—इत्येतद्भणितेः प्रकाशः प्रकाशो भवति, घटं च प्रकाशीकरोति,—इत्यस्य भाषितस्य को विशेषः । तदाह **'घटस्यादर्शस्य च'** इति । स्वयं घटभावः स्वयं प्रकाशभावश्च,—इति तुल्यम् । परेण आत्मानं स्वरूपयति आदर्शोऽपि बोधोऽपि । को विशेषः, एवमियतैव न प्रकाशरूपत्वं निर्वहति, अपितु इच्छानुप्रवेशेनैव स्वातन्त्र्यमयेन । एवशब्दो भिन्नक्रमः । इतिशब्दो यस्मादर्थे । तच्छब्दस्तस्मादर्थे । यस्मादेवं, तस्मात् प्रकाशः प्रकाशनेत्येतावता[1] नामपदात् यत् प्रतीयते, ततो विलक्षणं यत् कर्तृप्रत्ययैतारूप[2] सरम्भावेशस्वातन्त्र्यमयं नैरपेक्ष्यस्वभावं[3] प्रतीयते यत् न घटे, न मुकुरे, तदेव प्रकाशस्य अजडताया निबन्धनम् । यदि वा एवं योजना—स्वयं घट इति स्वयं परमरूप इति च यदुच्यते, तत्रापि स्वयमित्यनेन वपुषा हि निरपेक्षं स्वात्मविश्रान्तं यत् घटत्व परमरूपत्वं च अङ्गीकृत, तत्र नैरपेक्ष्यमभिदधता इच्छैव इयमुक्ता भवति । तद्योगात् च प्रकाशरूपतैव घटादर्शयोः प्रमात्रात्ममात्रविश्रान्तत्वात् । तथाच जडरूपतैव न कदाचित् । यत् वक्ष्यति

> 'इत्थं तथाघटपटाद्याभासजगदात्मना ।
>
> तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया ॥' (२।४।२१)

इति । तदेतदाह **'प्रकाशरूपतैवेति'** इति । यस्मादेवं, तस्मात् स्वयं प्रकाशते बोधरूपतया निर्भासते परं प्रकाशयतीति स्वातन्त्र्यावभासितपरभावेन घटाद्यात्मना प्रकाशते इति ।

---

१ 'प्रकाशनेत्येता' ख० । २ 'प्रत्ययाद्रूप' क वि. । ३ 'नैरपेक्ष्य' ख० ।

अत्र नैर्मल्यात् प्रकाशनरूपात् प्रकृतिभागविश्रान्तादतिरिक्तः कर्तृतालक्षणः स्वातन्त्र्यस्वभावो यः प्रत्ययस्य अर्थः, स एव अस्य बोधरूपस्य प्रकाशस्य सूर्यादिजडप्रकाशविलक्षणस्य सारभूतो जडात् सूर्यादिप्रकाशात् वैलक्षण्यमुत्थापयन् जडताशङ्कां निवारयन् जाड्यमपध्वंसयतीत्युक्तः। शङ्कापध्वंस एव शङ्कयमाने उपचरितो विषयविषयिभावात् निमित्तात्। प्रयोजनं च अत्र उपचारे भावतत्त्वस्य अभाससारताप्रतिपादनतात्पर्येण बुद्ध्यनुसारि वस्त्वपि तथा भवति,—इतिप्रतिपादनम्। ननु प्रकाशस्य कोऽन्यः स्वभावो यदपेक्षया मुख्योऽयं स्वभाव उच्यते, कथंच अस्य मुख्यत्वमिति शङ्काद्वयमेकेन यत्नेन अपास्यति **'विशुद्धस्य'** इति। प्रकाशस्य असंसृष्टस्य तत एव अर्कादिप्रकाशविलक्षणस्य परसारूप्यं प्रतिबिम्बायमानपरतादात्म्यक्षमत्वमस्ति स्वभावान्तरं यत्तेन वपुषा घटादेर्बोधो विशिष्यते, तथापि न तत् मुख्यं जडेऽपि मणिमकुरप्रभृतौ तस्य संभवात्, विमर्शस्तु न जडे संभवतीति अनन्यविषयत्वात् स मुख्य आत्मेति युक्तम्। **'अपिशब्देन'** इति। सूत्रे वृत्तौ च अयमपिशब्दः स्वभावान्तरसमुच्चयार्थ इति यावत्। ननु विमर्शाभावात् जडता स्यादिति वक्तव्ये **'चमत्कृतेरभावात्'** इति कथं वृत्तिः। चमत्कृतिर्हि भुञ्जानस्य या क्रिया भोगसमापत्तिमय आनन्दः, स उच्यते इत्याशङ्क्य आह **'स एवच'** इति यः प्रकाशस्य प्राणत्वेन उक्तः। एतदुक्तं भवति—स्वरूपस्य स्वात्मनः परिपूर्णनिजस्वभावप्रकाशनमेव परामर्शमयतां दधदानन्द इति उच्यते, तथा देहादिसंकोचकलुषापरिपूर्णप्रत्यगात्माहंभावनिष्ठत्वेन शरीरस्य रिक्ततया क्षुधातुरस्य व्यतिरिक्तान्नाभिलाषविवशीकृतमते-

१ 'त्यर्थः' ख०। २ 'अप्रका' ख०।

त्मपरामर्शोऽयमेकघनवृत्त्या यतो न संभवति, ततोऽयमनानन्द इव आस्ते। सति आत्मपरामर्शमये स्वानन्दे यदा तु अन्नपरिपूर्णजठरता अस्य, तदा तद्रिक्ततोद्रेकरूपा तावदपूर्णता विनष्टा। संस्काररूपतया तु तदानीं यदभिलषणीयं कान्तालिङ्गनादि परामर्शनीयं स्थितं यदाह गुरुः पतञ्जलिः 'नहि चैत्र एकस्यां स्त्रियां रक्त इति अन्यासु विरक्तः' इत्यादि, तद्योगादपूर्णोऽयमानन्द इति परमानन्दोऽयं न भवति। सांसारिकश्च सर्वोऽस्य आनन्दो

'लाभे भाविवियोगभीरु...............।'

इति

'विषयो विषयान्तरार्थितां जनयन् वा जनयेत् कथं सुखम्।'

इति च न्यायेन व्यतिरिक्ताकाङ्क्षाविच्छेदमयतां सर्वात्मना न स्वीकुरुते इति ततोऽपि अपूर्ण एव, यस्तु आनन्दतांशस्तत्र स्वात्मपरामर्शरूपतैव[1] प्रयोजिकेति। तत एव उक्तं

'त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते।

स विन्दुर्यस्य तं वन्दे देवमानन्दसागरम्॥' (स्त०चि०६१)

इति श्रीमद्भट्टनारायणेन। तथाच मधुरादौ रसे औदरिकाभ्यवहारवैलक्षण्येन प्रवृत्त इदमित्थमिति प्रमातरि विश्रमयन् प्रमातृभागमेव प्रधानतया विमृशन् भुञ्जान इति उच्यते। यत्रापि अत्यन्तमन्यथाभावमतिक्रम्य सुखमास्वाद्यते अर्जनादिसंभाव्यमानविघ्नान्तरनिरासात् वैषयिकानन्दविलक्षणशृंगारादौ नाट्यकाव्यादिविषये, तत्र वीतविघ्नत्वादेव असौ रसना चर्वणा निर्वृतिः प्रतीतिः प्रमातृताविश्रान्तिरेव, तत एव हृदयेन परामर्शलक्षणेन प्राधान्यात् व्यपदेश्या व्यवस्थितस्य अपि प्रकाशभागस्य वेद्यविश्रान्तस्य

---

१ 'रूपितैव' ख०।

अनादरणात् सहृदयता उच्यते इति निर्विघ्नाः स्वादरूपाश्च रसनावद्गोचरीकार्याश्चित्तवृत्तयो रसा नव इत्ययमर्थोऽभिनवभारत्यां नाट्यवेदविवृतौ वितत्य व्युत्पादितोऽस्माभिरिति । तत्कुतूहली तामेव अवलोकयेत् । इह तु प्रकृतविघ्नकारित्वात् न विततः । तस्मादनुपचरितस्य संवेदनरूपतानान्तरीयत्वेन अवस्थितस्य स्वतन्त्रस्यैव रसनैकघनतया परामर्शः परमानन्दो निर्वृतिश्चमत्कार उच्यते । तस्मात् युक्तमाह **'चमत्कृतेरभावात्'** । मधुरादिरसास्वादे तु विषयस्पर्शव्यवधानम् । ततोऽपि काव्यनाट्यादौ तद्व्यवधानशून्यता तद्व्यवधानसंस्कारानुवेधस्तु । तत्रापि तु तथोदितव्यवधानांशतिरस्क्रियासावधानहृदया लभन्त एव परमानन्दम् । यथोक्तं

'जग्धिपानकृतोल्लासरसानन्दव्यवस्थितेः ।' (वि० भै० ६२) इत्यादि । **'विशेषप्रीतिः'** इत्यत्र विशेषप्रतीतिरिति अपरेषां पाठः । **'अत एव'** इति यतो विमर्श एव चमत्कारः, स एवच अजाड्यं; ततो हेतोर्नीलादौ इदमिति यो विमर्शः, स नीलादिशरीरे विश्रान्तो न भवति, किन्तु प्रमातर्येव विश्राम्यति । यद्वक्ष्यते

'घटोऽयमित्यध्यवसा नामरूपातिरेकिणी ।

'परेशशक्तिरात्मेव भासते न त्विदन्तया ॥' (१।५।२०)

इति । प्रमातृविश्रान्तौ च अहमित्येव स विमर्शोऽवशिष्यते, मुखे परस्य विषयांशस्वीक्रियात इदमिति निर्भासः । **'अन्यथा'** इति यदि प्रमातरि विश्राम्येदित्यर्थः । एतच्च

'किन्तु मोहवशा................... ।' (१।१।३)

---

१ 'तम्' ख० । २ 'रसैनैक' ख० । ३ 'दौ व्यव' ख० । 'तदवधान' ख० पाठान्तरम् ।

इति सूत्रे प्रकाशविमर्शवैलक्षण्यं निरूपितमेव 'विमर्शः पुनर्न कदाचिदिदन्ताभूमिमास्कन्दति' इत्यत्र अवसरे। '**तथाच**' इति यतः सर्वो विमर्शः प्रमातर्येव विश्रान्तिमाश्रयते तेन प्रकारेण। परप्रकाशत्वमेतदेव संवेदनस्य यत् तथाभूतस्वतन्त्रस्वरूपात्मना प्रकाशनम्। इत्थमेवच आत्मानात्मप्रकाशनं विज्ञानस्य युक्तं तत्त्वात्मनोऽव्यतिरिक्ततायाम्। तथाहि प्रकाशमानमेव विज्ञान-मात्मनोऽनात्मनश्च प्रकाशनमिति यदुच्यते, तत्र यदात्मनः प्रकाशनं, तदेव चेदनात्मनः, तर्हि आत्मा, अनात्मा चेति एकं स्यात्। अयं हि तदार्थः—यज्ज्ञानमात्मना प्रकाशते—इदमेव घटः प्रकाशते इति। ननु च घटपटयोरेकप्रकाशनम्, अथच न घटः पटः, तद्वदात्मानात्मनोरेकं प्रकाशनं, नच एकमात्मानात्मानौ भविष्यतः। मैवं, नहि घटपटयोः किंचित् प्रकाशनमस्ति सिद्धम्। अस्मन्मते हि प्रकाश एव प्रकाशते। स च कदाचित् स्वतन्त्रत्वात् घटात्मना, जातुचित् पटात्मना, अन्यदा व्यात्मनेति। अथ उच्यते—आत्मना प्रकाशमानो बोधोऽनात्मानं नीलं प्रकाश-यतीति, तत्रापि यदि प्रकाशं तं करोतीति उच्यते, तदा किं तदात्मप्रकाशरूपमेव तं करोतीति, उत व्यतिरिक्तप्रकाशरूपम्। आद्यकल्पे स्वरूपीकृत एव अनात्मा अपि बोधेनेति भग्ना इयम-नात्मकथा। पूर्वमनात्मेति चेत्, अप्रकाशमानस्य का कस्य पूर्व-तेति न किंचिदेतत्। द्वितीयपक्षे ज्ञानं प्रकाशते, तदेवच कारण-भूतमर्थस्य प्रकाशतां ज्ञानरूपतां विधत्ते इति द्वयोरपि स्वप्रकाशत्वं स्वसंवेदनतयेति पुनरपि कथमात्मानात्मप्रकाशकत्वम्। नच अप्रकाशरूपस्य प्रकाशरूपता स्वभावस्य अन्यत्व विधिरपि विधातुं प्रभवति। नच परस्य परनिघ्नत्वमुचितमिति उक्तमस-कृत्। अनुभवादेव अनात्मा प्रकाशते इति विपरीतमुच्यते।

१ 'भवादिर्वा नामा' ख।

अनुभवो हि प्रकाश एव। स च न भिन्नस्येति उपपादितं, ननु स्वहेतुपरम्परयैव बोधो ग्राहकात्मा, नीलादिस्तु ग्राह्यात्मा। एकसामग्र्यधीनता केवलमिदमस्यैव ग्राहकमिति ग्राहकग्राह्यभावस्य नियमे व्याप्रियते, ननु तया असावुत्थाप्यते चक्षुरादेरग्राह्यग्राहकस्वभावत्वादिति। तदिदं बालविप्रतारणफलमेव। ग्राहकता हि नाम यदि ग्राह्यस्य कश्चिदुपकारः, स तुल्यकालत्वे कथं स्यात्। अथ उपकारो न कश्चित्, तर्हि शब्दमात्रमेतत्—अयं ग्राहकः, अयं ग्राह्य इति। स तस्य प्रकाश इत्येतदेव ग्राहकत्वमित्यपि निरस्तो वाद इत्यलं बहुना। तत् युक्तमुक्तं **'तथा स्वयं प्रकाशते'** इति। एवं पारमार्थिकमहमिति प्रकाशस्य विमर्शात्मकं निर्वृतिरूपं वपुः। तच्च यत्र आरोप्यते, तदपि निर्वृतिमयमेव भाति शरीरप्राणादि। तदाह **'अहमित्यपि'** इति। अपिर्भिन्नक्रमः। शरीरप्राणादिरूपे वेद्येऽपि योऽध्यास्यते अहमितिविमर्श इत्यर्थः। ननु दुःखोपलम्भकाले तावदहमित्यस्ति, नच तत्र चमत्कारात्मा अस्ति आनन्दः। क एवमाह—नास्तीति। तथाहि दुःखमपि क्षयमास्वाद्यमानोऽन्तरेव विश्राम्यति। तां तु अन्तर्विश्रान्तिं बाह्येन अर्थी तं च विनष्टमभिसंमीक्षमाणोऽनादरतिरस्कृतत्वात् सतीमपि न अभिमंनुते। उपदेशविशेषदिशा तु मायाविगलने तद्ग्राह्यरूपानादरणे सैव विश्रान्तिरुन्मिषति। तथाहि शिवदृष्टिः

'दुःखेऽपि प्रविकासेन.........।' (५।९)

इत्यादि। ये तु शरीरादितितिक्षवस्ते तदितरस्वर्गादिगतशरीरवाञ्छया वा तच्छरीराविनाभाविनिष्प्रतीकारदुःखजिहासया अहमितिचमत्काराध्यासं तत्र शरीरे शिथिलयन्ति, शरीरान्तरे

१ 'विगले' क.। २ 'तितिक्षवः' ख.।

च तं चमत्कारमहमभिसंचारयन्ति, पारमार्थिकीमेव तु चमत्कारानन्ददशा वीतविघ्नमेव अवलिलम्बिपन्ते मुमूर्षुदशापन्नाः। एतदुपसहरति **'तदेवम्'** इति। एतत् सवादयति **'तथाच'** इति **'भर्तृहरिरित्यवोचत्'** इति संबन्धः। केन वाक्येन। आह

'वाग्रूपता ·················।'

इत्यादिना

'············ प्रत्यवमर्शिनी।' (वा० प० १।१२५)

इत्यन्तेन। किमवोचत्। आह प्रकाशस्य जडवैलक्षण्यं संरम्भः कर्तृतारूपो यः, स एव आत्मविश्रान्तिलक्षणो निरपेक्षत्वेन विमर्शोऽहमिति कथ्यते। ननु केन शब्देन असौ संरम्भः कारिकायामुक्तः। आह **'प्रकाशेत'**[1] इति। लिङ्[2]त्र सभावनाधिक्यमात्रमाह, आख्यातरूपता तु कर्तृव्यापारप्राधान्यविश्रान्तिसतत्त्वेति आशयः। ननु लिङा[3] विना सभावना कथंकारमुच्यते। तत् सभावनाभिधायी अयमाख्यातप्रयोगो[4] न कर्तृतांशप्राधान्यं निगमयति। मैवम्, यदि वस्तुभावमात्रं संभावनाविषयत्वेन विवक्षितं, न शुक्लोऽयं, शुक्लः स्यादिति न्यायेन प्रकाशः प्रकाशो न भवेदिति प्रकाशभावात् बाह्यीकृतमेव भवन लिङा सबध्येत[5], न श्वेतः श्वेतेत्, न नील नीलेत्, घटो न घटीभवेदिति तु *तत्स्वरूपानुप्रविष्ट एव संरम्भार्थो निर्भाति,*—इति व्यतिरेकद्वारेण च इत्थं विधिः संपद्यते प्रकाशते च अयं प्रकाश इति। तदयं तिङन्तार्थ एव स्वातन्त्र्यात्मा विमर्शः प्रकाशस्य अहेयं वपुर्वो-

---

१ 'प्रकाशते' क पाठ। २ 'लिङ्' क। ३ 'लिङा' क.। ४ 'प्रयोगेन कर्तृतांशप्राधान्येन गमयति' ग.। ५ 'सबध्येत श्वेतो न श्वेतेत, न नीलं नीलेत्, घटो न घटीभवेत्' ग. पाठ।

धस्य या वाग्रूपता शब्दनशब्दयितृरूपता शाश्वती संकेतादिवत्। अथ संबन्धानुग्रहादैक्यानैक्यमयत्वेऽपि यथावैलक्षण्यं जाताद्यवभासनं बाल्याद्यवस्थेति, न अत्र अवस्थानामैक्यानुसन्धानं विवक्षितं तस्य अवयविबुद्धावप्रयोजकत्वात्, अपितु एतावानहमयमद्य पूर्वरूपादेतावता भिन्नवैतस्यो निःसंबन्धि······ इति इयति अत्र तात्पर्यम्। अत एव निरपेक्षाहमितिचमत्कारस्वभावता यदि उत्क्रामेत् भावप्रकाशमुल्लंघ्य क्रामेत्, इदंभावमात्रं भावनं स्वीकुर्यात्; तदा प्रकाशमानोऽयमर्थो निर्विकल्पके वा ······प्रत्यभिज्ञा चोच्यते। ······प्रतिष्ठा। प्रतिष्ठा च पार्यन्तिक ······वक्तीति वचनं चेति वाक् प्रकाश इत्यर्थमुखेन उपक्रमो मन्तव्यः। ···इति हि व्यवहारः। एतदर्थमेव 'अवबोधस्य' इत्युपक्रम्य, नासौ 'प्रकाशेत' इत्युक्तम्। अवबोधस्येति च षष्ठ्या अयमेव आशयः। अन्यथा चैतत्। प्रकाशः प्रकाशते इति हि बोधस्य यद्यपरः प्रकारो न भवेत्, भवति च ॥११॥

ननु एवं संविद्रूपस्य विमर्शप्राधान्यमिहैव उक्तं, यावदन्यत्रापीति सूत्रम्

आत्मात एव चैतन्यं चित्क्रिया चितिकर्तृता।
तात्पर्येणोदितस्तेन जडात्स हि विलक्षणः॥ १२ ॥

आत्मात एवेति—एतदेव हि विमर्शप्राधान्यं यत् तमुद्दिश्य **'आत्मा'** धर्मिस्वभावः **'चैतन्यं'** इत्यनेन धर्मवाचकशब्देन वैयधिकरण्येनापि समानाधिकरणतया श्रीशिवसूत्रेषु भगवता निर्दिष्टः। तथा सामानाधिकरण्यमेव व्याख्यातं भट्टश्रीकल्लटपादैः—

'चैतन्यमात्मनो रूपम् ······।'

इति। ······· शक्तिरिति चैतन्यं चितिशक्तिरात्ममहिमा भोक्तृ-

स्वरूपं हि, यदिति तद्वैय······त्विके सामानाधिकरण्यनिर्दे-
शस्य चितिक्रियारूपायां चेतनक्रियाविषयतायां सवेदनसयोजनवि-
योजनादिस्वातन्त्र्यसारायां तात्पर्यं तत्परत्वं तद्विषयं प्रतिपाद-
कत्वम्। तथाहि धर्मिरूपतानिर्देशे सद् द्रव्यं समवायं ·····
इत्यादि। जडसाधारणधर्मान्तरक्षमोऽप्यसौ प्रतीतो भवेत्। त-
······लितसरित्सहस्रप्रविविक्तरसास्वाद······श्चेतन इत्या···
··· स्यन्तं जडेभ्य इति ········· समतं न शास्त्रम्। यदिवा
······ क्रिया च आत्मा उक्तः। **'चितिकर्तृता'** चेति पृथ-
गेव। एवंविधवचना······भर्थद्वारेण वचनमन्यदपि स्वीक-
रोति। तत एव पातञ्जलभाष्य······पठितः सूत्रमवतारयति।
**'अत एव'** इति सूत्रांशमेवं पठित्वा·········इत्यन्तेन विवृ-
णोति। स्वतन्त्रमेवेद पूर्वोक्तहेतुयुक्त्युपजीवनाय कर्तृतालक्षणाद्वि-
मर्शादविभेदेन। **'तत्र तत्र'** इति स्वदर्शने श्रीशिवसूत्रादौ,
परदर्शने च पातञ्जलादौ जडाद्विभागार्थमपदिश्यते व्यवह्रियते।
······धर्मस्वभाव एवायं शरीरस्यैव चैतन्यमिति चार्वाकनयेन।
यदाह·· · ··· शक्तिवच्चैतन्यं चैतन्यविशिष्टः कायः पुरुष इति।
*तस्य निर्देशस्य सृष्टेतेति कथं तात्पर्यान्तरे योजनमित्याशक्य वृत्तौ*
द्रव्यपदमात्मसामानाधिकरण्येन उक्तं, तद्विपरीतुमुपक्रमते इति
तत्त्वोपदेशपरे शास्त्रे। **'सर्वत्र'** इति वैशेपिकसांख्यवैयाकरणा-
द्यधिकरणेषु वैशेपिकनैयायिकजैमिनेयानां स्फुट एव द्रव्य-
(व्य)वहारः। आर्हता द्रव्यमवस्थातृ मन्यन्ते, महायानस्थाः
सौगता विकल्पितं तत एव स्वतन्त्र द्रव्यं सदिति। साख्याना-
मपि स्वतन्त्रमवस्थातृरूपं धर्मि द्रव्यमिति समत एव। वैयाक-
रणैः ······साकेतिकं यस्य ······ ···मेव एकैक······ यथा
मुखोपक्रमं देवदत्तोऽयमित्यादि दृढ······र्थसिद्धिः, तथैव अर्थ-

क्रियायां गुणकर्मादिपदार्थान्तराधीनायामपि साध्यायां ······ भवति। यद्भ्रमन्यत् कृतार्थं भवति। तत एव योजनरक्षणादेः प्राधान्येन विषयो यदालम्बनशून्यं पदार्थान्तरं सदप्यसदेव। यदाह— 'सर्वाग्रहणमवयव्यसिद्धेः' (न्या० सू० २।१३४) इति। पदार्थो द्रव्यम्। मुख्यतया चोक्तया यद्यपि अनिष्टप्रसङ्गो नास्ति, तथापि तमेव निरूपयितुं विशेषणचतुष्कमुपात्तम्। तथाहि कथं तस्यैव मुख्यत्वम्। आह—स्फुटत्वेन इदन्ता यत आक्रियते विशेष्यत्वेन। का अस्य स्फुटतेत्याह—सर्वस्मात् यतो भिन्नलक्षणोऽवयवार्थक्रियायामुपयुज्यते। नच गृहीतविध्वस्तो येनार्थक्रियायां विनियोक्तुमशक्यः स्यात् यतः स्थिरः। ननु च दृश्यतेऽस्य रूपान्यथाभावः। नासौ द्रव्यस्य, अपितु तद्धर्माणां संयोगविभागसंख्यादीनां तदाश्रितानाम्। तथाविधधर्माश्रयत्वादेवच बह्वीरर्थक्रियाः कर्तुं प्रभवत् तत् द्रव्यमर्थनीयं भवतीति। अनेन इदमाह—'अस्तीदमात्मनो रूपम्' इति आत्मा द्रव्यपदार्थो गणितः सर्वैरस्य स्वातन्त्र्यमुपेतं यतः। इयति तु तत्त्वमभिनिविशते मतिः, तत् प्रकाशरूपामात्मभित्तिमुपलीनाः सर्वे भावा भवन्ति। द्रव्यगुणादयः पदार्थास्तदात्मधर्मतामधिरोहन्तस्तस्यैव पारमार्थिकं·············· स्वस्य। तदयं प्रयोगः—आत्मा विश्व······द्विश्वावभासवत्त्वादन्याभासवत्त्वं द्रव्यव्यतिरिक्तात्परतन्त्रात् पदार्थराशेः पलायते स्वव्यापकस्वातन्त्र्यविरुद्धपारतन्त्र्यावलोकनोदितसन्त्रासं यतः। रूपत्वमपि भासमानं रूपं भवदपि निर्भासते द्रव्यनिष्ठत्वेन। नृपसन्निधावमात्यपरिवारोऽपि राजपरिवार एव। इदं रूपमिति हि न लौकिकः प्रत्ययः, अपितु शुक्लः पट इत्येव लौकिकः प्रत्ययो यदमुया नीत्या आत्मैव द्रव्यं तत्त्वतोऽहमित्येवंभासः। एषैव तात्त्विकी संवित् सर्वत्र यतः। यथोक्तम्

'इदमित्यस्य विच्छिन्नविमर्शस्य ······ ।' (अ० सि० १५) इत्यादि । वैकल्पिकस्य पटस्य शुक्ल इतिव(त्)स्वातन्त्र्यारोपणपटान्तरे द्रव्यभावः। तदेवंभूतस्य द्रव्यस्यापि आत्मनो यत् सामानाधिकरण्यं धर्मपदेन, तत् तस्यैव धर्मस्य प्राधान्यं ख्यापयितुमिति तात्पर्यम्। पटो महानिति जडस्य द्रव्यस्य निदर्शनम्, अन्यद्-जडस्य, तस्य तु धर्म इति सम्बन्धः। अनेन **'भावात्मकम्'** इति विवृतम्। **'चितिः'** इति **'दृशिः'** इति हि भावे क्तिप्रत्ययान्तः कृपिरित्यादिवत्। नन्वनयोरस्तु क्रिया विमर्शरूपा वाच्या धात्वर्थरूपे भावे इको विधानात्। चैतन्यमिति तु ष्यञ् प्रवृत्तिनिमित्ते भावः सत्ताया वा विधीयते। यदाह मध्यमो मुनिः—यस्य गुणस्य हि ················विश्रान्तिसारत्वमुक्तम्। वृत्तौ च भाव ···· ···शब्दसाम्यमात्रमेव, वस्तुसाम्यं तु कथम्। अत्र आह **'सर्वत्र च'** इति। त्रिष्वपि पदेषु एवं प्रतिज्ञाय उक्ताशङ्काशमनाय हेतुमाह—**'चैतन्यमपि'** इति। इह सम्बन्धो नाम प्रमातृविश्रान्तसम्बन्धिद्वितयावभाससार इति वक्ष्यते

'स्वात्मनिष्ठा विविक्ताभा भावा··········· ।' (२।२।४)

इत्यत्र। तत्र कर्तृलक्षणः सम्बन्धी प्रकृतिभागमेव अधिरूढ इति प्रत्ययांशं क्रियैव आक्षिप्यति। उपाधिभिन्ना ष्यञादीनां वाच्या सत्ता चेतनक्रिया, सम्बन्ध एव अत्र उपाधिरिति स एव अर्थः। सत्ता च भवत्ता भवनक्रियाकर्तृतैवेति पुनरपि स एव अर्थः। ननु क्रियासम्बन्धः कारकान्तरेष्वपि तुल्यस्तत्कथमुक्तम्—चितिक्रियारूपा चितिकर्तृतेति। आह **'सा च'** इति। कर्तृविश्रान्तिद्वारेण हि कारकान्तराण्युपलीयन्ते क्रियायामिति क्रियाधिकारे वितत्य वक्ष्यते। ननु यदि पर्यायशब्दौ, तत्कथं यौगपद्येन सूत्रे प्रयोग इत्याशङ्क्य आह—**'वस्तुत'** इति। ··· ····पदेशप्रत्यभिज्ञाद्योत्यते ·······द्योतकेन ॥ १२ ॥

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥ १३॥

एवं सूत्रार्थमवतारयति संक्षेपेण **'कर्तृतैव च'** इति। परामर्शमयी विमर्शनलक्षणैव या कर्तृता, सैव मन्त्राणामुत्पत्तिस्थितिलयस्थानत्वेन[1] समाप्यायनोपबृंहणादिकारित्वेन च मात्री महामन्त्रतत्त्वोश्च भगवतः संबन्धिनी शब्दनरूपा, नतु पाशवर्गमध्यपतिता कर्मेन्द्रियविशेषरूपा तत्कार्यशब्दरूपा वा वाक्। परमात्मनश्च एषैव कर्तृता ऐश्वर्यम्, नतु कुलालस्य इव करचरणादिपरिस्पन्दमयी। एतदुभयमाह कारिकया। **'वाक्'** इत्यस्य विशेषणं यत् **'परा'** इति, तद्व्यवच्छेद्यं दर्शयितुं तस्याः प्रसिद्धरूपोपक्रमं भेदमाह **'वाक्शक्तिः'** इति। शक्तिग्रहणमिन्द्रियशङ्कानिरासार्थम्। जिह्वाशब्देन वागिन्द्रियमुपलक्ष्यते, तद्द्वारेण च अपराणि कर्मेन्द्रियाणि लक्ष्यन्ते। तदयमर्थः—प्रसृतरूपो यः क्रियाशक्तिलक्षणो विमर्शः, स एव वागादि[2]करणवर्गमाविशन् जडमपि स्वाभिषेकेण अजडमिव संपादयति येन स्वतन्त्रतयैव स्वकृत्ये स्थूले वा सूक्ष्मे वा झटित्येव प्रवर्तते यावत्कार्यनिर्वर्तनं च अवस्थाय निवर्तते, पुनः कार्यान्तरेऽपि एवमिति। यदुक्तं

'यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम्।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः॥
लभते...................।' (स्प० का० १।६)

इति। विग्रहः शरीरं, तत्र भवा तत्पर्यन्तचेष्टासंपादिकेत्यर्थः। **'कार्यभूतः'** इति भूतग्रहणेन कार्यकारणतामाह। जिह्वाव्यापारस्य हि तत्कार्यस्य शब्दः कार्यः। जिह्वाव्यापारोऽपिच

१ 'यत्वेन' क०। २ 'वागादि' ख०।

वस्तुतस्तथाविमर्शस्वभाव एव । विमर्शरूपानधिकस्वभावा हि समस्ता क्रियेति उक्तम्। **'सघोषः'** इति स्थूलः। तस्य लक्षणं **'श्रूयमाणः'** इति अविशेषोपादानात् स्वयं च परैश्चेत्यर्थः । **'उपांशुः'** इति अघोषो यः स्वयमेव श्रूयते, न परेण, उपगताः स्वसमीपमेव प्रविष्टा अंशवः प्रसरा यस्येति । अनेन पाण्यादीनामपि स्थूलसूक्ष्मरूपस्य स्वकार्यस्य उपलक्षणम् । सर्वत्र च अत्र सघोषाघोषरूपवाग्व्यापारशब्दानुविद्धता प्राधान्येन दृश्यते । तदिद ग्रहीष्यामि गृह्णामि गृहीतमिति तत एवमुक्तम् । वर्णपदग्रहणं च तत्रैव श्रूयमाणताभिमानात्। वर्णे एव हि तावत् श्रूयमाणताबुद्धिरतिस्फुटा, पदे तु अल्पवर्णे स्यादप्येषा, वाक्ये तु संकलनास्मरणानुव्यवसायादिरूपबुद्धिनिर्ग्राह्ये श्रूयमाणता न स्फुटा,–इत्येवमुक्तम् । तथाच वैयाकरणैरपि वाक्यस्फोटस्य प्रायशो बुद्धिनिर्ग्राह्यतैव दर्शिता । यदाह तत्रभवान्

'नादैनाहितबीजानामन्त्येन ध्वनिना सह ।

आवृत्तपरिपाकाया बुद्धौ शब्दोऽवधार्यते ॥'(वा०प० १।८५)

इति । एषा तावत् प्रथमा वाक् । **'द्वितीया तु'** इति अन्तःकरणं मनोबुद्ध्यहंकारलक्षणं मध्यभूमौ पुर्यष्टकात्मनि प्राणाधारे विश्रान्तं या विमर्शशक्तिः प्रेरयति, सा मध्यमा वाक् । तत्प्रेरितं च तदन्तःकरणं सकल्पने निश्चये अभिमनने च स्वस्मिन् व्यापारे विकल्पनलक्षणे प्रवर्तते । तत्काले सा विमर्शमयी वाक् सकल्प्यादिकं ग्राह्य सकल्पयित्रादिरूपं च ग्राहकं स्वेन अभिधानस्य–इमं घटमहं चैत्रः सकल्पयामि–इत्यादेर्वाचकस्य शब्दस्य भेदेन स्फुटेन क्रमेण आमुक्ते गाढं परामृशति यतस्तत्क्षिन्तनशब्दवाच्या मध्यभवत्वात् मध्यमा ध्यानशक्तिरूपा[1] ।

[1] 'ध्यानशक्ति' क. ।

तृतीयस्यां तु अभिधानयोर्ग्राह्यग्राहकगतयोरभिधेययोश्च ग्राह्यग्राहकगतयोर्यथास्वं यः क्रमो देशतः कालतश्च संभवति, नतु स्फुटेन रूपेण यतो निर्विकल्पकः स्वभावोऽसौ विमर्शः स्वयमक्रमत्वादविभागः प्रसेवक इव तमन्तर्लीनं क्रमलक्षणं विभागमाच्छाद्य आस्ते, तत एव सर्वतो ग्राह्यात् ग्राहकाच्च यः क्रमः समाहृतोऽन्तःसंकोचितो यया यस्यामिति वा संहृतक्रमत्वादेव सूक्ष्मोऽत्र असावभिजल्पति यत्तत् सत् किमपीत्यादिना स्फुटक्रमेण यतः पदेषु सरोरसःप्रभृतिषु वाक्येषु देवदत्ततुरगादिषु च क्रमसंकोचनात्मकपिण्डीकरणमिलितेष्विव संपादितेषु, स पदवाक्यात्मा अभिजल्पः सूत्रस्थानीयेन वपुषा सूक्ष्म इति यावत्। यथाह तत्रभवान्

'प्रतिसंहृतक्रमा तु सत्यपि भेदे समाविष्टक्रमशक्तिः पश्यन्ती' इत्यादि। इयमेवच इच्छाशक्तिरूपेति दर्शयति **'कार्यचिकीर्षा'** इति। बोध्यबुभुत्सास्वभावा अपि इयं भवति, अतश्च एवं—यदिच्छाशक्तिर्ज्ञानक्रियाशक्त्योरनुग्राहिका—इति, किन्तु बुभुत्सा अपि बोधस्वभावैव तस्य वस्तुनस्तत्र अवभासपरिपूर्णतया प्रकाशनात्। चिकीर्षाकरणयोस्तु स्फुट एव भेदो लक्ष्यते। चिकीर्षायां हि स्फुरदपि वस्तु न कृतमिति उच्यते। उभयेन्द्रियवेद्यतोपलक्षिताभिमतपरिस्फुटत्वापत्तिपर्यन्तं सामर्थ्यं करणमिति हि वक्ष्यामः। **'पश्यन्ती'** इति अविरतदर्शनस्वभावत्वेन अप्रतिहतप्रकाशरूपत्वमिच्छाशक्तेः प्रकाशप्रसररूपत्वाभिधानाय उक्तम्। सा च इयमिच्छाशक्तिर्विद्याशक्तिप्रसररूपं बुद्धीन्द्रियवर्गमनुगृह्णती निर्विकल्पमालोचनं समुत्थापयति। तिसृभ्योऽपि विलक्षणा इयमिति पुनःशब्देन आह। **'एका'** इति पश्यन्त्यादिकं त्रयमपि प्रतिवाच्यं भिद्यते, नतु तथा इयमि-

त्यर्थः । अक्रमतां प्राप्तं यत् निःशेषं समस्तमभिधानानां शब्दानामभिधेय विमृश्यमान रूपं ग्राह्यग्राहकात्मकमुभयं, तेन गर्भिणी तत्सर्वं क्रोडीकृत्य अवतिष्ठमाना, नतु शक्तिमद्रूपपरमशिवदशा इव अनुन्मिषितग्राह्यग्राहकादिवैचित्र्या, अत एव भगवतः स्वाभोगं प्रति य आस्वादश्चमत्कारो निजाभोगपरामर्शात्मा, तन्मयी । यदाह

'... .. विश्वमामृशसि रूपमाविशन् ।' (उ०स्तो० १३।१५)

इति । नच कदाचिदपि परमेश्वर एवं तद्रूपशून्यः । यदाहुः परमेष्ठिपादाः

'शान्ते शिवत्वं स्थूलेऽपि शिवत्वं यत्र वर्णितम् ।
तत्र का शान्तता ब्रूहि शान्ते किं वस्तुता न ते ॥
वस्तुता चेत्तथाभूतशक्तित्रितयसगमः ।' (शि०दृ० ३।५६)

इत्यादि । एवं **'परा'** इति व्याख्याय **'स्वरसोदिता'** इति व्याचष्टे **'स्वरूपवत्'** इति । एतदागमभाषया सवादयति **'नित्योदिता'** इति सततानस्तमितत्वेन अनाहतशब्दवाच्यो यो महान् विश्वव्यापी मननत्राणधर्मा गुम्फीकृतविश्वशब्दनव्यापारस्तन्मयी । **'स्वरूपात्'** इति पश्यन्तीलक्षणात् वाचकात् सूक्ष्मसजल्पस्वभावात् । **'तस्या अपि'** इति पश्यन्त्याः **'अभिन्नवाच्यवाचकायाः'** इति अभिन्नवाच्यशब्दो वाचको वृत्तौ यस्याः प्रातिपदिकैः प्रयुक्तः, अभिन्नवाच्यशब्देन उक्ता या वृत्तौ, तस्या इति यावत् । **'वाच्यमपि'** इति पश्यन्त्या तु वाचकमस्फुटक्रमं, वाच्ये तु क्रमः सन्नेव आवृतः । यदि वा फलदर्शनमिदं वृत्तिवचनस्य यावदेव स्वरूपादभिन्नं वाच्यं पश्यन्त्यां, तावत् तत् वाच्यं वाचकेन अभेदं प्राप्तम् । स्वरूपं

१ 'निजभो' क. । २ 'कलक्षण' ख ।

हि तस्य अवाचकस्येव । एवं षष्ठ्या पञ्चम्या वा समासेन व्याख्याय कर्मधारयेण व्याचष्टे **'अथवा'** इति । **'सूक्ष्मा'** इति, ननु परेति यावत् । सर्वस्य क्रमस्य वाच्यवाचकगतस्य ननु पश्यन्त्येव परं तत्त्वमिति जरद्वैयाकरणा मन्यन्ते, तत्र कथं सक्रमतेत्याशंक्य आह **'पश्यन्त्यवस्थायामपि'** इति । **'चिन्त्यमानस्य'** इति योऽसौ चिन्त्यमानो मध्यमायां स्फुटचिन्ताविषयतामेष्यतीत्यर्थः । **'अभिसन्ध्योः'** इति अभिन्नसन्धानमभिसन्धिर्निर्विकल्पकमैन्द्रियिकं विज्ञानं निर्वितर्कनिर्विचारसमापत्तिः संदर्शनात्मा च प्रथमः प्रमातृव्यापारः । तत्र यदा प्रत्यक्षेण अविकल्पकेन सरश्च पश्यति रसं च तद्गतं, तदा तदालोचनद्वयं यदि न भिन्नविषयतया विषयगतं क्रमं स्वीकुर्यात् स्वविमर्शावसरे; तत् स्फुटभिन्नौ कथं समनन्तरं विकल्पौ स्याताम् । तस्मादालोचनकालेऽपि सत् तदादिरूपप्रच्छन्नं तत् सरो रस इति वाचकशब्दरूपं (पम) सक्रमं, वाच्यं च तदनुवर्ति परस्परभिन्नरूपं चकास्त्येव । एवं सरसि गाढं विकल्प्यमाने रसे च क्रमनिर्मिपिततद्रूपावस्थायामपि समापत्तौ परस्परभेदो वक्तव्यः । अन्यथा प्रथमसंवितर्कसमापत्त्यवसरोचितस्तत्र विकल्पो भेदेन न उपयुज्येत । व्युत्थानदशायां च न योगी भेदेन तयोः समापत्त्योः स्मरेत् । एवं सरो विवक्षो रसं च विवक्षोर्लिंगमिषोर्दिदृक्षोर्वा यत् प्रथमं संदर्शनं, तत् चेत् न विचित्रं, प्रार्थनादेरपि अविचित्रतैव स्यादिति न्यायः । घटः शरावमित्यादौ यद्यपि एवमेव, तथापि तत्र स्फुट एव भेदः संपिण्डीभावेऽपि । तथाहि ताम्ररजतपिण्डीभावे लोहनागपिण्डीभावे च कस्य एकताभिमानः इदमपि ताम्रसुवर्णपिण्डीरूपमिदमप्येवं, तत्को भेद

१ 'प्रथमं सवि' ख. ।

इति तु भवेदपि भ्रमः । सोऽवश्यं निवर्तनीयः । क्रमरूपप्रदर्शनेन अयं ताम्रहेमपिण्डोऽयं तु हेमताम्रपिण्ड इत्याशयेन सरोरस इति उक्तम् । ननु पश्यन्त्यां यदि चिन्तामयत्व, तर्हि मध्यमा किम् । आह **'स्थूलं शब्द इति'** इति । तथाहि मध्यमैव विकल्पभूमिरुच्यते । विकल्पस्य च अभिलापस्पर्श एव जीवितम् । तद्वर्ती हि असौ वाचकरूपोऽहन्तारूपस्यैव वाचकत्वात् । तत्र हि सकेतकरणादि उपपद्यते । यत्तु श्रोत्रग्राह्यं स्वलक्षण रूप, तत् न वाचकशब्दरूपं वाच्यवाचकभावस्य सोऽयमित्यध्यासजीवितत्वं वक्ष्यते यतः । नच स्वलक्षणं स्वलक्षणान्तरे अध्यासितुं पार्यते । तत् शब्दनरूपतया यत् शब्दरूपत्वं क्रमिकं, तत मध्यमावस्थायामेव स्फुटत्वेन विश्रान्तम् । ततो यदुक्तं भगवता श्रीमत्कालपादसंहितायां

'स्थूलं शब्द इति प्रोक्तम् · ·········।'

इति, तत् मध्यमाभिप्रायेण मन्तव्यं, यत्तु श्रोत्रग्राह्यः शब्दः, स तत्प्रपञ्चपल्लवप्रायो न पृथग्व्यपदेश्यतामर्हति । नहि विकल्प्यमानात् घटात् बाह्यस्य घटस्य अन्यत् रूपं वक्तुं न्याय्यम् । स एव हि घटाभासो देशाद्याभासान्तरयोजनया स्वलक्षणीभावमभ्येति । तथैव शब्दोऽपि । स एव स्थूलरूपत्वेन पूर्णाभासोऽपि आभासान्तरसंभेदवशात् श्रवणयुगलसंवेदनयोग्येन वपुषा अभिधीयते स्वलक्षणम् । **'ततः'** इति यतो मध्यमायां स्थूलशब्दरूपता । **'स्फुटम्'** इति प्रमाणवृत्तेन आयातमित्यर्थः । **'अस्याम्'** इति एतत्सूत्रनिर्दिष्टायाम् । **'अत एव'** इति यतः पश्यन्त्या प्रमाणोपपन्नं चिन्तामयत्वं, ततः पश्यन्त्याः परत्वं शिवदृष्टिशास्त्रे निवारितम् । कथम् । **'इत्युक्त्वा'** अनेन ग्रन्थेन अनूद्य । तत्र हि ग्रन्थः

'अथास्माकं ज्ञानशक्तिर्या सदाशिवरूपता ।

वैयाकरण··································॥' (शि०दृ० २।१)

इत्यादिः । ननु यत् परं रूपं, तदेव पश्यन्तीशब्दवाच्यं भविष्यतीत्याशङ्क्य आह 'नहि' इति

दृशिः सकर्मको धातुः किं पश्यन्तीति कथ्यताम् ।

यद्वाभासान् बहिर्भूतांस्तान्सतो ह्यसतोऽपि वा ॥

वर्तमानक्रियारूढा दृशिः पश्यन्त्युदाहृता । (शि०दृ०२।२०)

अथ नाम्नैव पश्यन्ती स्फुटमेव जडा ततः ।'(शि०दृ०२।८०)

इत्यादिना ग्रन्थेन विषयार्पितात्मना देशकालोपरागेण संकुचिता दृशिः कथं परा परिपूर्णा भवेदिति अभिहितम् । देशकालोत्तरत्वेन हि पूर्णत्वमुचितम् । ननु पश्यन्त्यां देशकालाकारसंकोचः किमर्थमङ्गीक्रियते । हन्त तर्हि असंकुचितं पश्यन् असंकुचितमेव मध्यमायां विकल्पयेत्, वैखर्या च ब्रूयात् परत्र संक्रमयितुम् । नहि नीले दृष्टे पीतं विकल्प्येत उच्येत वा । तस्मादविकल्पिका अपि पश्यन्ती संकुचितैव अङ्गीकर्तव्या । तदेतदाह **'प्रतिशब्दार्थं हि'** इति । यद्यदुच्यते, तत्र तत्रेत्यर्थः । **'पूर्वपूर्वा वाक्'** इति पश्यन्ती अन्यं शब्दं अन्यं च अर्थं परिहृत्य ततः शब्दादर्थाच्च इतरौ शब्दार्थावाभिमुख्येन सम्यक् दधाना आगृह्णती कथमिव परा पूर्णा भवेत्, यतोऽसौ विशिष्टा ताभ्यां शब्दार्थाभ्यां देशकालाकारसंकोचवती जाता । अत्र उदाहरणं स्फुटीकरणाय आह **'पृथुबुध्न'** इत्यादि । अनेन अर्थान्तरपरिहारेण अर्थान्तराभिसन्धानं निदर्शितम् । **'पटादि'** इत्यनेन शब्दान्तरपरिहारेण उत्तरशब्दाभिसन्धानम् । ननु असंकुचितरूपाभिसन्धानात्मिका पश्यन्ती तावत् परिपूर्णा, सैव परा भविष्यतीत्याशङ्क्य आह **'विश्व'** इति । एकैकतारूपव्यवच्छेदेन

साकल्यं, घटादिशब्दव्यवच्छिदा च विश्वशब्दमभिसदधाना, मापि सकुचितैवेति यावत् । ननु निर्विकल्पकदशारूपा पश्यन्ती । तत्र यदिदन्तात्मकं वपुः, तदहम्भावाच्छुरितमेव भाति–अहमिदमिति । तत्र इदन्तांशे घटो वा विश्वमपिवा स्फुरदहंभावे पूर्णे निमग्नमिति गलितसंकोचनत्वात् कथमिव ता पश्यन्तीं सकोचयेदित्याशङ्क्य आह **'अहंभावस्यैव मायीयस्य न असंकुचितत्वम्, अपितु संकोच एव'** इति घटयिष्यन्नसकोचस्य विपयविभाग दर्शयति **'सा च'**इति। चशब्दः प्रमेयान्तरसमुच्चये। शरीरप्राणबुद्ध्यादिसंकोचहीनस्य चिन्मात्रस्य यत् चित्राभासकारित्व नाम शक्तिस्तया विश्वस्य वाच्यगतो वाचकगतश्च भेदो यदा उल्लास्यत्वेन आसूत्र्यते, तदा तयोल्लासनेच्छा भगवत ईश्वररूपस्य विश्वावभासनेच्छा उच्यते । तस्यामीश्वरव्यतिरिक्त प्रमात्रन्तर नास्ति यदपेक्षया ते भावा अवस्थान्तरेण भासेरन्निति । **'असंकोचभाक्'** इति अहंभावे विश्रान्तः। **'पूर्णतां भजन्त'** इति न अय पश्यन्त्या महिमा । भेदासूत्रणरूपा हि सा। महिमा तु अयमहंभावस्य । ततश्च इदन्ताकृतात् सकोचात् तत्रापि कथं परत्वं स्यादिति आशयशेषः । तत एव शिवदृष्टौ सम्भवन्ती तावदियती गतिर्या वैयाकरणैर्न दृष्टा अपि अस्मद्दर्शने परं सम्भवतीति दर्शितम्

'···अस्माकं······सदाशिवरूपता।' शि०दृ०२।१)

इति । मायीयानां तु अहन्ता अपि देहादिवासनया संकुचिता, इदन्ता अपि प्रमेयान्तरपरिहारेण, प्रमेयान्तराणि च सन्ति प्रमात्रन्तरापेक्षया, तस्यैव च प्रमेयस्य अवस्थान्तरमपि अस्ति यत्तेन प्रमात्रा न दृश्यते अन्येन च दृश्यते कामिन्या इव वैराग्यायतनत्वम् । एवमुभयतःसकुचितं वर्तते मायाप्रमातृणामह-

सिदमिति निर्विकल्पकरूपम्। ननु कथं तर्हि उक्तं प्रागादिसिद्ध-सूत्रविवृतौ '**तस्यां हि दशायामैश्वरो भावः पशोरपि**' इति। अत्र आह '**तावती**' इति वेद्यस्य वेदकभागनिमग्नत्व-मेव तदैश्वर्यमुक्तमिति यावत्। एवं ग्रामं गच्छामीति महाप-श्यन्ती, गृहात् निःसरामीति पश्यन्तीमपेक्ष्य तावद्यावत् सदा-शिवेश्वरदशा महापश्यन्ती मायाप्रमातृवर्त्तेशेपपश्यन्त्यपेक्षयेति मन्तव्यम्। ननु मायाप्रमातॄणां परदशायां तर्हि का वार्ता। आह '**परा**' इति। अहमिति शुद्धेऽपि परामर्शे समाधानदा-र्ढ्यादौ देहाद्यहंभाववासना चेत् विगलेत्, तत् तदैव देहादि-पातात् व्युत्थानाभावः। ततः सा वासना भवन्ती तामपि दशां संकोचयेदेव। स्वपश्यन्त्यपेक्षया तु तत्र परत्वं वेद्योल्लासवै-कल्यात्। यद्येवं, किं तदसंकुचितं सर्वथा यत्र परत्वमुचितमि-त्याशङ्क्य आह '**ततश्च**' इति य एष विषयविभाग उक्तस्ततो हेतोरित्यर्थः। अहमिति यत् नित्यं चित्स्वरूपं तद्देशकालाका-रकताभ्यामाद्यन्ताभ्यां शून्यं नित्योदितं, तदेवच '**परा**'[1] इति '**स्वरसोदिता**' इति व्याख्यातम्। '**अत एव**' इति यत एवं परत्वं भवति, तत इत्यर्थः। वाङ्नामेत्यनेन[2] वपुषा यदि शुद्धकर्तृताप्राणा अहमित्यसंकुचितमहामन्त्रमयी शब्दन-रूपा न उपगम्यते वैयाकरणैस्तदा करणरूपा सा बुद्धीन्द्रिय-वर्गादपि निकृष्टा कर्मेन्द्रियस्वभावा पशुप्राणिभिस्तिर्यगादिभिः साधारण्या ध्वनिजनिका अहंकारवृत्तिरेव काचित् वाक् पाण्या-दिवत्, तत्र च कथं परत्वं भवेदिति। '**अतोऽपि**' इति एन-मपि न्यायमवलम्ब्य। '**तत्**' इति परत्वम्। '**तत्र**' इति श्रीशि-वदृष्टौ। '**तस्याः**' इति पश्यन्त्या वाचः। अयंभावः—इह

---

१ 'परमिति' ख०। २ 'नाम भवत्यनेन' क०।

तावत्परमेश्वरः शब्दराशिः । शक्तिरस्य भिन्नाभिन्नरूपा विचित्रा । मातृकादेवीवर्गाष्टकं रुद्रशक्त्यष्टकं पञ्चाशद्वर्णाः पञ्चाशद्रुद्रशक्तयः ।

'पंचमन्त्रमहामूर्तिर्भगवान्..........।'

इत्यादि वदता भगवता तावदागमेषु शब्दैकशरीरत्वं विमर्शात्मतया भगवतः प्रकाशवपुषोऽङ्गीकृतम् । ये पुनरमी मायीया वर्णाः शब्दात्मानस्ते घटादिस्थानीयाः । तदुत्थापकं च अविकल्पसविकल्परूपं पश्यन्तीमध्यमात्मकं ज्ञानं ज्ञानान्तरस्थानीयम् । तन्निर्वर्तकं च वागिन्द्रियं पाण्यादिस्थानीयं द्वैतात्मकमायापक्षनिक्षिप्तं च । तत् कथमिव परतत्त्वं स्यात् । विषयज्ञानेन्द्रियरूपं हि तत् । यत्तु तत्रापि स्वकृत्यांशप्रसाधकत्वं दृश्यते, तत् परतत्त्वबलस्पर्शकृतम्

'अपि त्वात्मबलस्पर्शात् .........।' (स्प०का०८)

इति नीत्या । तथाच न्यरूपि भगवता

'ते तैरालिंगिताः सन्तः सर्वकामफलप्रदाः ।
भवन्ति साधकेन्द्राणां नान्यथा वीरवन्दिते।' (मा०वि०३।२८)

इत्यादि । यत् कालदेशाकारकृतसंकुचितं, न तत् परं घट इव । तथाच पाशवं शब्दज्ञानतदिन्द्रियादीति । परस्य पूर्णत्वमुच्यते, तद्विरुद्धश्च संकोच इति स्वभावविरुद्धोपलब्धिः । तदुक्तं श्रीशिवदृष्टौ

'शैवे वाच इन्द्रियत्वम् ..... .... .....।' (३।१०)

इत्यादि,

'पाण्यादीन्द्रियवच्चैतद्ब्रह्म वागिन्द्रियं भवेत् ।' (२।१७)

इति । तत्रैव च उक्तं

'विमर्शानुभवेनैषा यथा वाक् प्रथमं श्रिता ।' (२।१९)

इत्याशंक्य

'इति चेच्चर्यतां तावत्पश्यन्ती युज्यते यथा ।'(२।२०)

इत्यादिना

'यो हि पश्यति पश्यन्तीं स देवः परमो मतः ।'(२।६४)

इति ग्रन्थेन शब्दनरूपत्वं भगवतः । तत एव संवित्सारमीमांसकेन भट्टश्रीनारायणेन स्तुतं

'सुगिरा चित्तहारिण्या पश्यन्त्या दृश्यमानया ।

जयत्युल्लासितानन्दमहिमा परमेश्वरः ॥' (स्त०चि०१)

इति । अत्र च पश्यन्तीशब्देन श्रीसदाशिवभूमिर्ज्ञानशक्तिस्वभावा उक्ता । याऽसौ महापश्यन्तीनां प्रत्यगात्मरूपाणामविभागात्मिका परममहापश्यन्ती तया च योऽसावानन्दमहिमा परस्वातन्त्र्यात्मा उल्लासनीयः, सा भगवतः परा वागिति दर्शितम् । परस्परप्रेमदर्शनं रतेरानन्दात्मिकाया उल्लासनं करोतीति लौकिकनिदर्शनेन आनन्द एव स्फुटीकृतः । एतत्सर्वमागूर्य सूत्रस्य अपरमर्धं व्याचष्टे **'सैव च'** इति । मुख्यशब्दस्य व्यवच्छेद्यं दर्शयति **'तथाहि'** इत्यादिना । यत् व्यतिरिक्तं, न तद्विषयमैश्वर्यं पूर्णं प्रतिहतिसंभावनोपलब्धेः । पूर्णस्य ऐश्वर्यस्य व्यापकमप्रतिहतत्वम् । यदाह **'ऐश्वर्यादविघातः'** इति । तद्विरुद्धं च प्रतिघातसंभावनमिति व्यापकविरुद्धोपलब्धिः । यदनात्मभूतं, तत् न अत्यन्तं प्रतिपत्त्रिच्छानुवर्ति स्वकारणाद्यनुवृत्तिविनाभावात् । यच्च यस्य न इच्छानुवर्ति, तत्र तस्य न ऐश्वर्यं कालिङ्गस्य इव वङ्गेषु । यथाह वीरनागः

'तदुत्पत्तिर्हेतोः स्थितिरपि निजप्रत्ययबलाज्जरा कालात् ।'

इत्यादि । ऐश्वर्यव्यापकं हि इच्छानुवर्तित्वम्, तस्य इदं विरुद्ध-

मिति, ऐश्वर्यमेव च आनन्दः पूर्णता,—इति उपपादि । तत एव आह मुनिः

'सर्वं परवशं दुःख सर्वमात्मवशं सुखम् ।'

इति । आदिशब्देन ब्रह्मविष्णुरुद्राणां परिग्रहः । तथाहि स्रष्टव्ये स्थापयितव्ये संहर्तव्ये च व्यतिरिक्ते अधिष्ठातारो मायागर्भाधिकारिणो ब्रह्माद्याः, तदिच्छानुवर्तिनश्च सर्वे लोकपाला इन्द्रग्रहणेन उपलक्षिता मन्तव्याः । अत्र तुशब्देन श्रीमत्सदाशिवेश्वरताया भेदमाह । **'आत्मभूतम्'** इति अहंभावेन अवच्छादनात् देहवदात्मतां प्राप्तमित्यर्थः । **'परतन्त्रम्'** इति स्वेच्छाकल्पित-भेदत्वेन मायाशक्तिमिदन्तांशमख्यातिप्राणमुद्धेदयितुमपेक्षमाणम् । **'स्वातन्त्र्यम्'** इत्यत्र च्छेदः । **'इदं तु'** इति यदत्र सूत्रे प्रक्रान्तम् । **'अनन्तायाम्'** इति प्रतियोगिविरहात् तदपोहनसम्भवे विकल्परूपत्वेन अनाशंक्यमानायाम् । **'अव्यपदेश्यायाम्'** इति असामयिक्याम् । **'स्वरसवाहिन्याम्'** इति नित्योदितायाम् । देहादाविव न कल्पिता इयमिति यावत् । इदं तु शुद्धं स्वातन्त्र्यं सर्वस्य इदंभागस्य अहन्ताया निमज्जनात् । **'परं स्वातन्त्र्यं यतः शुद्धम्'** इति वाक्यसंगतिः । शुद्धत्वे हेतुः **'ऐश्वर्यदशायामिव'** इति, वैधर्म्यदृष्टान्तः । विजातीयरूपान्तरानुप्रवेशो हि अशुद्धिरिति भावः । अपरता यत्र नास्ति, तत् परम् । सा च व्यतिरेकवशादिति दर्शयति **'अपरमिन्द्रब्रह्मादि'** इति । अपरत्वं च पूर्णं वा लेशतो वेति तु अवान्तरविभागो वृत्तिकृता न स्पृष्टः, विवृतिकृता तु दर्शितः । यत इदमेव स्वातन्त्र्यमैश्वर्यम्, ततो युक्तमवोचाम '.... तेन जडात्सहि विलक्षणः ।' (१।५।१२) इति ॥१३॥

रहस्यागमेष्वपि एतत् दर्शितमिति सूत्रान्तरम् । तदवतारयति

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥ १४ ॥

**'अन्यदपि अस्याः'** इति करचरणादिव्यापारवैलक्षण्येन विमर्शरूपाया इत्यर्थः । आगमेषु परमेश्वरशासनेषु आदिग्रहणात् वेदान्तादौ, मुनिप्रोक्तेषु सिद्धप्रणीतेषु, गुरुनिरूपितेषु च शास्त्रेषु यदस्या रूपं नामधेयनिर्वचनवैचित्र्यलब्धम्, तत् सूत्रकार आह ।

'............तत्र स्पन्दः प्रतिष्ठितः ।' (स्प०का०२२)

इति

'गुणादिस्पन्दनिःष्यन्दाः............।' (स्प०का०१९)

इति

'.............स्पन्दतत्त्वविविक्तये ।'(स्प०का०२१)

इत्यादौ स्पन्दशब्देन

'ऊर्मिरेषा विबोधाब्धेर्निस्तरङ्गस्य कीर्तिता ।'

इति ऊर्मिशब्देन

'...........स्फुरन्निर्वृतचित्.........।'(शि०दृ०१।२)

इति स्फुरत्ताशब्देन सा विमर्शशक्तिरुक्ता । किं बहुना । प्राक्तनकुशलविपाकप्रवर्तितसंवित्परामर्शाभ्यासतपःप्रभावप्रतिलब्धोन्मेषेण भट्टशंकरनन्दनेन अपि

'साक्षात्कारः स्वतःसिद्धः सा स्फुरद्रूपताऽस्य हि ।'

इति निरूपितम् । स्फुरणस्पन्दनादिकं हि किंचिच्चलनं प्रसिद्धम्, किंचित्त्वं च इदमेव यदचलेऽपि चलत्वावभासः । लोकेऽपि बहुतराध्यवसायस्वातन्त्र्यपूर्णोऽपि अचलप्रतिष्ठः स्पन्दवानिति उच्यते । तदिमां स्फुरत्तां लोकप्रसिद्धिमेव अनुसरन् व्याचष्टे **'घटादयः'** इत्यादिना । **'यदा'च'** इति यतश्चेत्यर्थः । **'तम्'**

१ 'यथा चेति' ख० ।

इति बोधम् । मम स्फुरति घट इति हि अहमंशलग्ना स्फुरत्ता संक्रम्यते भावे । घटः स्फुरति इति हि कोऽर्थः । अहं तावत् प्रकाशात्मा घटरूपेण स्फुरामि बोधात्मनो मनागपि अतिरिच्यमानोऽनतिरिच्यमानश्च, तथा स्वातन्त्र्यात् चकास्मि तदेकतारूढोऽपि घट एवमिति । अत एव उक्तं भट्टचन्द्रानन्देन

'पश्यतो रूपमालेराद्धातो भानानुषङ्गि यत् ।
स्वरूपमान प्रतिभा भावानां ......... ......॥'

इत्युक्त्वा

' . . .... सात्मसश्रया ॥'

इति । 'अन्यथा तु' इति यदि स्वकमेषां स्फुरणं स्यात् । 'अन्यस्यापि' इति योऽन्यदेशकालः । 'अन्यस्यापि'? इति अपरे पठन्ति । यदि हि तेषामेव स्फुरणं रूपं, ततश्च अन्यसचन्धिस्वरूपमहिम्नैव तद्व्यवधानादावपि सर्वस्य तथाभिमानभाजनं भवेयुः । एतच अभ्युपगमेनेति मन्तव्यम् । वस्तुतो हि न परं परनिष्ठं भवितुमर्हति,—इति उक्तमसकृत् । तत् बोध एव स्फुरति जलमिव, तदावेशात्तु घटादयोऽपि तृणादीवेति एकान्तोऽयम् । यद्वियोगे यस्य यत् न रूपं, तत् तस्य तदावेशात् तृणस्य इव वायुजलादियोगे चाञ्चल्यम् । तथाच घटादीनां स्फुरणं न बोधवियोग इति स्वभावः । तद्वियुक्तावभवनं हि विपक्षात् तदावेशाव्यतिरेकात् निवर्तते स्वं व्यापकमस्वभावतां विरुन्धान स्वभावत्वमवलोक्येति व्याप्तिसिद्धिः । तत एव उक्तं श्रीपरमेष्ठिना

'आत्मैव सर्वभावेषु स्फुरन् ....।' (शि० दृ० १।२)

इति । एवं प्रकाशमानत्वभवत्वप्रतिभात्त्वेषु बोधावेशकृतमेव भावस्य कर्तृत्वं समर्थयितव्यम् । ननु इयता प्रकाश एव उक्तः, ननु विमर्शशक्तिरित्याशङ्क्य आह 'केवलम्' इति । प्रकाशस्य अपि

विमर्शलक्षण एव निज आत्मा। तेन विना हि अप्रकाशात् भेदोऽमुना दुर्लभ इति उपपादितम्। **'महासत्ता'** इति व्याख्यातुं सत्तां तावत् व्याचष्टे **'रूपेण'** इति। चो व्याख्येयान्तरं समुच्चिनोति। रूपेण स्वभावेनेत्यर्थः। **'अन्यस्य'** इति सत्तासंबन्धार्थक्रियाकारित्वादेरपरतद्रूपान्वेषणया अनवस्थोपहतस्य न प्रतिष्ठाविश्रान्तिरस्ति यतः। अथ महच्छब्दव्याख्यानाय या वृत्तिः **'अभावाप्रतियोगिनी'** इति, तां व्याचष्टे **'बोधव्यतिरिक्तं च'** इति। अपिशब्देन प्रागभावादेस्तावत् कथंचित् भावरूपता स्यात्, अत्यन्ताभावस्यापि एषा गतिरित्याह। ननु अभावो भावस्य प्रतियोगी। सत्यं बहिःसद्भावस्य, ननु प्रकाशमानतायाः। तया हि विना प्रतियोगितैव कस्येति दर्शयति **'बोधप्रतियोगिनः'** इत्यादिना। **'इतरथा'** इति प्रकाशस्य अपि यदि अप्रकाशः प्रतियोगित्वेन शङ्क्यमानो भवेत्, ततस्तत्प्रतिक्षेपसारोऽहमिति विमर्शो विकल्प एव स्यात्; नच असौ विकल्प इति वक्ष्यते

'अहं प्रत्यवमर्शो यः प्रकाशात्मा······।' (१।६।१)

इत्यत्र विस्तरत इति अभिप्रायशेषः। ननु द्रव्यत्वघटत्वादिवदाभासरूपं सत्ता नाम सामान्यम्। तच्च प्रमेयभूमिकापन्नं कथं शुद्धप्रमातृधर्मविमर्शात्मतया निरूप्येतेत्याशंकां निवारयति **'सत्ता च न'** इति। स हि सत्ताशब्दो रूढ्या प्रवृत्तः। अयं भवनार्थस्य असेः शत्रन्तस्य भावप्रत्ययेन व्युत्पादितः आहतार्थः इति यावत्। विशेषणविशेषः **'अभावाप्रतियोगिनी'** इति। देशकालाभ्यां निशेषं नित्यमेव या न गच्छतीति यत् सौत्रं, तद्वृत्तिः **'नित्या'** इत्यादिका व्याख्यातुमुपक्रम्यते

१ 'वप्र' ख. । २ 'ननु भावोऽभाव' ख. ।

**'चित्तत्त्वस्य'** इति **'नित्यता'** इति सबन्धः । **'सर्वदैव'** इति सर्वत्र वा इत्यपि मन्तव्यम् । अनेन च इदमुक्तं—यत् खण्डितपृथाकं, तदेव कचित् कदाचिच भवत् देशकालाभ्यां कारणभूताभ्यामाविश्येतेति कृतकस्यैव तौ विशेषणं, न अकृतकस्य । सवेदनस्य प्रमेयकक्ष्यापतितस्यैव च प्रमातृसयोज्यमानाभासान्तराभिधानधर्मयोजनसहिष्णोस्तौ विशेषण, न प्रमेयतोत्तीर्णस्य प्रमात्रेकरूपस्य सवेदनस्य । ननु नित्यता सूत्रे वक्तव्यत्वेन सूचिता यतो वृत्तौ सैव स्फुटीकृता । तत्र च कालास्पर्श एव कारणम् । तत्र किं देशोपन्यासेन सूत्रवृत्त्योरित्याशङ्क्य आह **'कालप्रसङ्गेन'** इति सकोचाभावप्रसङ्गेनेत्यर्थः । **'ननु'** इति परमाणोर्हि सकुचितदेशस्य अपि अस्ति नित्यता । ननु सर्वथैव असकुचिता सवित् विमर्शशक्तिर्निरूप्या, तत् कालाभाव एव सूत्रे सूचित इति कुतः । प्रत्युत वृत्तिकारस्य इदमकौशलं—यदनेन देशासकोचो न अनुवर्तित इत्याशङ्क्य अन्यथा व्याचष्टे **'अथवा'** इति नियतंभव हि नित्यं, नैयत्य अभवनाभावः । यद्यपि च देशसकोचवतस्तत्स्वरूपनिष्ठा नास्ति, तथापि अत्र[1] अयं न भवतीति आपेक्षिकं सभवत्येवेति नित्यतया तदभावोऽपि वृत्तावुपलक्षितः । ननु वेद्यधर्मावेव ताविति कस्मात् । आह **'देशकालौ हि'** इति । एतच्च व्याख्यात

'ज्ञानं च चित्स्वरूपं चेत्............' (१।२।७)

इत्यत्र सूत्रे वितत्य । **'अन्तर्मुखमेव'** इति स्वातन्त्र्यसृष्ट तु बहिर्मुखीकृतमिव 'बोधोऽयमत्राधुना'इत्यादिविकल्पेषु उपारोढ .. ताविति भावः । ननु एव प्रमेयस्य देशकालयोगे इदं तदिति यत् सत्तात्मकं महासामान्य भाति, यच्च गोत्वादिकमपर, तस्य व्या-

---

१ 'अत्र यत्र' ख ।

पित्वनित्यत्वे न स्यातामिति चोद्यं परिहरति 'इदम्' इत्यादिना। आकारसंकोचोऽन्योन्याभावलक्षणो न अत्र संकोचकः। सर्वेण हि रूपेण संविद्विमर्शो भवति। एतदपि अत्र उपलक्षितं मन्तव्यम्। एवमियं महासत्ता व्याख्याता

'शंभोः शक्तिः स्वतन्त्रत्वात्सत्तामात्रस्वरूपिणी।'

इति

'सदेवेदमग्र आसीत्।' (छां०उ० ६।२।१)

इति या निरूपिता श्रीरहस्ये श्रुत्यन्ते च, कक्ष्यास्तोत्रेऽपि

'..........विश्वस्य सत्ता महतीति सोक्ता।'

इति। अथ '**सारतया**' इत्यादि व्याचष्टे '**इह**' इति विश्वत्र जगतीत्यर्थः। एतच्च

'तथा हि जडभूतानाम् ..............।' (१।४)

इति सूत्रे विततम्। '**अर्थनिर्भासोऽपि**' इति दर्पणादिसदृशोऽपीति यावत्; तथाच उक्तं मया श्रीतन्त्रसारादौ

'अन्तर्विभाति सकलं जगदात्मनीह
यद्वद्विचित्ररचना मकुरान्तराले।
बोधः परं निजविमर्शनसारयुक्त्या
विश्वं परामृशति नो मकुरस्तथा तु॥' (३ आ०)

इति। '**तस्याश्च**' इति कर्तृतायाः। '**स्वरूपोपपादकत्वात्**' इति

'..............नाप्रकाशश्च सिध्यति।'

इति।

'........न विना तस्मादिच्छामर्शः प्रवर्तते।' (१।१०)

इति हि न्यायेन प्रकाशभिन्ने भावजाते न बोद्धृत्वमुपपद्यते, नापि चिन्मात्रत्वमिति। तदेतदाह '**उक्तया**' इति। '**वक्ष्यमाणया**'

इति क्रियाधिकारे । नियतपूर्वापरतामात्र कार्यकारणभाव इति वितत्य पराकरिष्यते

'नहि स्वात्मैकनिष्ठानाम्..................।'(२।४।१५)

इत्यादिना । **'तस्या अपि'** इति श्रीसदाशिवेश्वरपदोचिताया अहमिदमिति परापररूपाया इत्यर्थः । **'परम्'** इति अहमित्येतावदिति यावत् । अहमित्यपि यद्रूपं, न तत् नीलमितिवेद्यसंस्पर्शनियतविमर्शतुल्यमिति दर्शयति **'तस्याश्च'** इति परशिवरूपायाः । **'अस्याः'** इति सर्वत्र विजृम्भमाणायाः । **'सैव'** इति यैव स्वातन्त्र्यप्रसरदिशा बाह्यपर्यन्तविमर्शरूपा । **'एषा'** इति अखिलप्रकाशानुग्राहिणी । **'पूर्विका'** इति इच्छादिशक्त्यन्तरकक्ष्या तानदगृह्णती । **'कर्तृतैव'** इति अस्वातन्त्र्यलेशो यस्याः न कश्चित् । **'चितिमात्ररूपा'** इति एतदेव चेतनत्वं यतः । परस्वातन्त्र्यरूपमस्या व्याचष्टे **'शोधिता'** इति । अपरदशाया भिन्नं,परापरदशायामभिन्नमिति उभयथापि यत् वेद्यकार्यरूपं वस्तु, तदस्यां स्वातन्त्र्यशक्तौ अस्तमितं च प्रत्युज्जीवनयोग्यं च; प्रत्युज्जीवितं च अक्रममेव आस्ते इति । सेयं सप्तत्रिंशी तत्त्वकला शुद्धा षट्त्रिंशयाः पर तत्त्वमिति सबन्धः । इयता सारत्वं निर्णीतं यत् वितत्य श्रीविषमदर्शनसारशास्त्रे निरूपितं शक्तिलक्षणेन । इयता सौत्र सारपदम् 'अनुवादमुखेन विधिरपि' इति व्याख्यातम् । **'परमेष्ठिनः'** इति व्याचष्टे **'परमे पदे'** इति सप्तत्रिंशरूपे । यथोक्तं

'योगपीठसंस्थिताय...............।'

इति मन्त्रतत्त्वं व्याख्यातुं भगवता

'योगोऽस्य शक्तयः स्वाख्या......... ..।' (म०तं०४।५)

---

१ 'तात्मक' ख. ।

इति, अन्यत्र अपि

'सा परा परमा देवी योगे भैरवयामले ।'

इत्यादि । ननु

'चिन्तया रहितं यच्च तत्परम् ............ ।'

इत्युक्तं, तत्र किमन्यत् तिष्ठतीत्याशङ्क्य आगमं पठति **'परात्'** इति । **'परमेष्ठिनः'** इति व्याख्याय **'सारतया'** इति सूत्रे यदनुवदनं हेतुतया हृदयत्वे साध्ये, तत् व्याचष्टे **'यथा'** इति **'चेतनं प्रतिष्ठा इति'** संबन्धः, **'चेतनावतामपि'** इति **'यथा'** इति संबन्धः[1] । यथोक्तं

'साक्ष्यं[2] कृत्स्नमिमं देहं यद्यपि व्याप्य तिष्ठति ।
तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम् ॥'

इत्यादि । प्रकृते योजयति **'तथैव'** इति । **'विश्वचेतनस्य'** इति भगवतः परमशिवस्येत्यर्थः । सा परा विमर्शशक्तिः परमेश्वरस्य **'प्रतिष्ठा'** इत्यनेन शब्देन परमेश्वरस्य **'हृदयम्'** इत्यनेन च शब्देन वाच्या । ननु किं तया विमर्शशक्त्या असतः कार्यत्वानुपपत्तेः । तत्त्वभुवनादिकार्यनिर्भरोऽसौ विश्वात्मा विश्वरूपः परमेश्वर इति उच्यतां परम् । नैतद्युक्तमित्याह **'अन्यथा'** इति । विमर्शक्त्या विना मयूराण्डरसस्य या नीलपीतादिनिर्भरता सा यथा कारणता, नतु कर्तृता, तथा भगवतोऽपि अशेषविश्वनिर्भरता स्यात्, नच कारणतामात्रं युक्तमिति भावः । **'चमत्कृतिरूपत्वात्'** इति आनन्दात्मकपरमभोगपर्यन्ता विश्रान्तिरेव हि विशुद्धं स्वातन्त्र्यं यत्र प्रतिघातलेशकृतमस्वातन्त्र्यं मनागपि न शंक्यं येन

---

१ 'इति संबन्धः' ख. । २ 'साक्षं' ख. ।

'आत्मानमत एव.................. ।' (१।५।१५)

इति

'स्वातन्त्र्यामुक्तम् ....... ........... ... ।' (१।५।१६)

इत्यादि विचित्रं निर्माणं वक्ष्यमाणमभिव्यनक्ति । ततः सर्वोत्कर्षहेतुत्वेन सारतया प्रतिष्ठा स्थानं पार्यन्तिकं हृदयं सा भगवतः । इतिशब्दः समस्तैतत्सूत्रोक्तटीकार्थपरामर्शको वृत्तावपि **'स्फुरद्रूपता'** इति **'सत्ता'** इति **'प्रतिष्ठारूपा'** इति **'हृदयम्'** इति प्रत्येकं सबन्धनीयः । प्रतिष्ठारूपेति प्रथमया सारतया इति शब्देन विधिरपि सूचित इति व्याख्यातम् । अन्ये तु–सिद्धान्तागममात्राभिप्रायेण मन्त्रो भगवतो हृदयं, मन्त्रश्च परामर्शमय इति हृदयशब्देन विमर्श आगमेषु व्यवह्रियते–इति मन्यमानाः पूर्वमर्धमनूद्यमानार्थतया सारतया इति च हेतुतया व्याचक्षते । **'हृदयमेव'** इति न अत्र उपचरितं हृदयत्वम्, अपितु मुख्यमेवेति भावः । तदुक्तं

'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥'(१४।२७)

इति गीतासु । अनेन सद्रूपस्य ब्रह्मणः परमानन्दस्य विश्रान्तिस्थानमहमितिविमर्शात्मकं दर्शितम् । अन्यत्र अपि

'यत्सारमस्य जगतः सा शक्तिर्मालिनी परा ।'

इति

'न तैर्विना भवेच्छब्दो नार्थो नापि चितेर्गतिः ।'

इति

'तत्र तावत् समापन्ना मातृभावम्......।' (मा०वि०३।९)

इत्यादि

'न सोऽस्ति प्रत्ययो................।
वाग्रूपता चेत्..............॥' (वा०प०१।१२५)

इत्यादि । बौद्धसांख्यादिभिरपि अध्यवसायविश्रान्तिरेव प्रकाशस्य अंगीकृतेति विमर्शशरीर एव प्रकाशो युक्तः ॥ १४ ॥

ननु अनन्तशक्तौ भगवति विमर्शशक्तिः कथमित्थमभिषिक्ता,— इति शङ्कायां सूत्रद्वयं

आत्मानमत एवायं ज्ञेयीकुर्यात्पृथक्स्थिति ।
ज्ञेयं नतु तदौन्मुख्यात्खण्ड्येतास्य स्वतन्त्रता ॥ १५ ॥
स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥ १६ ॥

तत्र कर्तृत्वलक्षणा स्वातन्त्र्यशक्तिर्विश्वशक्तिश्रेणीसमाक्षेपेण वर्तते इति सैव विमर्शरूपा प्रधानमिति तात्पर्यम् । तत्र प्रथमं श्लोकमवतारयति **'अतश्च'** इति समानाधिकरणाः पंचम्यर्थाः, अनेन **'अतः'** इति व्याख्यातम् । **'अयम्'** इति पठित्वा व्याचष्टे **'परमेश्वरः'** इति । एवकारमात्मशब्दानन्तरीकृतं विश्वस्य न अन्यत् रूपमिति स्फुटीकर्तुं व्याचष्टे **'विश्वम्'** इत्यादिना । ज्ञातृरूपत्वादज्ञेयमेव ज्ञेयं करोति,—इति दृढेन अनुमानेन संभाव्यते हेत्वन्तरानुपपत्तेरुक्तत्वात् । तामिमां दृढां संभावनां नियोगलक्षणां **'नियमात्'** इत्यनेन विवृणोति । अनेनैव च पदेन **'पृथक्स्थिति ज्ञेयं नतु'** इत्यादि सकलं वाक्यं संक्षेपेण व्याख्यातम् । अस्य हि प्रसङ्गोऽर्थः, प्रसङ्गविपर्यये तु तात्पर्यम्— यदि पृथक्स्थिति ज्ञेयं, तदा तदौन्मुख्ये 'परतन्त्रोऽयम्' इति अस्वतन्त्रोऽयमिति अस्वतन्त्रो जडः, जडस्य च कथं ज्ञेयविषयं स्वातन्त्र्यमिति प्रसङ्गः । स्वसंवित्सिद्धं च इदमस्य । ततोऽयं स्वातन्त्र्यात् न परोन्मुख इति आत्मानमेव विश्वं ज्ञेयीकरोति,—

१ 'शरीर' ख. ।

इति प्रसङ्गविपर्ययादिष्टसिद्धिरिति सूत्रार्थः। **'कारणात्'** इति बीजादिव अंकुरः। **'जायेत'** इति यदि इद युक्त्या घटेत, नतु घटते इति अभिप्रायशेषः। ननु कुम्भकारो भावितं घट बुद्ध्या अभिसन्धाय करोति, नतु आत्मानमिति सम्भावनां निरस्यति **'भाविन्यपि'** इति। **'पृथग्भूता'** इति घटरूप एव विश्रान्ता, नतु सविद्रूपे प्रतिष्ठितेत्यर्थः। एतदुक्तं भवति–न वस्तुतः कुम्भकृत् कर्ता,–इति उक्तं विस्तरतः। नहि अस्य शुद्धं कर्तृत्वम्। **'विरुद्धरूपम्'** इति पररूपम्। ननु शुद्धत्वं कथमिति अनुकुर्यात्। आह **'अनियन्त्रितं हि'** इति नियन्त्रण हि प्रतिघातोऽस्वातन्त्र्यमशुद्धस्वातन्त्र्यम्। ननु विरुद्धता तर्हि शब्दमात्रम्। आह **'लोकापेक्षया'** इति। ननु परमेश्वरादपरः को लोकः। सत्यं, स एव तु परिगृहीतमायाशक्तिप्रच्छादनपुरःसरतया वेद्यवेदकयुगलसहस्रमयो लोक इति दर्शयति **'लोकं प्रति'** इति। ननु अधुना भिन्ने कर्तृता न युक्तेति ब्रह्मादीनां तिर्यगन्तानां सा कथं स्यात्। क एवमाह–तेषां कर्तृता कचिदपि–इति। कस्य तर्हि। आह **'परमेश्वरस्यैव'** इति। **'उपचरितैव'** इति तदिच्छोपकल्पिताभिमानमात्रसारा यावदभिमान, न यथावस्तु। तत एव

'अभिमानमहत्यागे न कश्चित् कर्मबन्धनः।'

इत्यादि गीतादिप्रदेशेषु निर्णीतम्। **'नतु विभोः'** इति न तस्य उपचरिता कर्तृता। यदि च व्यतिरिक्तज्ञेयोन्मुखता भवेत्, उपचरिता इयं स्यात्, न पारमार्थिकी,–इति चित्तत्त्वस्य कर्तृताभावे विश्वं न किंचित् स्यादिति प्रसगः। अस्ति तु तत्। तदनुपचरिता सा। अनुपचरितत्वं वा इत्यं–यदि न व्यतिरिक्तं ज्ञेय कार्यं च,

अपितु आत्मैव ज्ञेयीक्रियते इति । अत्रच स्वातन्त्र्यशक्तिरेव विजृम्भते इति सैव प्रधानमिति पिण्डार्थो वृत्तिविवृत्योः । द्वितीयं श्लोकमवतारयन् **'न केवलम्'** इत्यादिना **'वेद्यीकरोति'** इत्यन्तेन पूर्वसूत्रार्थमुपजीवति **'अत एव'** इत्यनेन । एतत् विशेषयितुं **'तदानीन्तनम्'** इति तदैव तदेकतया स्फुरन्तम्, यत् वक्ष्यति **'यदापि आत्मानमेव वक्तारम्'** इत्यादि । शिवः परमेश्वरः,—इत्यादिपरामर्शोपलक्षितस्य हि न शुद्धैव वेद्यता, यत् वक्ष्यति **'शिवादिशब्दानाम्'** इत्यादि । **'दुष्करमपि'** इति आत्मनो घटादितया वेद्यताधानं तावत्करणं च, तच्च शक्यं कदाचित्, इदं तु अशक्यं—यत् वेदकमेव सत् वेद्यं च सत् वेदकमेव—इति । तदपि स्वातन्त्र्यात् संपद्यते यतो वेद्येन सह वेदकस्य एकता तत्त्वतः । तत् घटादेर्वेद्यीकृतस्य वेद्यताकाले भवन्त्यपि वास्तवी वेदकता मायाशक्त्या वेदकभागादाच्छिद्यैव प्रच्छादिता कर्तव्या, शिवादिपरामर्शे तु वेदकांशादनाच्छिन्नस्यैव सा वेद्यतेति । **'अन्यथा'** इति यद्येवमपि कर्तुं न शक्नुयात्, तदविरुद्धमेव अर्थं जानीयात् कुर्याच्च; ततो नियमव्युदस्तरूपज्ञानकरणायोगात् सर्वं जानाति करोतीति यः सर्वशब्दस्तस्य अर्थो विलुप्तः स्यात् । ननु स सर्वं जानातु च करोतु च । यत्तु शिवादिशब्दवाच्यं निर्मितं, तद्विनिर्मुक्तस्वातन्त्र्यमिति कुतः । अत्र आह **'शिवादि'** इति । **'ततः'** इति शिवादिशब्दादुच्चरितात् । **'तस्यैव'** इति सर्वज्ञादिरूपस्य वेदकस्य उपदेष्टृपदे वर्तमानस्य । एवंन्यायबलेन तदानीन्तनो वक्ता वेदकरूप एव सृष्ट इति प्रतिपादितम् । परामर्शबलेन अपि एवमिति ब्रूते **'यदापि'** इति ।

१ 'तद्विरुद्धं' ख. ।

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।'
(भ० गी० १०।२०)

इति

'सर्वस्य चाहं हृदि सन्निविष्टो………… ।'
(भ० गी० १५।१५)

इत्यादौ न शरीरादिरूपं तदीयं सर्वस्य आत्मा सर्वस्य हृदि संनिविष्टमुपदिष्टं प्रत्यक्षादिविरोधात् । तदाह **'बोधात्मतया'** इति । तत्र स्वकं निदर्शनमाह **'यथा'** इति **'परमेश्वरः'** इत्यन्वयम् । **'यतश्चैवं तदपि'** इति तत इदमापतति । किम् । आह 'योऽहं वच्मि' इति निर्देशवशेन वक्तुरात्मनः 'स शिव' इति निर्देशबलेन प्रतिपाद्यस्य सतो यः स एव प्रतिपादको योऽहमिदं वच्मि इति निर्देशबलात्, तस्य यत् लक्षणं कर्तृभावः कर्तृत्वं नाम, तत् वर्तमानमखण्डितस्य । **'स यावत्'** इति । सोऽपि नाम । **'तेनैव'** इति अखण्डितप्रतिपादकत्वलक्षणकर्तृभावेन प्रतिपाद्यते । यावच्छब्दोऽपिशब्दार्थे इति दुष्करताद्योतकः । ननु प्रतिपद्यतां तथा, तथात्तु निर्मित इति कुतः । ब्रूते **'प्रतिपाद्यमानतैव च'** इति । ननु तथाभूतेन किं निर्माणेन । उच्यते **'तस्यैवच'** इति अखण्डितस्वातन्त्र्यस्य । अन्यथाहि ईश्वर इत्यनीश्वर इति भावनादेरविशेषः स्यात् । एवमीश्वरो मया पूज्यते ध्यायते उपदिश्यते इत्यादौ निर्मितत्वाद्यदसौ पृथक् प्रमातुरवभासात्, नच अत्यन्तं पृथक् स्वात्मन्येव तथाभासादिति । **'तथा'** इति अत्यक्तस्वातन्त्र्यतया । **'तेनैव'** इति ईश्वरेण । अन्ये तु—अत एव स्वातन्त्र्यादिति श्लोकद्वयेन शिवादिसृष्टिरेव प्राधान्येन अभिधेया अस्य अर्थस्य प्रसिद्धत्वात्, तत्र तु पूर्वश्लोकोक्तं नीलादिनिर्माणं दृष्टान्तः, दृष्टान्ततयोजनायैव

१ 'कर्तृताभाव' क. । २ 'धेयस्यार्थस्य' ख. ।

केवलमित्याद्यवतारणग्रन्थः—इति योजयन्ति । **'व्यवहारयेत्'** इति शकि लिङ् । एवंच योजना—एवमात्मानं निर्माय उपदेश-पूजनभावनादिव्यवहारमात्मा कर्तुमात्मनि शक्तः, तस्मादित्थ-मपि आत्मानं ज्ञेयीकुर्यात्; तत्र न विमर्शशक्तिरेव हेतुरिति युक्तमवोचाम

'स्वभावमवभासस्य············ ।' (१।५।११)

इति । तेन ज्ञेयीकरणमेव प्रधानं विधेयमिति व्याख्यातुं वृत्तिः **'आभासयति'** इति अन्यथा आभास्य व्यवहारवतीति वृत्ति-रुचिता स्यात् ॥ १५–१६ ॥

ननु स एव आत्मा प्रतिपाद्यः, प्रतिपादकश्चेति कुतः । प्रकाशो हि भिद्यते प्रतिपादकस्य निराभासत्वात्, प्रतिपाद्यस्य च साभासत्वात्, विमर्शाभेदादभेदः सत्यपि आभासभेदे स्फुटा-स्फुटादाविव

'गोः स्तनात्पाततः क्षीरे विकारस्तत एव हि ।

नच न क्षीरमित्येष व्यपदेशोऽस्ति तत्क्षणम् ॥'(शि.दृ.१।१८)

इति न्यायेनेति । एतदपि अत्र नास्ति प्रतिपादकस्य अहमिति-विमृश्यत्वात्, इदमिति तु प्रतिपाद्यस्य । अत्र उत्तरदानाय शङ्कितपूर्वपक्षं[1] सूत्रं

**नाहन्तादिपरामर्शभेदादस्यान्यतात्मनः ।**

**अहंमृश्यतयैवास्य सृष्टेस्तिङ्वाच्यकर्मवत् ॥ १७ ॥**

एतत्पूर्वपक्षोपक्रमं संक्षिप्य अवतारयति **'आभासभेद'** इति । **'एतत्परामर्शभेदेऽपि'** इत्यन्तं पूर्वपक्षव्याख्यानम् । **'वक्ष्यते'** इति

'दूरान्तिकतयार्थानाम्··············।' ( २।३।१० )

---

१ 'पक्ष' ख. ।

इत्यत्र । '**मूलपरामर्श**' इत्यादि उत्तरव्याख्यानम् । मूलपरामर्शोऽहमिति, तस्य अत्यागस्तेन विना 'अयमीश्वर' इत्यस्यैव परामर्शस्य अप्रतिष्ठत्वात् तत्कालेऽपि अनुवेधकत्वेन अवस्थानम् । आदिशब्देन तिङ्क्रिययोः प्रत्ययमसत्त्वभूता च शक्तिमुपलक्षयितु सूत्रे निर्देश इति व्याचष्टे । क्रियाभेदेन च आभासपरामर्शौ भिन्नावपि एकपरामर्शप्रतिष्ठितौ भवतः—निपीयमानं मधु मदयति, कुम्भकारोऽयं क्रियते—इति । तदाह '**योग्यतया**' इति । '**कदाचित्**' इति । कालेन क्रियापि उपलक्ष्यते, प्रकृते तु एतद्वैधर्म्यमित्याह '**अत्र तु**' इति । तेन भिन्नावेव परामर्शाविति सिद्धम् । आभासावपि भिन्नाविति दर्शयितुं या वृत्तिः '**आभासभेदे च**' इति, तां व्याचष्टे '**व्यतिरिक्त एव**' इति भावयितुः । '**अनाभासस्य**' इति वेदकतया । '**तदानीम्**' इति तस्मिन्नेव काले । यदेकस्मिन्नेव काले भिन्नाभासविमर्शं, तत् भिन्नं घटपटवदिति स्वभावहेतुः । एवंभूतमपि यदि अभिन्नं स्यात्, तत् भेदो न क्वचित् स्यादिति क्वचित्सम्भवत्वं यदस्य व्यापकं, तत् हीयेतेति व्यापकानुपलब्ध्या विपक्षात् हेतोर्निवृत्तिरिति व्याप्तिसिद्धिः । एवमियता अहन्तेदन्तापरामर्शस्य, तदुपलक्षितस्य च आभासस्य भेदादात्मनो वेदकरूपस्य च अन्यता शङ्क्यते इति सूत्रशङ्कितपूर्वपक्षव्याख्यानम् । '**तथापि**' इत्यनेन समुच्चयोपयुक्तात् चशब्दादेकस्मादपरमपिशब्दार्थे वर्तमानं व्याचक्षाणो नेतिसौत्रवृत्तिग्रन्थगतप्रमातैवेत्येवकारस्पृष्टं सिद्धान्तभागं व्याचष्टे '**आत्मा**' इति निर्भासनकाले न पर इति स्फुरणम् । '**ईश्वरः**' इति ईष्टे, '**स्वतन्त्रः**' इति जीवितं, शिवः श्रेय आनन्दो विश्रान्तिरिति तत्त्वं, प्रमाता प्रमिमीते जानाति करोति इति वस्तु।

१ 'ष्टितकाले' ख. ।

तदत्र सर्वत्र अहमिति चेत् निरूढिर्न जाता, तदा आत्मादि-परामर्शा अपि न परामर्शा एव विश्रान्त्यलाभात् । विश्रान्ति-स्थानमेवच परामर्श इति । ननु एवमात्मेत्यपि परामर्शोऽहंपरा-मर्शसतत्त्व इति कथमुच्यते आत्मा तत्र सृष्ट इति । आह **'केवलम्'** इति अहमिति उपक्रम एव स्वातन्त्र्यपरामर्शः, आत्मेत्यादौ तु उपक्रमे प्रमेयत्वेन इदन्तालक्षणपारतन्त्र्योन्मेषः[1] सत्यपि अनुवेधकतया अन्तःस्थिते अहंपरामर्शे, तदाशयेन सृष्टिरुच्यते । 'अन्तरीकृत' गर्भीकारेण अन्तर्णीय व्यव-धायिकां च तां विधाय । तथाहि आत्मेति परामर्शस्य अनन्तरं यदि अहन्ता न स्फुरेत्, तत् प्रमातुर्विश्रान्तिर्न भवे-दिति आत्मपरामर्शविश्रान्तिपरामर्शयोर्मध्ये अहमिति व्यवधाता परामर्शः पाकपरामर्शविश्रान्तिपरामर्शयोरिव पचतीतिपरामर्शः । ननु अहंपरामर्शेऽपि इदन्ता स्फुरति उपक्रमे कृशोऽहमित्यादौ । सत्यं, तत्र तु इदन्तानुविद्धोऽसावहमितिविमर्शः शुद्धाहंपरामर्शे विश्राम्यति,—इति उक्तमसकृत्

'यद्यप्यर्थस्थितिः.................।' (अ०प्र०सि०२०)

इति न्यायेन, केवलं तत्र स्वातन्त्र्यमेव उभय्यामपि अहन्तायां, प्राच्यं तु देहादिसंकुचितम् । तदाह **'परामर्शान्तराव्यव-धानेन'** इति । इह तु उपक्रमे आत्मायमिति प्रमेयताकृतं पारतन्त्र्यं भातीति अहंप्रतीतिर्व्यवधात्रीति उक्ता । एतत् संवादयति **'अत एव'** इति । यतः साक्षात्परामर्शो व्यवहितपरामर्शा-दन्तरङ्गः, ततः क्लेशकर्मसूत्रोक्ता अपि ईश्वरशब्देन पारतन्त्र्यस्पृश्या परमेश्वरस्य या वाच्यता उक्ता, तामनादृत्य सूत्रान्तरम् । प्रण-वोपलक्षितो हि रहस्यबीजमन्त्रकलापः संविद्विमर्शपरमार्थः प्रमे-

---

१ 'न्मेषे सत्यपि' ख. ।

यद्रूपं परतन्त्रमर्थं नैव उल्लासयति । अत एवंविधः शब्दोऽव्ययमिति उच्यते । बहिःसृष्टस्य हि लिङ्गसंख्यादिशक्त्यन्तरयुक्तता स्यात्, न आन्तररूपस्य संविद्रूपस्य तद्धर्मस्य वा । अत एव समुच्चयनविकल्पनादिकं बाह्यवस्तुनिष्ठत्वाभावात् संवेदनस्वातन्त्र्योल्लासनलक्षणं धर्ममभिद्योतयन्तश्चादयोऽपि असत्त्वभूतार्थनिष्ठा इति उच्यन्ते । समुच्चय इत्यादौ तु तदेव रूपं सृष्टं भाति, ततो लिङ्गसंख्यादियोगः । तत्रापि च-अर्थप्रतीतौ च अपिव्यवधानमेव । प्रणवेन च जाग्रदाद्यवस्थाचतुष्कपरामर्शस्वातन्त्र्यमयेन विरुद्धविधिनिषेधादिसमस्ताभ्युपगमरूपेच्छादिशक्त्यविघातपरामर्शिना स ईश्वरः सततः परामृष्टो भवति स्वतन्त्रस्वभावः,—इति

'तज्जपस्तदर्थभावनम् ।' (यो० सू० १।२८)

इत्युक्तम्, प्रमेयरूपतास्पृशस्तु शब्दास्तथारूपव्यवधिना तत्परामर्शं विदधते । यथोक्तमागमे

'भ्रियात्सर्वं रवयति सर्वदो व्यापकोऽखिले ।

इति भैरवशब्दस्य सन्ततोच्चारणाच्छिवः ॥'(वि०भै०१३०)

इति । एतदर्थमेवच भगवतैव शिवादिपदानां श्रीमद्व्योमव्यापिमहामन्त्रराजे मन्त्रविवरणं स्वयमेव निरूपितम् । तदनुसारेणैव व्यासमुनिप्रभृतयोऽपि

'तिस्रो देव्यो यदा चैनम् ...... ... ।'

इत्यादि निरूपितवन्तः । यदवलम्बनादभिज्ञानिर्वचनाद्यपि नामसहस्रपर्यन्तमन्यैर्निरुच्यते । तत एव पाञ्चरात्रिका निरुक्तमाद्रियन्ते । **'तिङ्वाच्यकर्मवत्'** इति व्याचष्टे **'यथा'** इति । सिद्धरूपं स्वतन्त्रमिति उपक्रमे, साध्यमानं परतन्त्रार्थपर्यन्तीभूतमिति विश्रान्तौ । **'पचति'** इति क्रमेण क्रियाजातिगुणपरामर्शाः । आदिग्रहणात् कालादयः । यथाह तत्रभवान्

'दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः ।
शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ॥'(वा०प० ३।६।१)

इति। तत एव द्रव्यायमाणानामेषां संख्याकालादिसंबन्धो न विरुध्यते, द्वावेकत्वगुणावयं वर्तमानः कालः पूर्वं भविष्यन्नभूत्कर्त्ता विष्णुजन्मनि भूतो भविता,—इति। घटावपाक्षीदित्यादिपरामर्शप्रतिपन्ने तु संख्याकालादौ स नास्त्येवेति। तत एव तत्त्वतस्तत्परामर्शाः, न इतरे। स्वदर्शनं घटयितुं वृत्तौ दृष्टान्तान्तरं यदुक्तं, तत् व्याचष्टे **'यथाच'** इति। दार्ष्टान्तिकस्य पूर्वमुक्तत्वात् तथेति न पुनरुपसंहारः। **'स्मृतिः'** इति वर्तमानविकल्पनरूपा। अस्य दृष्टान्तस्य प्रकृतेन साम्यं नास्ति उभयत्र अपि स्मृतावनुभवे च घट इतिपरामर्शाभेदादित्याशयेन आह **'अत्रापि'** इति। स इति परामर्शान्तरमुपक्रमे भवदपि अयं घट इति पूर्वपरामर्शविश्रान्तं प्रथते। ननु स इति न वस्तुपरामर्शस्य भेदकं रूपं, आभासभेदमात्रमेतत् कालभेदकृतम्। नच आभासभेदो भेदक इत्याशयेन आह पक्षान्तरं **'साक्षात्'** इत्यादिना। सर्वसाम्याभावेऽपि व्यवधानांशे दृष्टान्तः प्रकृते इति यावत्। एतदेव च युक्तमिति दर्शयति **'परामर्श'** इत्यादिना **'उक्तप्रायम्'** इत्यन्तेन। तेन भिन्नाभासविमर्शत्वादात्मनो ग्राह्यग्राहकतायां युगपत् भेद इत्यत्र हेतावाभासभेदो विमर्शभेदापेक्षो भेदको, विमर्शभेदश्च नास्त्येव,—इति सोऽपि असत्कल्प इति हेतुरत्यन्तासिद्धीकृत इति तात्पर्यम्। ननु एवं घट इत्यपि परामर्शोऽहन्तायामेव विश्राम्यति। यथोक्तं

'इदमित्यस्य विच्छिन्नविमर्शस्य······।' (अ०प्र०सि० १५)

इत्यादि। तत् घटादिसृष्टेरपि कथं परिहृतवेद्यकभावत्वं येन आत्मादिसृष्टेरेव स्वातन्त्र्यायुक्तत्वमुक्तमित्याशङ्क्य आह **'माया-**

पदे च' इति। सत्यमेवत्, किन्तु प्रमाता घटाद्यर्थक्रियामर्थयमानस्तां भिन्नपरामर्शसपाद्यामेव अभिमन्यते इति पार्यन्तिकमहन्तापरामर्शमदसीयं न आद्रियते, आत्माद्यर्थक्रियां तु तत्पर्यन्तपरामर्शविश्रममन्तरेण न लभते, यथा पाकाद्यर्थो क्रिया साध्यतापरामर्शम् , ततस्ता पार्यन्तिकीमेव विश्रान्तिमत्र प्रमाणयति। मायापदं हि इद विमृश्यते, तत्र च अहन्तेदन्तयोर्विरोधः, इदन्तायामपि परस्परं घटपटादीनां, यदाह 'ग्राह्याणां च' इति। चैत्रमैत्राद्यहन्ताभेदोऽपि अय ग्राह्यरूपशरीरादिभेदायत्त इत्याशयेन पुनर्ग्राहकाणा च इति न अवोचत्। 'तत्रस्थानाम्' इति चिन्मात्रस्थानाम्। शुद्धत्वं शरीराद्यारूपितमायीयाहंभावापेक्षया अहंभावस्य। स च शुद्धः सर्वमेव सहते। स्वातन्त्र्यपरमार्थो हि असौ। एतच्च उक्तं

'स्वामिनश्च··············।' (१५।१०)

इत्यत्र ॥ १७ ॥

ननु आत्मैव परमेश्वर इति तव संमतं, आत्मा च ग्राहकरूपो ज्ञानाध्यवसायस्मरणसकल्पादिभिरेव व्यवहार वर्तयति, न विमर्शशक्त्या, तत् कस्य अन्यस्य सा निरूपिता,—इत्याशङ्कायां सूत्रं

मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।
कथिता ज्ञानसंकल्पाध्यवसायादिनामभिः ॥ १८ ॥

सत्यं विभुरेव आत्मा परमेश्वरः। स तु मायाशक्त्या सकोचात् ग्राहको यथा, तथैव विमर्शशक्तिरपि मायाशक्तिसंकोचितवेद्योपरागसंकुचिता सती ज्ञानस्मरणादिरूपेति उच्यते, नाममात्रेण तु विमर्शशक्त्यतिरिक्तं किमपि ज्ञानादितत्त्वान्तरमिति तात्पर्यम्। अनेन च इयमपि शङ्का शमिता भवति—ननु विश्वपरामर्शात्मक-

दहमित्येतावन्मात्रतत्त्वास्ततश्च ज्ञानस्मृत्यादयो भगवतः शक्तयः इति कथमुक्तं, ज्ञानादीनां च संशयादिभेदः कथं, कथंच नीलादिवैचित्र्यमिति। मायीयवेद्योपरागजं हि इदमिति हि तात्पर्यम्। एतदवतारयति **'सैव च'** इति। अनुपपन्नाभासनं माया, तत्र सामर्थ्यं शक्तिः; तद्वशात् भिन्ने वेदके यत् वेद्यं भिन्नं वेद्याच्च वेदकाच्च तत्र तत्रेत्यन्तं प्रमातरि व्याख्येयं वैयधिकरण्येन प्रमेये च, अन्यथा सूत्रेऽपि भिन्ने भिन्नेन च इति। **'तत्र तत्र'** इति विचित्रे, यतो वैचित्र्यादेव ज्ञानादिनामभेदः। **'एवम्'** इति उक्तं यत् युक्तिजातं **'तत्'** इति तस्मात् हेतोरयमर्थो न निह्नोतव्यः। कोऽसौ। आह **'अर्थ'** इति। **'एकरूप'** इति, ननु बहवः प्रकाशास्तद्भेदहेतूनां देशकालाकारादीनामभावात्। **'विश्वात्मा'** इति सर्वप्रमातृत्वेन सर्वज्ञोऽन्यस्य वेदनायोगात्। **'विश्वकृत्'** इति अन्यथा वैचित्र्यमिदमहेतुकमेव स्यादिति हि उपपादितं वितत्य, उपपादयिष्यते च। ननु ईश्वरेण मायाशक्त्या भास्यते इति वक्तव्ये का इयं वृत्त्युक्तिरिति मत्वा आह **'उपयोगात्'** इति। अधिकोपयोगप्रकाशनं प्रयोजनमभिप्रेत्य उपचारोऽयं मन्तव्य इति भावः। षष्ठी च इयं भास्यते इत्येतदपेक्षया अपि योज्या। वृत्तावपि एवम्। यतोऽन्यस्य न कस्यचित् भास्यते, ततो विभोर्ज्ञानादिकाः शक्तयः; ननु आत्मनामिति दर्शयति **'तथापि'** इति **'मायापदेऽपि'** इति। तत्र ज्ञानं व्याचष्टे **'अभिनवम्'** इति अपूर्वम्। **'प्रमातुः'** इति मायीयस्य। ननु एवं **'विभोर्भास्यते'** इति कथमित्यत आह **'तच्च'** इत्यादि। **'तत्'** इति ततो हेतोः। **'तदीया'** इति ऐश्वरी। **'सैव'** इति **'ज्ञानम्'** इति पूर्वेण संबन्धः। **'अध्यक्षम्'** इति व्याचष्टे **'इन्द्रिय'** इति

---

१ 'पेक्षापि' ख.।

अक्षैः करणतया अधिष्ठितमित्यर्थः। ननु प्रत्यक्षस्य अवश्यं विपर्येण भाव्यं, तत् कथं स वृत्तौ न उक्तः। क एवमाहेत्याह **'प्रकृतम्'** इति। **'विश्वं भेदेन आभास्यते'** इति हि उक्तम्। **'तस्यैव भिन्नस्य'** इति वृत्तिं शङ्कितपूर्वपक्षनिराकरणेन व्याचष्टे **'तस्यैव'** इति अनुभूतस्येत्यर्थः। ननु स्मृतावध्यवसाये च एवमस्तु, सङ्कल्पे तु नव एकविषय उत्थाप्यते, आदिग्रहणगृहीते च संशयोत्प्रेक्षादौ विकल्पे, तत् कथं स्मृतिसंकल्पाध्यवसायसाधारण्येन **'तस्य'** इति वृत्तावुक्तमिति। अत्र प्रतिब्रूते **'अनुभवसंस्कार'** इति। एवं बाह्याभिप्रायेण **'तस्यैव'** इति वृत्तावुक्त, यदिवा **'तस्यैव'** इति अनुभूतस्येति न व्याख्यायते, अपितु मायाशक्तिपरवशस्येति। एतच रूपं विकल्पस्य अपि अस्ति,—इति व्याख्यान्तरं दर्शयति **'तदानीमपि'** इत्यादिना। ननु प्रत्यगात्मनो मनोवृत्तिः संकल्पः, बुद्धिवृत्तिरध्यवसायः, एवमक्षवृत्तिर्बुद्धिवृत्तिर्वा ज्ञानं, मनोबुद्ध्यक्षाणा च जडत्वमिति ज्ञानादयः कथं चितिस्वभावाः,—इति चोद्य गर्भीकृत्य वृत्तावपिशब्दो यः प्रयुक्तः, तद्व्याख्यानाय आह **'यद्यपि च'** इति। अत्र उत्तर स्फुटयति **'तथापि'** इति।

'यद्यप्यर्थस्थितिः··············।' (अ०प्र०सि०२०)

इति नयेन प्रत्यगात्मा शुद्धसंविन्मात्रपरमार्थः,—इति मनोबुद्ध्यक्षवृत्तीना विमर्शात्मकचिद्रूपतैव। एवमेवच उपक्रान्तं वृत्तिक्रुतेति वृत्तौ दर्शयति **'चितिशक्तिः'** इति। चो हेतौ। यतः प्रत्यगात्मा वृत्तौ परमेश्वर इति कथितः, ततश्चितिशक्तिरिह परा कर्तृता मन्तव्या, विपर्ययेण वा हेतुहेतुमत्ता योज्या। फलं हि तुल्यम्। ननु अध्यवसायो ज्ञानेनैव स्वीकृतः। सत्य, अस्ति तु अपरोऽसौ यदर्थं पुनरध्यवसायपदमिति दर्शयति

**'अध्यवसायश्च'** इति । **'साक्षात्कारैक्येन'** इति तावतः साक्षात्काररूपत्वात् । प्रत्यक्षस्य व्यापारोऽध्यवसायः, व्यापारेण च तद्वतो भिन्नेन न स्थीयते, अध्यवसायबलात् वा ऐक्यम् । यदाह **'प्रत्यक्षायन्ते हि विकल्पाः'** इति । **'अस्ति कूपः'** इति संशयरूपः प्रमुखे तथात्वेन अपरिस्फुट इत्यर्थः ॥ १८ ॥

ननु सविकल्पे स्मृत्यादिवर्गे अस्तु विमर्शोऽभिलापयोजनामयः, साक्षात्कारात्मनि तु अनुभवे तादृशदर्शनरूपे स्मृतेः पितरं संस्कारप्रबोधं विदधाने तत्कारणकसंकेतस्मरणायोगात् कारणानुपलब्ध्या प्रत्यवमर्शाभाव एव युक्त इति परभ्रमभञ्जनाय सूत्रं

साक्षात्कारक्षणेऽप्यस्ति विमर्शः कथमन्यथा ।
धावनाद्युपपद्येत प्रतिसन्धानवर्जितम् ॥ १९ ॥

एतदवतारयति **'कथमन्यथा'** इत्यादियुक्तिरूपसूत्रांशार्थोपक्रमं प्रथमसूत्रभागाभिधेयं साध्यतया पश्चात् निर्दिशन् । **'ननु परामर्शमन्तरेण'** इति । सत्यं, अस्ति हि सः, आलोचनस्य तु पश्चात् । एतत् न सहते **'उत्तरकाल'** इत्यादिना । **'स्वात्मनि'** इति विकल्परूपे पूर्वज्ञाने साक्षात्कारे वा अवभातस्येति विकल्पद्वयम् । प्रथमसुद्दिश्य आह **'स्वात्मनि'** इति । **'अत्र'** इति साक्षात्कारे । **'न युज्यते'** इत्यत्र हेतुमाह **'यतः'** इति । **'यावदित्यादिना'** इति यदेवंभूतं वस्तु, तस्य हेतुत्वमस्मिन्नर्थे इति यावत् । पूर्वं साध्ये निर्दिष्टे यच्छब्देनैव उपक्रम्यमाणस्य हेतुतावगतये पञ्चमी । नहि अत्र तच्छब्दो भविता यत उत्पन्ना हेतुविभक्तिस्तस्य अर्थस्य हेतुतां गमयेदिति । एतत् समीकरोति **'तत्'** इति । **'अर्थस्य'** इति अर्थे हि सविकल्पकः, न स्वात्मनि तत्र अस्य साक्षात्काररूपत्वात् । एतत् दूपयति **'तथापि'**

इति। यत्र हि न साक्षात्कारात्मा असौ, तत्र विकल्पः; यत्र च न साक्षात्कारात्मा, सोऽर्थोऽप्रकाशमान एवेति अप्रकाशमानस्य विकल्पे विमर्शनं विदधत् सर्वस्य पूर्वज्ञानावभातस्य किं न विदध्यादप्रकाशमानत्वेन अविशेषात्। प्रकाशितस्यैव विकल्पनं युक्तं, न इतरस्येत्याशयेन पूर्वग्रहणं ज्ञानग्रहणं च। अत्र परकीयं विशेषप्रतिपादनमाशंकते दूषणाय **'अथापि'** इति। एतत् दूषयति **'तत्रापि'** इति एवमुच्यमाने सत्यपीत्यर्थः। **'प्रतिपादितम्'** इति

'सत्यम्······················।' (१।३।१)

इत्यादि उपक्रम्य

'दृक्स्वाभासैव····················।' (१।३।२)

इत्यत्र प्रकरणे। **'ततः'** इति उक्तात् न्यायात्। यत् विकल्प्येन[1] सह ऐक्यं साक्षात्कारस्य, स निर्विकल्पकत्वाभावे हेतुः। अथ **'दृष्टसंकलनात्मकम्'** इति यद्रूपं विकल्पनस्य साक्षात्कारबुद्धावसंभवित्वेन दर्शितं, तत् व्यापकपूर्वापरपरामर्शानुपलब्ध्या तद्विकल्पस्यापि[2] न संभवति निर्विमर्शतायां साक्षात्कारधिय इति दर्शयति **'नचापि'** इति।

'संकेतस्मरणोपायम्··········।' (प्र० वा० ३।१७४)

इति हि निरूपितम्। तत्र संकेतस्य स्मरणं संस्काराधानसंस्कारप्रबोधयोरायत्तम्, तौ च निर्विकल्पकेन[3] कर्तुमशक्यौ। उक्तं हि 'अनुभवः पटीयान् स्मृतिबीजमाधत्ते, तादृशदर्शनादस्य प्रबोधः' इति। पटीयस्त्वां च अनुभवस्य न अपरां कांचन मन्महे ऋते विमर्शविश्रान्तेः। यदपि भट्टेन निरूपितं

'प्ररोहोऽस्याः पटीयस्त्वम् ··········।'

---

१ 'ल्पक' ख। २ 'ल्पेत' ख। ३ 'सङ्कल्पकात्मक' ख.।

इति। तत्रापि प्ररोहस्य प्रमातृविश्रान्तिमहमित्थमेव भासे-इत्येवंभूतविमर्शरूपां तां किमुतान्यद्रूपामुत्पश्यामः। तादृशत्वमपि दर्शनस्य प्ररूढतैवेति विमर्शरूपत्वाभावे कथं संस्कारस्य आधानं प्रबोधनं वा स्यात्। यत् पुनः प्रामाण्यपरीक्षायै भट्टेन उक्तं

'व्यक्तः[1] प्रकाशः स्वार्थार्थे[2] संस्कारप्रतिबोधकः।
नान्यथा स्याद्विकल्पेऽपि तत्प्रवृत्तिरपीष्यताम्॥'

इति। तत्र यदि व्यक्तिः प्रकाशस्य यथाव्याकृतप्ररोहपटीय-स्त्वादिरूपा न इष्यते, तदा न किंचित्। अपटीयसोऽपि च संस्कारप्रबोधकत्वापत्तिः। पटीयानितिविशेषणानर्थक्यं कीर्तिग्रन्थे। यश्च तत्र विनिश्चयः संवादितः

'तद्दृष्टावेव दृष्टेषु संवित्सामर्थ्यभाविना।'

इत्यादिः, तत्र संविदः सामर्थ्यमसामर्थ्यविलक्षणमस्त्येवेति अलं भूयसा। एतदेव क्रमेण निदर्शयति **'नहि'** इति। अग्नित्वमेव हि धूमहेतुत्वमिति दृष्टे वह्नौ तत् दृष्टमेवेति नालिकेरद्वीपवासिनोऽपि तथा संस्काराधानात् भवेत् स्मरणम्। धूमहेतुरयमिति स्मरणलक्षणकार्याभावे च कार्यैकानुमेयः संस्कार आहित इति कथं भवेत्। एवं संस्कारस्य आधानं विमर्शशून्यो बोधो न करोतीति निदर्श्य प्रबोधनमपि न करोतीति निदर्शयति **'नापि धूमः'** इति। ननु कारणत्वमर्थस्य परोपाधिकत्वेन व्यवहारपरं[3] न साक्षात्कारमनुपाधिकस्वलक्षणप्रकाशनमात्रस्वभावमुपारोढुमलं, तत् कारणत्वं दृष्टमेव नेत्याशङ्क्य निदर्शनान्तरं दर्शयति **'मार्गगमन'** इति। **'नचापि'** इति पूर्वेण संबन्धः। **'स्वात्मनि'** इति आधानाभावस्य उदाहरणम्, **'सहचारि'** इत्यादि प्रबोधनाभावस्य। एवमुपसंहरति **'ततश्च'** इति। विमर्शरूपता-

१ 'व्यर्थः प्रकाशः' ग.। २ 'स्वार्थार्थसं' ख.। ३ 'हार्यं परं' ग. पाठः।

त्मककारणाभावात् तत्कार्यसंस्काराधानप्रबोधनाभिधानकारणाभावे कार्यस्य स्मरणस्य अभावात् तत्कारणानुपलब्धौ सकलनं नाम विकल्पनमेव न भवेत् । न केवल कारणाभावेन, स्वरूपेण अपिच दृष्टसकलनं न उपपद्यते इति दर्शयति **'नच'** इति। दृष्टं हि स्वलक्षणद्वयं । तच्च कथ सकल्येत संकलनाविकल्पस्य तद्विषयत्वात्, अविषयस्य अपिच सकलनेऽतिप्रसङ्गः । तेन

'सकेतस्मरणोपायम्·········· ·····' (प्र०वा०३।१७४) इत्यादि प्रतिपदं दूषितम् । यच्च विनिश्चये तत् न इन्द्रियज्ञानमर्थसयोजनानां कल्पनामाविशति,–इति उपसंहृतम् । तदेव युज्यते यदि जातिगुणक्रियाद्रव्यसयोजनात्मकमेव विकल्पस्य स्वरूपं स्यात्, नच एवमिति उपक्रमते **'नचापि'** इति । ननु भवतु विकल्पस्य स्मरणात्मक रूपान्तरं, तत्तु न पराकर्तव्यं प्रत्यक्षे तस्य अनाशङ्कनीयत्वात् । इदन्तामाहित्यस्पष्टत्वादिसाक्षात्कारधर्मावभासभावितविभ्रमाणामयं गौः शुक्लश्चलति विषाणीति तु विकल्पने सभाव्यते अध्यक्षरूपतेति तदेव विकल्पनं प्रत्यक्षरूपादपकृष्टव्यम्, स्मरणस्य तु तावता विकल्पत्वे को दोषः इत्याशङ्क्य सिद्धान्ती स्वाभिप्रायमाचष्टे **'तच्च'**इत्यादिना । स्मर्यमाणस्य प्रतिभासनविकल्पने क्रमिके, अक्रमिके चेति विकल्पद्वये प्रथमं पराकरोति **'तत्र'** इति । **'नच एवम्'** इति नीलदर्शनं **'ततोऽध्यवसायः'** इति यथा दर्शनानन्तरभावी विकल्पो भाति, न एवं निर्दग्धपितृस्मरणे दग्धपितृदर्शनं, ततोऽस्य विकल्पनमिति रूपं सवेद्यते । तथाभावे हि स्फुटमध्यक्षत्वमेव स्यात्, न स्मरणत्वं स्मरणत्वव्यापकसइतिपरामर्शविरुद्धायमितिपरामर्शप्रसङ्गात्,–इत्याशयः । आद्यं विकल्पं पराकृत्य, अपर स्वदर्शनपातित्वेन योजयति **'अथ'** इति । **'किम्'** इति । अस्ति हि सभवो यत्प्रतिभासनसमकालत्व विकल्पनस्य अविरुद्धमिति । तत् साक्षा-

त्कारोऽपि प्रतिभासनसमकालविकल्पनस्वभावोऽर्थे किं न सह्यते । एतत् परो न मृष्यते **'अथापि'** इति । स्मृतावध्यवसाये वा प्रतिभासमानस्य यदि विकल्पनं स्यात्, तत् चोद्येत नाम प्रतिभासनविकल्पनयोः क्रमाक्रमयोगस्तृतीयप्रकाराभावात् । यावता न प्रतिभासमानस्य अत्र विकल्पनम् । प्रतिभासते हि तत्र स्वात्माकारो वा विज्ञानदृशि असन्वा 'बुद्धितो न बहिः' इति न्यायेन वैभाषिकदृशि । स च न विकल्पयितुं शक्यते, सहि प्रकाश्यते परम् । विकल्प्यते तु यः, अध्यवसीयते स एव । नच प्रतिभासमानोऽध्यवसीयते । अत्र आह **'तत्'** इति । भवता यदिदमवादि, तदेव विचारयितुमिदमेतत्सूत्राभिधेयं वस्तु प्रक्रान्तम् । प्रतिभासमान एव अस्ति विमर्श इति हि वयं ब्रूमः । तत्र कथं परेण नास्ति प्रतिभासमाने विमर्श इतीयत् प्रतिजानानेन जीयते । स्वसंवेदनस्वोपगमविरुद्धा च इयं प्रतिज्ञा,-इति दर्शयति **'स्वाभासः'**[3] इति । स्वप्रतिभासोऽर्थत्वेन अध्यवसीयते इति हि वचः स्वप्रतिभासस्य अध्यवसेयतां ब्रूते । सैवच विकल्पनीयतेति स्वाभास एव विकल्प्य इति प्रतिभासमानस्य विकल्प्यतायां युक्तः क्रमाक्रमविचार इति तात्पर्यम् । **'युक्तिबाधा'** इति

'संकेतस्मरणोपायम्.........।' (प्र० वा० ३।१७४)

इति,

'...........अर्थस्य सामर्थ्येन समुद्भवात् ।'

इत्यादिका । सा तु युक्तिबाधा **'एवम्'** इति उक्तवक्ष्यमाणनीत्या अत्रैव सूत्रे निषिध्यते, सूत्रान्तरेषु च अग्रे निषेत्स्यते । तस्यां च अपसारितायां स्वप्रतिभासस्यैव निर्बाद विकल्प्यत्वे संवेदनमिति प्रतिभासनविमर्शनयोर्न कालभेदः कश्चित् । ननु विमर्शनं शब्द-

१ 'तच्चोद्येत' ख. । २ 'बुद्धिर्नो न' ख. । ३ 'स्वप्रतिभासः' क. ग. ।

योजनया, सा च संकेतस्मरणतः, तदपि संस्कारप्रबोधात्, सोऽपि तादृशदृशः, अतस्तस्यां प्रपितामहकल्पायां कथं विमर्शनं भवेत्,—इत्याशङ्काशमनाय अभिलापयोजनायां संस्कारमहिम्ना सिद्धायां सकेतस्मरणविघ्नं परेणैव अपसार्यमाणं कर्तुं परं प्रति प्रश्नगर्भमिव आह **'नच'** इति। **'संस्कारजत्वेऽपि'** इति सस्कारजन्मतया सर्वमेतत् सिद्धम्, नतु तदुपरि शब्दसकेतस्मरणं द्वितीयं कल्पनीयमिति अपिशब्दः। **'अन्तरा'** इति प्रतिभासनविकल्पनयोर्मध्ये। ननु मध्ये मा भूत्, तत्स्मरणात् पूर्वमेव तु भविष्यति। एतदपि निषेधति **'नच'** इति। सहसोत्पद्यमानतैव अत्र हेतुः। **'अनुभवसंस्कार'** इति येन नीलप्रकाश एव पुनः प्रत्युज्जीवतीवेति। **'विशिष्टशब्द'** इति विकल्पानन्तरमेव हि स्मृतिबीजस्य आधानमिति उक्तम्। **'यतः स्वकारणात्'** इति विकल्पपर्यन्ततादृशदर्शनप्रबोधितात् संस्कारद्वयाख्यात् इत्यर्थः। **'परतः'** इति द्वितीयमित्यर्थः। एतदेवच युक्तम्, अन्यथा तु अनवस्थेति दर्शयति **'संकेतस्मरणमपिच'** इति। अनेन सर्वत्र अभिलापयोजनायां सकेतस्मरणस्यैव कारणतायां विकल्पोऽपि न कश्चिदुत्पद्येतेति दर्शयन् विकल्पोत्पत्तेरेव कारणान्तरजा अपि अस्ति शब्दयोजना,—इत्याह। एवमभिलापयोजनाप्राणेऽपि स्मरणे संकेतस्मरणान्तरविघ्नः परेण अपसारितो येन प्रकारेण, तमेव अनुभवेऽपि अभिलापयोजनात्मनि समीकर्तुमाह **'ततः'** इति भवदुक्तादेव कारणवैशिष्ट्यादित्यर्थः। तत् दर्शयति **'स्वशब्द'** इत्यादिना। **'सोऽपि'** इति अनुभवः। **'तस्य'** इति अर्थस्य। **'अन्यथा वा'** इति जनकत्वैकसामग्रीकत्वादिना, तेन

'.........अर्थस्य सामर्थ्येन समुद्भवात्।'

इति अप्रयोजको हेतुः। नहि अर्थगतात् स्वभावादभिलापन-

त्तामनुभवस्य आचक्ष्महे विषयपक्षे अभिलापभागस्य अस्फुरणात्

'घटोऽयमित्यध्यवसा............ ।' (१।५।२०)

इति भाविन्यायेन, अपि तु मनस्कारमाहात्म्यादिति आकूतशेषः । ननु

'षण्णामनन्तरातीतं विज्ञानं यत्तु तन्मनः ।'

इति समनन्तरबोध एव मनस्कारो यथा नीलबोधस्य पीतबोधः, नच पीतबोधो[1] नीलशब्दाभिलापयोग इत्याशङ्कां शमयति **'इदमेव हि'** इति । इन्द्रियस्य सौगुण्यमिव[2], आलोकस्य अमन्दता इव, विषयस्य योग्यदेशत्वमिव, मनसोऽपि अवहितत्वं नाम यत् कारशब्देन अधिकेन उक्तं, तदपेक्षणीयम् । अवधानं च इदमेव उच्यते—यत् किल दिदृक्षितवस्तुवाचकशब्दसंस्कारप्रबोधकत्वं[3]; तथापि अभिधर्मिकैरेव[4] उक्तं 'मनस्कारश्चित्ताभोग' इति, आभोगश्च विमर्शनोन्मुखत्वमेव उच्यते । **'तैः'** इति बौद्धैः बोधरूपता समनन्तरप्रत्ययात्' इति वदद्भिः । तेन कारणसामग्रीजन्मनः कार्यस्य कारणांशबलादुत्पद्यमानो विशेषो न अपरेण कारणांशान्तरजन्मना विशेषेण विरुध्यते घटस्य इव मृद्रूपतया संनिवेशः । तथाच बोधस्य विमर्शरूपता मनोवधानात्मककारणांशबलोपनतेति न अर्थात्मककारणान्तरजन्मया विषयवत्तया विरुध्यते । विरोधस्य हि सहानवस्थितिरूपस्य कारणं कारणान्तरासंभवो नाम मृत्पिण्डे विशिष्टसंनिवेशाभावात् । तद्विरुद्धश्च कारणान्तरसंभवः इति कारणविरुद्धोपलब्धिः । तदाह **'ततो यथा'** इति । **'जनयति'** इति **'मनस्कारः'** इति संबन्धः । अवधानस्य तु तारतम्येन क्रमिक एव स्फुटभावेन

---

१ 'बोधो' क० । २ 'षाड्गुण्यं' ख० । ३ 'शब्दप्र' क० । 'प्रबोधवत्त्वं' ग० । ४ 'धर्मकैः' क० ।

प्रसर इति प्रथममन्तरङ्गस्वभावे अहमात्मनि रूपे विमर्शबलेन स्वीकारः, तत इदमित्यहंभावसामानाधिकरण्येन सदाशिवभूम्यधिष्ठानं, ततोऽपि इदमित्येव भेदमात्रेण, ततोऽपि घट इत्यादिविशेषेण,—इति । नच अत्र विशेषाणां परिनिष्ठा काचित्, केवलं यत एव प्रमाता विरमति, स एव पाश्चात्त्यो विशेष इति तद्विमर्शत एव विश्रान्तः प्रमाता भवति,—इति तत्पर्यन्तमेव स्मरणम् । तत एव आह 'सूक्ष्मः' इति । उत्तरोत्तरप्रसरापेक्षया पूर्वपूर्वनिष्ठं सौक्ष्म्यं यतः । तदाह तत्रभवान् भर्तृहरिः

'प्रतिसंहृतक्रमान्तः सत्यप्यभेदे समाविष्टक्रमशक्तिः पश्यन्ती। सा अचला च चला प्रतिलब्धासमाधाना च, सविनिविष्टज्ञेयाकारा प्रतिलीनाकारा निराकारा च, परिच्छिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा च सर्वार्थप्रत्यवभासा प्रशान्तप्रत्यवभासा च ।'

इति । अनेन हि अपरिमाणभेदत्वेन अहन्तेदन्तयोर्विचित्रता उक्ता । तथाच मार्गगताविदन्ताविमर्शत एव प्रमातुरुपरम इति तावति एव स्मरणम्, उत्तरोत्तरापेक्षया च पूर्वपूर्वस्य संवर्तितशब्दभावनारूपत्वादविकल्पत्वमुच्यते सत्यपि विमर्शविशेषात्मकविकल्परूपत्वे । आद्यं तु यत्—अहमिति, अहमिदमिति च रूपद्वय, तत्र केवलं शुद्धैव विमर्शरूपता, नतु विकल्पात्मकत्वमिति निर्णायिष्यते अनन्तर एव आह्निके । ननु च समनन्तरप्रत्ययरूपस्य मनसः कुतोऽयमवधानशब्दवाच्यो भवदुपकल्पितोऽभिलापसंस्कारयोग इत्याशङ्क्य आह 'यथा' इति । समनन्तरः पूर्वो जनकक्षणापेक्षया यः क्षणस्तत्र । 'अन्योन्यम्' इति । नहि अत्र अपयरक्रमवेदयवत् कालान्तरप्रतीक्षा सवेद्यते । 'सह' इति, नतु पृथक् । पूर्वं ते इन्द्रियादयो तथाभूता विमर्शजननशक्तमनस्कारात्मसामर्थ्यविहीनाः, पश्चात्तु स्वकारणबलात् तथाभूतसंस्कार-

यन्तः, ननु तथाभूतानां तथाभावे उपादानसहकारिप्रत्ययाः पर्यन्ते वोपसर्पणप्रत्यया हेतुत्वेन सन्ति,–इति दर्शयति **'अथाभिपातेऽपि'** इति । ननु न संवेद्यन्ते तादृंशि कारणानि । अत्र उच्यते **'विश्ववर्तिनाम्'** इति । मेरुरपि हिमवतः स्थितौ घटस्य वा जन्मनि नाकारणमेव तस्मिन् यथादेशकालमासीने तत्स्थित्युत्पादादि निर्विघ्नं यतः । तथाच अभिधर्मः

'स्वतोऽन्ये कारणहेतुः············।' (अ० कोश २।५०) इति कार्यव्यतिरिक्तस्य हेतोः कारणतामवोचत् । अमुनैव आशयेन आर्यप्रज्ञाकरगुप्तो भाविनोऽपि स्वकालावस्थानेन कारणतामवोचत्[1] । एवं परमतमनुभाष्य एनमेव न्यायं स्वपक्षसिद्धये योजयति **'एवमपि तत एव'** इति । एतदेव दृढीकरोति **'अवश्यम्'** इति । प्रत्यक्षं तावत् स्वभावतः परामर्शशून्यं बालस्य । एष हि भवतां पक्षः । पूर्वं यत् संकेतदर्शनं तदाहितो यः संस्कारस्तस्य प्रबोधनेन च स्मृत्यनन्तरं परामर्शक्रियया भवितव्यं, बालस्य तु पूर्वदर्शनाभावात् संस्कार एव नास्ति,–इति परामर्शशून्यमेतदीयं प्रत्यक्षं सर्वम्[2] । नच अपरामृष्टे संकेतोपपत्तिरिति वितत्य दर्शयति **'तथाहि'** इति । **'श्रवणमात्रं दर्शनमात्रम्'** इति परस्परसंपर्कायोग्यशब्दार्थस्वलक्षणद्वयनिष्ठं ज्ञानद्वयमित्यर्थः । **'न चैवम्'** इति प्रसङ्गानन्तरं तद्विपर्ययं दर्शयति । न अपरामर्शकं बालस्य आद्यं वेदनं संकेतग्रहणोत्थापकत्वात्, अपरामर्शकताया विरुद्धं यत् परामर्शकत्वं, तेन व्याप्तं संकेतोत्थापनम्, तस्य हि व्यापकान्तरं शब्दार्थयोः परस्पराध्यासलक्षणेन अनुषङ्गेण ग्रहणम्, तद्विरुद्धं च अननुषक्तग्रहणम् । परामर्शकत्वं[3] तद्व्यापकविरुद्धोपलब्धित्रस्तं संकेतोत्थापनपरामर्शकात् निवृत्तं

---

१ 'नेव' ख० । २ 'त् इति' ख० । ३ 'अपरा' ग० ।

परामर्शकत्वेन व्याप्यते इति विरुद्धव्याप्तोपलब्धिः। आद्यत्वे चापि शब्दान्तरपरामृष्ट एव अपूर्वशब्दस्य संकेतग्रहणं दृष्टं कोकिलपरामृश्ये पिकशब्दस्य इव। तत् पर्यन्तवर्तिना समयानपेक्षिणा संवेदनबलायातेन शब्दनेन विना साकेतिकशब्दयोजनैव न उपपद्येत। सर्वशब्दवाच्यता हि सर्वस्य अर्थस्येति अन्ततो वर्णमात्रात्मना अपि हुंकारांशेन असामयिक एव परामर्शः, पुनर्व्यवहारनियमाय नियतः शब्दः संकेत्यते, तस्यापि प्रमातृसात्त्वे अन्य इति हि संकेतपरमार्थः। **'तस्य'** इति स परामर्शोऽर्थालोचनस्य स्वभाव एव किं न उपेयेत। तथोपगमे हि संकेतस्मरणं दूषणं यथोक्तं

'संकेतस्मरणोपायम्.........।' (प्र०वा० ३।१७४)

इत्यादि

'अर्थोपयोगेऽपि पुनः स्मार्तं शब्दानुयोजनम्।'

इत्यादि च। **'यथा संकेतनम्'** इति पृथग्भावेऽपि हि उपगते दर्शनविकल्पनयोः संवेदनबलायातं तादात्म्यं समर्थनीयम्। यथोक्तं

'विकल्पा हि प्रत्यक्षायन्ते।'

इति

'अभ्रष्टदर्शनसंस्कारस्य।'

इत्यादि च। ततो युक्त्या पर तयोः पृथक्ता वाच्या। तस्यां च संकेतस्मरणमेव विजृम्भते। तद्विज्ञापहस्तने च कृते अबाधितसंवित्सिद्धमवश्याभ्युपगन्तव्यम्, अन्यथा न किंचिदभ्युपगम्यं स्यादिति व्यवहारसिद्धये स्वभावहेतुः। ननु बालस्य पूर्वदर्शनसंस्कारो नास्तीति असिद्धमिति परमतं निषेधति **'बालस्य'**

१ 'शब्देन' क.। २ 'असम' ख.। ३ 'दभ्युपगम्य' ख.।

इत्यादिना । यत् किल बाल्ये स्मर्यते यत्र न तथा अन्तःकरणपाटवं, तत् यौवने न स्मर्यते इति कः श्रद्धधीत, यौवने च तत् स्मरणे स्मर्येत, अन्यथा धात्रीमपि न स्मरेदिति कार्याभावात् तत् नास्तीति । ननु उक्तं प्रत्यक्षसाधन एव इन्द्रियधियः कल्पनाविरहः

'संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना ।
स्थितोऽपि चक्षुपा रूपमीक्षते साक्षजा मतिः ॥
पुनर्विकल्पयन् किंचिदासीन्मे कल्पनेदृशी ।
इति वेत्ति न पूर्वोक्तावस्थायामिन्द्रियाद्गतौ ॥'

इति । सत्यमुक्तं, तत्तु न परामर्शाभावसाधनाय अलम् । तथाहि सर्वचिन्तासंहारे तत्समनन्तरं तावदध्यवसायेन न उत्पत्तव्यं तदुत्पत्तौ स्तिमितेतरयोरविशेषप्रसङ्गात्, अध्यवसायानुत्पत्तौ सा च दशा अस्ति,—इति कथमव्यवहरणीयत्वात् । स्मरणेन व्यवहरिष्यते[1] इति चेत् तदनुपपत्तिं स्वदर्शने तावदाह **'दर्शनस्मरणयोर्हि'** इति । पूर्वं हि स्मरणाह्निके

'स हि पूर्वानुभूतार्थोपलब्धा·········।' (१।४।१)

इत्यादिना इदमुपपादितम्—यत्किल दर्शनस्य स्मरणस्य च यद्येकमन्तर्मुखं परामर्शमयं चित्तत्त्वं, तदा भवति अभिन्नविषयत्वं; न अन्यथा । द्रष्टुश्च संविद्रूपस्य इयमेव द्रष्टृता—यदिदन्ताविमर्शभित्तिस्थानतया प्रतिष्ठापदत्वेन अहंविमर्शमयत्वमिति स्तिमितता अपि विमर्शमयी एवेति परेण अपि एतदवश्याभ्युपेयमित्याह **'वास्तव'** इति । **'प्रमाता'** इति । अहमित्थमिदानीं निर्भासे इतिविकल्पजीवितः सन्तानस्वभावश्च असावित्याह **'तदैक्यं च'** इति । अत[2] एव प्रवहद्रूपत्वेन उदयात् युगपदुभौ विकल्पावे-

१ 'व्यवहारिष्यते' ख. । २ 'अत एव' क. ।

कत्वशरीरप्राणसन्तानेन अवतिष्ठेते । ततोऽपि उक्तं **'तदैक्यं च'** इति । अत्र उपपत्तिं घटयति **'तथाहि'** इति । अनुभवजः संस्कारो विकल्परूपे प्रमातरि विश्राम्यति । उक्तं हि 'नाविमृष्ट स्मृतिबीजमाधत्ते' इति । **'न इष्टम्'** इति । सबन्धसिद्धिरपि

'तत्रापि यः परामर्शविषयो लौकिकस्य सः ।
चिद्भेदाप्रथारूपभेदसारस्य वेदितुः ।
व्यापारोऽनेन रुद्धोऽसौ न विकल्पान्तरं व्रजेत् ।
विकल्पान्तरसस्पर्शे मातृभेदप्रसङ्गतः ॥' (९,१०)

इति । एवंच विकल्पानुदये व्यवहार्यतैव न स्यात् स्तैमित्यस्य । नच समनन्तरमेव विकल्पोदयो युक्तः स्तिमितेतरयोरविशेषप्रसङ्गादिति उक्तम् । ननु तदनन्तरं यद्यपि न विकल्प उदेति, तथापि कालान्तरे स्मरणस्य उत्पत्स्यमानताक्षणे स उदेष्यति । नेत्याह **'नच'** इति । **'तेषाम्'** इति अवास्तवप्रमातृवादिनाम् । प्रमातुर्विकल्पात्मन उत्थानं कस्मात् न युक्तम् । आह **'अन्तर'** इति । स्तिमिततायाः स्मृतेश्च मध्ये भवन् यो विकल्पस्तेन यः स्तैमित्यदर्शनसंस्कारविच्छेदोऽयमिति इदानीन्त्वनकालान्तरभाव्यपि अत एव संस्कारविच्छेदान् हेतोर्नीलानुभवान्तरतद्विकल्पनविच्छिन्नसंस्कारकनिर्विकल्पानुभव इव स्तिमितवानुभवेऽपि न स्यात् स्मरणम् । यदिवा वाक्यद्वयमेतत् । **'अन्तर'** इत्यादिना कालान्तरभाविना अपि विकल्पनसभेदात् स्तिमितत्तैव न स्यादिति उक्तम् । **'अत एव'** इत्यादिना तत्र स्मरणं न भवेत् । दर्शितं च तत् 'पुनर्विकल्पयन्' इति वदता इति आवेदितम् । तदवश्यं स्तैमित्ये विकल्पनरूपेण प्रमात्रा भवितव्य, नच ततः पृथग्भूतेनेति विमर्शस्य स्तिमितदर्शनतादात्म्येनैव स्थितिः

१ 'भेदप्रथा' क. । २ 'तत्' क. ।

सिद्धा । ततश्च प्रत्यक्षसाधनत्वेन प्रत्युत कल्पनातादात्म्यमेव सिध्यति,—इति विरुद्धोऽयं हेतुः । ननु कालान्तरभावी विकल्पो न स्तिमितानुभवं संभेत्तुं प्रभवति, तत् कथं तत्संस्कारो विच्छियेत । समनन्तरवर्ती हि विकल्पो नैरन्तर्यात् पृथगलक्ष्यमाणः कामं निर्विकल्पकसंस्कारं विच्छिन्द्यात् । तत् कालान्तरोदिते विकल्पलक्षणे प्रमातरि न स्तैमित्यस्य बाधः कश्चित्, नापि तत्स्मरणस्य,—इत्याशङ्क्य आह **'विकल्पोऽपिच'** इति चो व्याख्यातशङ्कासूचकः । **'स्मार्तः'** इति गृहीतग्रहणरूपत्वात् सर्वो विकल्पः स्मृतिस्वभाव एव, केवलं कदाचिदनुभवच्छायानुरागादयमिति उद्यन्[1] स इति अमुना वपुषा न अवभासते । स्मरणं[2] नाम दर्शनेन सह विषयैक्ये भवति । विषयैक्यं प्रमातृविश्रान्त्यायत्तम् । सापि सति प्रमातरि । सोऽपि विकल्पमयः । विकल्प एवच इदानीमुत्तिष्ठति,—इति चक्रकम् । स्मृतिरेव स्मार्तः, इति स्वार्थिकः प्रत्ययः । स्वार्थिकत्वेऽपिच प्रकृतितो लिङ्गातिवृत्तिरुपगता शमीर औपयिकमित्यादिवत् । स्मृतिशब्दो वा जातौ, बहुवचनान्तो वा वर्गे । ततो भवे तद्धित इति स्मृतिजातीयत्वं स्मृतिवर्गीणत्वं वा उक्तम् । अथवा शब्दसंकेतस्मृतेरायत्तो विकल्प इति स्मार्तः स स्मृत्यभावे कथं भवेत् । स्मृतिश्च प्रमात्रुत्थानमन्तरेण न युक्तेति विमर्शस्वभावे प्रमातृमयेऽनुभवेऽनभ्युपगम्यमाने न स्यादेव विकल्पः कश्चिदनुभवानन्तरं कालान्तरेऽपि वेति असति परामर्शे न विकल्पः स्मृतेरभावादिति कारणानुपलब्धिः, असति परामर्शे न स्मृतिर्विषयैक्यायोगादिति व्यापकानुपलब्धिः । तदियता ग्रन्थेन स्तैमित्यस्य अभाव[3] एव दर्शितः । ननु अनुभूयते स्तैमित्यस्य स्मृतिरबाधिता, सा तस्मिन्नसति कथं स्यादित्याशङ्क्य

---

१ 'उद्यत्' क. । २ 'णं च' । ३ 'आश्रय' ख. ।

सविमर्शत्वेऽपि स्मैमित्यसमर्थनं पक्षान्तरं गृह्णाति **'संस्कृत'** इति। विमर्शसंभवस्य स्मैमित्यस्य च न कश्चित् विरोधः । तथाहि अवहितमनस्कारमहिम्ना भवन्नपि दृश्यमानपदार्थविषयो विमर्शभागः प्रकाशांशादभिन्नः क्षणमात्रभावी क्षणान्तरविकल्पाभ्यासेन सूढतां न नीत इति न कालान्तरे स्मर्यते । ननु प्रकाशांशोऽपि एवमिति सोऽपि प्रकाशभागगतो विमर्शो न स्मर्यते । नैवम्, प्रकाशभागस्य हि स्वसंविद्विश्रान्तिलक्षणोऽपि विमर्शः सोऽन्तरङ्गत्वात् दृढरूढिमयत्वेन पटीयानेवेति तेन अवश्याधेयः संस्कारस्तदसौ प्रकाशांशनिष्ठ एव स्मर्यते । अर्थभागस्तु प्रमातुर्बहिरङ्ग इति तन्निष्ठो विमर्शः पुनर्विकल्पपरम्पराभ्यस्त एव प्ररोहमभ्येति, न अन्यथेति सर्वं सुस्थम् । **'तदाह'** इति तत् सर्वत्र समर्थितं विमर्शमयत्वमाहेत्यर्थः । अनेन सप्तम्यन्तस्य पूर्वेण सबन्ध इत्याह **'त्वरित'** इति । हेतुपदं क्रियाग्रहणस्य धावनादिसौत्रपदव्याख्यानाय कृतस्य व्यावर्त्यमाह **'ज्ञानं हि'** इति । **'स्वकारणाधीनं'** इति काकाक्षिवत् पूर्वोत्तरविशेषणत्वेन योज्यम् । यदाहुः

> 'घटादौ मीलितं चक्षुः पटं नहि न पश्यति ।

इति ।

> 'स्मरणादभिलापेन.................. ।'

इति । अथ धावनस्य आदिपदस्य च प्रकारार्थस्य व्याख्यानाय यत् शीघ्रपदं, तस्य व्यावर्त्यमाह **'क्रियापि'** इति शयनासनादिका निरनुसन्धानतृणत्रोटनादिका वा । **'संस्कारवशात्'** इति प्रथमेच्छाजनितात् । अत एव तत्र तत्र पुनःपुनर्दर्शनानि न उपयुज्यन्ते । **'इच्छाविमर्शेन'** इति पुनरन्तरालान्तरोपनतम् । **'स्यात्'** इति न असभाव्यमेतदित्यर्थः । अन्यत् देशरूपं

१ 'त्वादादरप्रत्ययमयो नित्यमेव क्षणमात्रभाव्यपि अन्तरङ्गत्वात्' ख. ।

यत् द्रव्यं, आदिपदेन शुक्लपीतादिलक्षणो गुणः; यदिवा अन्य-देशमन्यस्वभावं च यत् द्रव्यादि, तद्विषया । **'तदाह'** इति एतद्वस्तु दृश्यमानशब्देन आहेत्यर्थः । अनुसन्धानशब्दं विवृ-णोति **'तादृगिच्छायोजनेन'** इति लक्षणे तृतीया । इदमिष्ट-सिद्धमिष्यते, इदं च एषणीयमिति हानोपादानेच्छानामनुसन्धा-नेन उपलक्षितं यदेषणीयत्वं, तेन विना **'तत्'** इति हानमुपा-दानं च प्रतिक्षणं यद्, तत् न उपपद्यते इति संबन्धः । वाचनं त्वरितपठनोद्ग्राहणादेरिह उपलक्षणमिति विवृणोति **'त्वरितपा-ठेऽपि'** इति। स्थानं मूर्धताल्वादि, करणं जिह्वाग्रादि, तयोः परस्परं स्पर्शे सति वर्णनिष्पत्तिर्यतः स्पृष्टताद्युदय इति स्पष्टव्यपदम् । ननु सूत्रे क्व एतदस्ति यत् वृत्तौ दर्शितम् । आह **'तदर्थम्'** इति । ननु इयता प्रवन्धेन दर्शनलक्षणस्य लोलीभावेन वर्तमाना इच्छा आत्मभूतेति उपपादितम् । एतच्च अप्रकृतम् । विमर्शोऽस्य आत्मेति हि उपपादनीयम् । सत्यं, तदेव तु इत्थमुक्तमिति दर्श-यति **'इच्छायाश्च'** इति । विमर्शविशेप एव हि इच्छा, तत्र अवश्यं सामान्यरूपेण अपि एषणीयस्पर्शिना तदिदमितिविमर्शेन भवितव्यम्, तस्यां च दशायामिच्छाज्ञानक्रियाशक्तिभिः संवेद-नानन्दमयप्रकाशतादात्म्यवृत्तिभिरवस्थीयते एव । यदुक्तं श्रीपर-मेष्ठिपादैः

'ग्रहपर्वेदसमये................ ।' (१।९)

इत्यादि उपक्रम्य

'................वाचने धावने तथा ।
एतेष्वेव प्रसङ्गेपु सर्वशक्तिविलोलता ॥' (१।११)

इति । दर्शनस्य आत्मा इति विग्रहः । ननु दर्शनस्य आत्मभूता

१ 'द्रहणा' क. ।

इच्छा विमर्शविशेषरूपैवेत्येतदेव न सिद्धम्, दर्शनानन्तरं हि इच्छा। एतत् परिहरति **'नच'** इति। एवं हि सति मन्थर-क्रियातस्त्वरिततायाः को विशेषः। ननु

'सकेतस्मरणोपायम् ·····  ··।' (प्र० वा० ३।१७४)

इति निरूपितयुक्तिक्रमेण विमर्शात्मत्वं दर्शनस्य बाधितमित्या-शङ्का परास्यन् स्मारयति **'उक्तं च'** इति। ननु इच्छातादात्म्य-मेव अस्तु त्वरिततान्यथानुपपत्त्या दर्शनस्य किमनेन तदिदमि-तिविमर्शतादात्म्याङ्गीकारेण। अत्र आह **'नच'** इति। तदयं प्रयोगः—त्वरितधावनवाचनादौ दर्शनपृथग्भूता न इच्छा त्वरित-त्वस्य उपलब्धेः। पृथग्भावे हि अत्वरितत्वमेव क्रमिकस्वरूपभूय-स्त्वापतितकालभेदोपनतं भवेत्,—इति अपृथग्भावेन विरुद्धेन व्याप्तं त्वरितत्वमिति व्यापकविरुद्धोपलब्धिः। ततश्च तत्रैव दर्शनं विमर्शात्मशून्यं न भवति इच्छामयत्वात्। विमर्शशून्यत्वे यदि भवेदिच्छा, मार्गगमनेऽपि तृणादिविषया भवेदिति नियता न स्यात्। अतो नियमान्यथानुपपत्त्या विमर्श इच्छाया व्यापक इति विरुद्धव्याप्तोपलब्धिः। ननु साक्षात्कारि ज्ञानं विषयबला-दुत्पन्नं, नच विषयस्य शब्दः स्वरूपं, नच अन्यबलोत्पन्न ज्ञानम-न्यस्य प्रकाशकं भवति, नच अन्यबलोत्पन्ने ज्ञाने अन्यस्य प्रति-भासो युक्तः। यथोक्तं

'तद्ध्यर्थसामर्थ्येन उत्पद्यमानं तद्रूपमेव अनुकुर्यात्।'

इत्यादि। इन्द्रियबलाच्च उत्पन्नं विज्ञानम्, नच चाक्षुषेण ज्ञानेन शब्दस्य प्रतिभासो युक्तः, नापि शब्दस्य चाक्षुषज्ञानजननसाम-र्थ्यमुपलब्धम्। यदाह **'सतोऽपि वा तदात्मन इन्द्रिया-न्तरज्ञानोत्पत्तावसामर्थ्यात्'** इत्यादि। एतत् परिहरति

१ 'त्वरितत्वोप' ख.। २ 'भासेन युक्त' क.।

**'नच'** इति। **'नच वक्तव्यम्'** इति संबन्धः। यदि हि विषयतावलादिन्द्रियवलाच्च घटे भासमाने पट इव रूपादौ भासमाने शब्दो भासते इति प्रत्यज्ञास्यामहि, तत् सत्यमुपालप्स्यामहि; नतु एवं द्वयमपि उपगतमस्माभिः। वाचको हि अयं शब्दो, नच स्वलक्षणस्य नियताक्षगम्यस्य विषयस्य सतो वाचकत्वमिति भवतु एव। ननु यदि न ऐन्द्रियिको भाति अयं, [कथं] तर्हि अवभाति। आह **'स्वसंविद्विषय'** इति। एतेन इदमपि प्रत्युक्तं यदुक्तमार्येण

'न चायमर्थासंस्पर्शी संवेदनधर्मोऽर्थेषु तन्नियोजनात्।'

इति। नहि अर्थे काचन शब्दयोजना विकल्पसमये संवेद्यते। यदपि इदं सामानाधिकरण्यं–अयं गौरिति, तदपि विमर्शद्वययोजनामात्रलक्षणं विमर्शान्तरमेव, नतु शब्दार्थयोर्बाह्यस्वलक्षणरूपयोरन्योन्यमत्र मेलनमवभाति किंचित्। यस्तु शब्दस्य अर्थे अध्यासो वक्ष्यते, स बोधभूमावेव 'बोधाभेदात् तयोर्वस्तुत' इति वक्ष्यते। ननु यदि स शब्दः स्वलक्षणात्मा न भवति, कस्तर्हि असौ। उच्यते **'सामान्य'** इति। कुतस्त्यः खलु असाविति चेत्, आह **'मनस्कार'** इति। ननु मनस्कारस्य बोधतासंपादनमात्रे व्यापारो यदुच्यते **'समनन्तरप्रत्ययात् बोधरूपता'** इति। रूपादेश्च सविषयतां बोधस्य संपादयितुं सामर्थ्यम्। ततश्च तद्बोधाधिकशब्दनशक्तिविश्राणने कस्य व्यापार इत्याशङ्काशमनमनन्तरागूर्य ब्रूते **'नच'** इति। अयं च अत्र भावः–यथा नीले दृश्यमाने नीलदर्शनं सुखाद्यात्मकं तावत् संवेद्यते, तत्र सविषयता तावत् नीलेन कृता, मनस्कारेण बोधता; सुखरूपता तु केनेति चिन्त्यम्। न तावत् विषयेण न

१ 'त्मा भवति' क.। २ 'तत्सुखा' ख.।

अर्थरूपाः सुखादय इत्युपगमात् । न मनस्कारेण तस्य बोधता-मात्रे सामर्थ्यात् । अथच भाति सा । तदस्यां मनस्कारगतः संस्कारविशेषो भावनात्मा निमित्तत्वेन अभिधातव्यः । यथोक्तं भवद्भिरेव

'... .... ...... विशेषात्प्रीतितापयोः ।

भावनाया विशेषेण... . ... . ... ॥'

इति । तथैव शब्दनरूपत्वेऽपि निर्भासमाने मनस्कारगत एव संस्कारोऽवहितत्वलक्षणविशेषस्वभावो व्यापारो ज्ञातः,—इति किमत्र प्रयासमर्थनीयम् । **'अर्थमात्रस्य'** इति । मात्रपदस्य अयमाशयः—यद्यपि अस्मन्मते अर्थरूपत्वं सुखादीनां, तदापि नियता भावना सहकारित्वेन तन्निर्भासे व्याप्रियते, न शुद्धोऽर्थः । प्रकृतेऽपि अयमेव विधिः । तथाहि—प्रकाशमयत्वादर्थस्य प्रकाशस्य च विमर्शजीवितत्वात्, विमर्शात्मकत्वेऽपि अर्थस्य अप्रतिनियत-शब्दमेलनपरिघटितशब्दनात्मकविमर्शविशेषप्रबोधे संकेतग्रहण-पटीयःस्वाहितमनस्कारसंस्कारसहितः सोऽर्थो व्याप्रियते, न शुद्धः । अप्रतिनियते तु मायीये विमर्शेऽङ्गुलिशिरोनिर्देशप्रत्येद-न्तालक्षणे विशिष्टेकारदकारादिसंभेदमभजमाने मायाशक्तेरेव व्यापारः । अमायीयत्वे तु अहन्तात्मनि सततोदिते न कारण-चिन्ता काचित् । ननु स्वलक्षणस्य अव्यवहार्यत्वात् न संकेत-विषयता, सामान्यं च अपारमार्थिकं न इन्द्रियग्राह्यम् । तत् कथं स्वलक्षणे दृष्टे विशिष्टशब्दनोपपत्तिरित्याशङ्क्य आभासनिकुरुम्बा-त्मकं स्वलक्षणमाभासमात्रं च देशकालाभासासंकुचितं सामान्यं परमार्थसदेव, तदेवच प्रमाणेन विषयीक्रियते प्रत्याभासं प्रमाण-व्यापारात् वक्ष्यमाणादिति हृदये गृहीत्वा निरूपयति **'रमणी-यता'** इति । **'तत्र'** इति नीले दृश्यमाने रमणीयाभासविश्रा-

न्तमेव यथा सुखरूपत्वं सुखजनकरूपत्वं वा, तथा नीलाभास-विश्रान्तं नीलशब्दनरूपत्वं नीलशब्दनजनकत्वं वा भविष्यति,—इति न किंचन वैषम्यम् । तदेतदाभासमात्रविश्रान्तत्वं समर्थयितुमाह **'अन्यदापि'** इति । एतत्प्रकृते योजयति **'तद्वत्'** इति । स्वलक्षणमनावर्तमानं का तत्र भावनेत्याशङ्कायामिदमेव उक्तं **'रमणीयता'** इत्यादि । ननु अपूर्वघनसारपरिमलप्रभृति-स्वलक्षणजन्यं विशिष्टमेव सुखमस्ति, श्रुतपूर्वेऽपि वा गीतादौ पुनः श्रूयमाणे तात्कालिकं यत् सुखं, तत् तात्कालिकेनैव स्वलक्षणेन कर्तव्यम् । अत एव इदमिति । 'तदेव गीतं रमणीयम्' इति रमणीयता या अर्थपक्षे, सा स्वलक्षणस्थानेन । ननु अर्थरूपविकल्प्यतासारे सामान्ये यो निक्षेपोऽध्यासस्तस्य यः पर्यन्तस्तद्विश्रान्तिलक्षणस्तेन प्रापितं श्रोतृहृदये विश्रमितं विशिष्टं तत् सुख-रूपत्वमिति तत्र कथं भावनोपयोगः । भावना हि विकल्पाभ्यावर्तनस्वभावा विकल्पातीते कथं स्वलक्षणे स्यात् । एतदपि संगमयति **'विशिष्ट'** इति । तादृक्षेऽपि भावना तावदवश्यमुपयोगिनी । गीतध्वनौ हि न सृगालो रज्यति मालतीपरिमले वा मधुकर इव हरिण इव वेति । तत्रापि अनेकजन्माभ्यस्तवासनानुबन्धः

'वीतरागजन्मादर्शनात् ।' ( न्या० सू० ३।१।२५ )
'पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य
हर्षभयशोकसंप्रतिपत्तेः ।' ( न्या० सू० ३।१।१९ )

इति । ततस्तद्विपाकानुगुणानामेव अभिव्यक्तिर्वासनानां तासामनादित्वं चाशिषो नित्यत्वात् जातिदेशकालव्यवहितानामपि आनन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्'

१ 'जातहर्ष' ख.।

इति च नयेन अवश्याभ्युपेयो मनस्कारनिष्ठो यस्य प्रबन्धप्रवृत्तकारणमहिमोपनतप्रबोधस्य मनस्कारेण वितीर्णबोधताके अर्थेन दत्तसारूप्ये बोधे सौख्यात्मतां वितरितुं प्रभविष्णुभावः । अर्थरूपा न सुखादय इति च वैः पक्षः, तत्र च

'भावनाया विशेषेण ...... ...... ।'

इत्यस्मिन्नवश्यसमर्थ्ये हेतौ समस्तोऽयमर्थो भवद्भिरपि यत्नेन अवलम्बनीयः । अस्मद्दृशि अपि अर्थपक्षे तावत् यो निक्षेप इद रम्यमिति, तस्य यः पर्यन्तो बुद्धौ सवेदनच्छायाधारिण्या सजातीयार्थगतसुखसंबन्धप्रबुद्धसुखायां च विश्रमस्तेन प्रापितमहङ्कारेण 'अहं सुखी'—इति व्यवहृतं यत्संवेदने सुखरूपत्वं, तद्भावनासुक्त्युक्त्या सहकारित्वेन अपेक्षित एव । एतत् संक्षेपेण निगमयति **'इति युक्त्यैव'** इत्यादिना । तत्र एवं योजना—आन्तरस्य वाचकरूपस्य अभिजल्पात्मत्वेन, ननु विषयरूपतया, अभिलापस्य योजना युक्तैव प्रथमदर्शनलक्षणेऽपि बोधे, ननु अभिलापयोजना, तत आह—संस्कृतं यत् स्वोपादानं समनन्तरप्रत्ययरूपं मनस्काराख्यं तेन उपपादितः स्वसंवेदनसिद्धत्वादनपह्नवनीयः शब्दनं निरूपणं निर्देशनमिति प्रसिद्धो यः प्रमातुर्द्रष्टुर्दर्शनातिरिक्तो व्यापारस्तदाश्रयो तेन अवश्यंभाविना सा बलादेव आनीता । ननु उक्तमत्र परैः

'शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात् ।
अर्थस्य दृष्टाविव तदनिर्देश्यस्य वेदकैम् ॥'

इति । एतत्परिहरति **'अर्थसहकारिसहित'** इति । संस्कृतात् मनस्कारादर्थं सहकारित्वेन अपेक्षमाणात् या अभिलाप-

---

१ 'य' क. । २ 'प्रयात्' क । ३ 'श्यवदेककम्' क ।

योजना चोधे, या च तमनपेक्षमाणात्; सा कथमेकरूपा भवेत्, अर्थे हि सहकारिणि बोधो विषयस्वलक्षणसरूपः सन् सविमर्शः अव्यापृताक्षस्य तदभावे निर्विषय आत्मविषयोऽसद्विषयः सामान्यविषयो वा भवन् सविमर्श इति किमत्र अयुक्तम्। **'असौ'** इति पूर्वोक्ता

'न सोऽस्ति प्रत्ययः················।' (वा० प० १।१२४)

इत्यादिना च दर्शनान्तरेषु अपि शतशः समर्थिता। ननु इदानीमिदमिति सर्वत्र नीलादिबोधे शब्दनं चेत्, तर्हि न किंचित् निर्विकल्पकम्। अस्तु एवं परदृशि, किं नो विघटितम्। ननु भवतामपि कथं निर्विकल्पकता, या अवश्यं समर्थनीया। तदुक्तवन्तो भवन्तः **'तस्यां हि निर्विकल्पकदशायामैश्वरो भावः पशोरपि'** इति। तत्र[3] आह **'अस्माकं तु'** इति। तुः परदर्शनात् विशेषकः। इदमेव अधुनैव, रक्तः सन्, जानामि, करोमि संकुचितस्वरूपः,—इत्येवं नियतिकालरागाशुद्धविद्याकलामायारूपकञ्चुकषट्कपरिवृतप्रकाशस्वभावो यः पुरुषो नाम मायाप्रमाता, तस्य समस्तं—पश्यामीति—प्रभृति बुद्धीन्द्रियविशेषवृत्तिवर्गे यदनुयायि वेद्मीतिवृत्तिरूपं, तत्र यत् करणं सामान्यरूपमशुद्धविद्यातत्त्वं; तच्च न स्वतन्त्रं किंचित्, अपितु परमेश्वरस्यैव शक्तिः, ततस्तस्य यानि विशेषरूपाणि चक्षुरादीनि—रूपं वेद्मि, स्पर्शं वेद्मि—इत्यादिवृत्तिविशेषभाञ्जि, तैरभिव्यक्तो मायाशक्तिसंकोचापसारितोऽपि ईषत् पुनरर्पितः प्रकाशो यस्मिन् नीलादौ वेद्ये तादृशे झटिति दृश्यमाने प्रकाशस्य स्वाभाविकात् परामर्शमयत्वात् यदहमिति विमर्शनं, तद्गोचरीभावं प्राप्ते इदन्तया प्रमातृप्र-

१ 'श्य सम' ख.। २ 'त्वद' क.। ३ 'अत्राह' ख.। ४ 'ईशः पुर········काशो' ख.।

मेयान्तरभावापोहनप्राणया निर्देश्यत्वं विकल्प्यमानत्वं नास्ति, तावति यतो मनसः संबन्धी प्रमातृप्रमेयभेदोत्थापकोऽनुव्यवसायात्मा विकल्पनव्यापारो न उदित इत्यस्मन्मते न असमाञ्जसमेतत्। तत्र च इदन्ता निर्देश्यत्वाभावे नीलादिमात्रविषया भेदप्रथनमात्ररूपा मायासंस्कारस्य तत्रापि भावात्, नतु सर्वथा पूर्णा ईश्वरता। प्रमाणता च (वक्ष्यते) प्रमाणलक्षणे

'इदमेतादृक् ·····················।' (२।३।१)

इत्यादौ, तदा च मायाप्रमातृभावस्य संवृतस्यैव अवस्थानम्, उदिते तु विकल्पनव्यापारे सोऽपावृतो वर्तते इति तत्कृतात् द्वैतारम्भात् प्रमातृप्रमेययोर्भेदकः प्रमेयविश्रान्तः इदमितिनिर्देशो भवन् पूर्वापेक्षया प्रसारितरूपः स्वयंविकल्पनात्मा स्वापेक्षया पूर्वत्र निर्विकल्पकतां व्यवहारयति। संवृता हि शब्दभावना प्रसारितां शब्दभावनां विविधकल्पनारूपामपेक्ष्य तथाभूतवैविध्यकल्पनवैकल्यात् निर्विकल्पेति उच्यते। यदि एवं विकल्प एव इदन्तानिर्देश्यता भवन्मते, स च न वस्तुस्पर्शीति चक्षुरादिग्राह्ये वस्तुनि न इदन्ताविमर्शः स्यात्। तत्र तु अहमितिविमर्शोऽस्तु, नच तेन व्यवहार इदं नीलं दृश्यमानं गृह्णामीति व्यवहारात्। एतत् प्रतिक्षिपति 'स च' इति इदन्तानिर्देशः। विकल्पोऽपि हि न असन्वाय अवस्तुविषय इति निर्णीतं प्राक्

'भ्रान्तित्वे चावसायस्य'···········।' (१।३।५)

इत्यादौ, वक्ष्यते च

'तद्द्वयालम्बना·················।' (२।२।३)

इत्यादौ ॥ १९ ॥

---

१ 'त्यक इति' ख.।

ननु प्रकाशस्य जीवितं विमर्श इति सामान्येन उक्तम्। तच्च कथम्। सूक्ष्मो हि असौ भवतु तथा, यस्तु स्थूलो यत्र स्फुटा विकल्पता, तत्र यदिदं शब्दनं स्थूलं शब्दात्म नीलमिदमिति, तदिति वा; स मायापदोचितो विमर्शो मायाप्रमातृप्रकाशस्य कथं जीवितमिति यः शङ्कते, तस्य मोहं शमयितुं न अस्माकं स्थूलः शब्दोऽर्थवदेव पृथक् प्रकाशते; यो विषयस्वभावः, स प्रकाशजीवितमिति, विमर्श इति वा संमत¹ इतितात्पर्याभिधायि; तथा विमर्शोऽध्यवसायः, सच बुद्धेर्धर्मो नो चितः² प्रकाशरूपाया इति यो मन्यते सांख्यस्तस्य एतद्विपर्ययशमनप्रधानं; तथा शब्दार्थव्यतिरेकेण तावत् न अपरं संवेद्यते, तत् किं विमर्शस्य अन्यत् वपुरिति यस्य अज्ञानं, तस्य संबोधाधायि सूत्रं

**घटोऽयमित्यध्यवसा नामरूपातिरेकिणी।**
**परेशशक्तिरात्मेव भासते नत्विदन्तया॥ २०॥**

नाम '**घट इति**' रूपं पृथुबुध्नोदराकारः; तथा नाम '**अयमिति**' रूपं कठिनमिति विशेषसामान्यविभागेन योज्यम्। अत एव³ वृत्तावितिशब्दद्वयं तदध्यवसेयविषयाध्यवसायनिष्ठं प्रयुक्तम्। तदेवदुभयमपि अध्यवसेयम्, तद्विषयस्तु विमर्शोऽध्यवसायः। ताभ्यामतिरेकी यो न कदाचिदिदन्ताविषयः, अपितु आत्मवद्हमित्येव भासते; योऽध्यवसायो मायाप्रमातृप्रकाशस्य जीवितमिति अस्माकं पक्षः, नतु शब्द एव अध्यवसायः। तेन आद्यं चोद्यं परिहृतम्। परेशस्य परमेश्वरस्यैव प्रकाशवपुषः परमार्थतः सा शक्तिः। स एवंहि पशुप्रमातृरूपतया अध्यवस्यति स्मरति जानातीति, नतु जडस्य बुद्धितत्त्वस्य एतत् प्रातिस्विकं किंचन वपुः। एतच्च उक्तं

---

१ 'स्मर्यते' क.। २ 'न चितः' ख.। ३ 'एव' ख.।

'.........ज्ञानस्मृत्यपोहनशक्तिमान् ।'[1] (१।३।७)

इत्यत्र । तेन द्वितीयोऽपि व्यामोहोऽपसारितः । नामरूपातिरेकी च अध्यवसायः प्रकाशते अहमित्यात्मैव । ततश्च इदन्तानिर्देश्यत्वाभावेऽपि अनपह्नवनीय एव सोऽपीति तृतीयस्य अपि दत्तमुत्तरम् । **'घटोऽयमिति'** इति अध्यवसायशब्देन नामरूपशब्देन च योजनीयम् । वृत्तावपि एवमिति सूत्रार्थः । एनमवतारयति **'इदन्ता'** इति । इदन्तया परामृश्यं यत् भिन्न घट इति नामाध्यासेन वर्तमानं घटरूपं, तदध्यवसेयत्वेन विषयोऽध्यवसायस्य, नतु तस्य स्वयमिदंभावावमृश्यतेति प्रथमं चोद्यं परिहृतम्, **'नतु शुद्ध'** इत्यादिना द्वितीयम् । ननु अध्यवसायस्य इह प्राकृतत्वमागमाधिकारे वक्ष्यते । आह सत्यं, सांख्यवत्तु न तत्रैव विश्रान्तिरस्य परमार्थतः । **'अथवा'** इति **'नतु'** इत्यनेन योज्यम् **'नतु नास्त्येव'** इति । अनेन तृतीयाशङ्कानिरासतात्पर्यं दर्शितम् । नाम तावद्विभागतो व्याचष्टे **'कदाचित्'** इति । एकस्मिन्नपि स्वलक्षणे अस्फुटावभासे सामान्यनाम, तस्मिन्नेव स्फुटावभासे विशेषनामेति अवभासभेदात् परामर्शभेदो व्याख्यातः । अथ प्रमेयभेदादपि असौ भवतीति व्याचष्टे **'अथवा'** इति । स्वलक्षणे प्रत्यक्षविषये विशेषपरामर्शः, आत्मरूपमात्रदर्शनेऽपि हि कश्चिदयमन्यतमो विशेष इति परामर्शेन विशेष एकतमः स्वीकृत एव । प्रत्यक्षविषयत्वाभावे तु यत विकल्पनं,यत् यदावदेतिदर्शनानन्तरसमयविशेषानपेक्षम् । तस्मिन् यदावदाविकल्पने सामान्येन परामर्शः । विशेषोऽपि हि तत्र अवमृश्यमानः परमार्थतः सामान्यात्मैव सपद्यते । ननु घट इति विशेषः किं विकल्पनेनैव स्फुरति, स्फुरतोऽपिवा अस्य अय-

---

१ 'न्यं नाम' ख ।

मिति परमार्थत्वे घटः पट इति विकल्पनयोर्न वैचित्र्यप्रसङ्गः। अत्र उच्यते घट इति विशेषरूपतां सर्वतोनिराकाङ्क्षसंपूर्णवाक्यार्थविकल्पसमुचितामयमिति सामान्यरूपतां पदार्थविकल्पोचितामुपलक्षयति। ननु दर्शनानन्तरभाविनो निश्चयस्य अपि अध्यवसायत्वं

'मायाशक्त्या.......................।' (१।५।१८)

इत्यत्र सूत्रे निर्दिष्टं, तत् स्मरणविकल्पनादेः परामर्शस्य कथं प्रथनमिति इह न विचारितमेव भवेदित्याशङ्क्य आह **'अध्यवसायशब्देन अत्र'** इति। पूर्वसूत्रे गोबलीवर्दवत् विशेषे वृत्तिरस्य। अनेन च अध्यवसायस्य इह सामान्यरूपताव्याख्यानेन उत्तरसूत्रेऽपि शङ्कापरिहारः कृतो भवतीति दर्शयति **'तथा च'** इति। तेनैव परिहारप्रकारेण **'उत्तरत्र एवं वक्ष्यते'** इति संबन्धः, अन्यथा तु निश्चयरूपेऽध्यवसाये आत्मत्वेन भासनमिति उक्ते आत्मनि कालशक्त्यभावात् सक्रमत्वेन प्रतिभासो न युक्त इति तत्रैव तत्समर्थनं कार्यं स्यात्, ननु स्मृत्यादौ तस्य प्रकरणानारूढस्य अक्रमत्वशङ्काया एव अयोगादिति योजना। अथवा सूत्रकारस्य अयमेव अर्थोऽभिप्रेतः, ननु टीकाकारोपक्रममेव इयं व्याख्येत्यर्थः। सर्वनामशब्देन परामर्शशब्देन च विवृतिकारो घटोऽयमित्यस्य भागस्य नामरूपशब्देन[1] अध्यवसाशब्देन च संबन्धमाह। वाच्यवाचकसंवेदनानि घट इति, अयमिति च तुल्यं निर्भासन्ते। यथाह परमगुरुः

'शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरः।' (यो०सू०३।१७)

इति। मीमांसकप्रवरोऽपि

'गौरित्येव हि निर्देशो वाच्येतद्बुद्धिवादिनाम्[2]।'

(श्लो०वा०४।१८२)

---

१ 'नापि अवसायशब्देन च' ख.। २ 'वाप्यतद्बुद्धिवाचिनाम्' ख.।

इति। एतदेव स्फुटयति '**तत्र**' इति निर्भासमानत्वादनपह्नवीये। वाचकः शब्दः श्रोत्रग्राह्यस्वलक्षणरूपतात्यागेन बुद्धिनिर्ग्राह्यं स्फोटरूपं सामान्यरूपं वा शब्दं दर्शयति। '**वाच्यम्**' इति प्रत्यक्षतोचिता स्वलक्षणतां शब्दाच्च वाचकात् पृथग्भावमस्य निरस्यन् बुद्धिग्राह्यमेव निरंशं स्फोटात्मानं सामान्यलक्षणं तद्वन्मात्रं वा रूपं निरूपयति। '**परामर्शश्च**' इति विकल्पनव्यापाररूपः। ननु वाच्यवाचकावेव परामृश्येते, न तृतीयः परामर्शः कश्चित्। अहो स्वोक्तिमेव न चेतयते महाभागः। परामृश्यते इति यदुच्यते, स एव अयं परामर्शस्तृतीयः उक्त एव भवति। तदेतदाह '**नामरूपमध्य एव**'इति। परामर्शाभावे हि तावपरामृष्टौ व्योमकुसुमकल्पौ भवेताम्। ननु अस्तु परामर्शः, स तु प्रकाशते इति कुतश्च न उक्तं त्रितयं प्रकाशते इति। इदन्तया भातीति हि भवत एव अनभिमतम्। आह '**अवभाति च**' इति। परामर्शस्य अनवभासे परामृष्टस्य अपि अपरामृष्टकल्पत्वमिति हि उक्तं, वक्ष्यते च। ननु अवभाति च, नच इदन्तया, तत् तृतीयगत्यभावादहन्तयेति उपनतम्। अहमिति च आत्मैव अयम्। तत् कोऽपरोऽध्यवसायो नामेत्याशङ्क्य आह '**एष च**' इति

'केवल भिन्नसवेद्य ... ।' (१।५।२१)

इति समनन्तरसूत्रे ज्ञेये ज्ञेयेन उपरागो वक्ष्यते, तद्वशात् सक्रमत्वेन यतोऽवभाति, तत आत्मनो निष्क्रमादतिरिक्त इव वस्तुतश्च अनतिरिक्तः, अत एव आत्मनो धर्मः शक्तिरित्येवंव्यवहरणयोग्यः। तदेतदतिरिक्तानतिरिक्तरूपत्वं सूत्रे इवशब्देन अताद्रूप्ये ताद्रूप्याध्यवसायद्योतकेन दर्शितं, वृत्तौ च मयशब्देन। प्रकृतवचने हि मयट्। स यदत्र प्रकृतं तत्प्रत्ययार्थरूपं प्रकृत्यर्थात् भेदेन अभिदधत् प्रकृत्यर्थस्य च प्रकृते प्रत्ययार्थे समेदकतां गम-

यत्नातिरेकानतिरेकौ प्रकाशयति । ततश्च देहादिसंकुचितो योऽहं-भावः, सोऽन्यं संकोचमनङ्गीकुर्वन्नध्यवसाता प्रमाता च उच्यते । तत्पृष्ठ एव तु यत् वहिर्विकल्पनीयेन संकोचान्तरं, तद्युक्तं यदह-मितिरूपं; सोऽध्यवसाय इति तात्पर्यम् । नाम अपि इदन्तया भातीति यदुक्तं, तत् व्याख्यातुं चोद्येन उपक्रमते **'ननु नाम्नोऽपि'** इति । रूपस्य अस्तु विच्छेदावभासनं, नाम्नोऽपितु यदुपगतं, तदसदिति अपिशब्दार्थोऽयं घटो लोहित इति इदन्ताप-रामर्शात् । नाम्नोऽपिच यदि तथा स्यात्, तत् वाचकस्य अपि तस्य इदन्तया अवभासो भवेत् व्यवहारकाले । नच अस्ति असौ । कुम्भोऽयमुज्ज्वल इति हि सामानाधिकरण्यमिदंशब्दसंभेदेन आभाति । नच वाचकस्य लौहित्यं संभवतीति इदन्तावभासे तत्समानाधिकरणधर्मान्तरयोगो व्यापकः, तद्विरुद्धश्च तदयोग इति व्यापकविरुद्धोपलब्ध्या न इदन्तापरामृश्यो वाचकः शब्द-स्तथाभावाभावाच न विच्छिन्नावभासः । विच्छिन्नाभासस्य हि व्यापक इदन्तामर्श इति व्यापकानुपलम्भ इति पूर्वपक्षार्थः । एतत् दूषयति **'तत्र उच्यते'** इति । अयं भावः—इह अयमिद-मिति निर्भासः किं पृथक्तया भवन् प्रमातृविच्छेदावभासस्य व्यापकः संमतो भवतः । नच एवं भ्रमितव्यम्—एवं हि सति अयं शुक्लः पटश्चल इति पटस्यैव इह पृथगिदन्तया परामर्शो, न शुक्लगुणचलनयोस्त्वदुक्तादेव तयोः सामानाधिकरण्याभावात् । ततश्च शुक्लो गुणश्चलनं चेति गुणकर्मणी प्रमातुरविच्छिन्ने स्याताम्, अहमिति च तदा निरभासिष्येताम् । तथाच पटेन इदन्ताकक्ष्यापतितेन अनयोः संबन्धाभावो भिन्नकक्ष्यत्वात् । अथ उच्यते—शुक्लत्वचलनयोरिदमेव रूपं यत् पटादिपारतन्त्र्य-

---

१ 'कश्च शब्दः' ख. ।

प्राणत्वं, तत् पटगतैव इदन्ता तयोरपि स्वेन वपुषा भवत्येव नीगतेव गतिर्नोपरवश्यताहम्[1] पृथगिदन्तापरामर्शो न प्रमातृविच्छेदावभासस्य व्यापकः, अपितु इदन्तापरामर्शमात्रम्। तच्च वाचकेऽपि विद्यते। तथाहि अयं घट इति घटशब्देन वाचकरूपेण एकीकृतस्यैव अध्यासबलात् तदावेशभाजोऽर्थात्मनो य इदन्तापरामर्शः, स तस्य वाचकरूपस्य अपि भवत्येव, अन्यथा घटशब्दस्य अपि उक्तेन नयेन अहमितिनिर्भास इत्यादिः प्रसङ्गः प्रतीतिविरुद्धो भवेत्। तस्मादस्त्येव इदन्तावभास इति पूर्वपक्षहेतू द्वावपि अयुक्तौ। पृथक्परामर्शे तु वाचकरूपता गुणकर्मादिरूपता च प्रत्युत न परामृष्टा भवेत्। वाचकस्य अध्यासेन, गुणकर्मणोश्च अत्यन्तं संसर्गेण वस्तुपारतन्त्र्यमेव प्राणितं यतः। यदि हि अयं घटशब्द इति भवेत्, तत् विशेषस्वभावोऽसौ वाच्यरूप एव परामृष्टः स्यात्, न वाचकः। तत्रापि च तत्सामान्यरूपं स्वरूपशब्दाभिधेयं यत् वाचकत्वेन प्रसिद्धं, तस्य अपि इदन्तापरामर्शस्तत्स्वभेदादपृथग्भावेन भवत्येव यथायं शुक्लो गुण इति गुणो द्रव्यात्मैव परामृष्टो भवति, न गुणात्मा। तत्रापि तु तत्पारतन्त्र्येण प्रतीयमानं गुणसामान्यमेव पारतन्त्र्यप्राणमपृथग्भावेन इदन्तया परामृष्टं भवतीति। इदं शुक्लत्वमियं शुक्लजातिरिति सामान्यस्य अपि द्रव्यीभावे गुणस्य विशेषणतयैव इदंभावः, न प्रधानतया, प्रधानतया तु इदभावे धर्मान्तरसहिष्णुतापादनात् द्रव्यीभाव एव। तथाहि प्रधानत्वेन अर्थक्रियोपयोगेन भेद्यत्वेन धर्मान्तरविशेष्यत्वेन आदिग्रहणसूचितेन वा क्रियावत्त्वादिना तावत् द्रव्यभावः। तच्च एतत् सकलमाभासान्तररूपमिदमितिप्रधानपरामृश्यतया उल्लसति राजपुरुष इत्यादौ

---

१ 'न्तसम' ख।

राजादीनां प्रधानपरामृश्यत्वाभावे द्रव्यत्वोत्थापकानामुक्ताभासानामपरामर्शात्। प्रकृतेऽपि घटोऽयमितिपरामर्शे घटशब्दस्य अर्थे गुणभावगमनात् तदभेदेनैव इदंपरामर्शः, अन्यथा अर्थेऽनध्यस्तः स्वतन्त्र एव स शब्दो विमृष्टो भवेत्, अस्मात् 'अग्नेर्ढक्' इति न्यायेन, नतु अर्थवाचकः। तत्रापि अनेकशब्दद्वयदर्शने जातिव्यक्तिदर्शने वा स्वरूपात्मकवाच्यप्रवणस्यैव वाचकस्य अवभासः। ननु एवं वाचकस्य परामृश्यता अस्ति,—इत्येतदेव सन्देहपतितमिदंशब्देन साक्षादपरामर्शात्। शुक्लः पट इति च शुक्लगुणस्य पूर्वमेव प्रकाशितपरामृष्टस्य विशेषणताकाले न पुनः प्रकाशपरामर्शौ संभवतोऽनेकज्ञानालम्बनतापक्षे। नच कृतसंकेतैः पटशब्दः केवलप्रतीत्यर्हो भवति शुक्लगुणवत् स्वभावत एववा संकेतकालात्प्रभृति वा वाच्याध्यस्तस्यैव तस्य प्रकाशनात्, अत एव अत्र न विशेषणविशेष्यभावः, अपितु अध्यास इति व्यवहारः। ततश्च पृथगिदन्तापरामृश्यत्वाभावे नाम्नः प्रमावृतत्त्वात् भेदेन परामर्शनमिति सन्दिग्धमेव,—इत्याशङ्क्य आह **'स्वनाम्ना तु'** इति। इह प्रकाशितस्य परामर्शाभावे प्रकाशितत्वमेव दुर्घटमिति दर्शितम्। ततश्च यथा बाह्यस्य नीलस्य प्रकाशमानस्य नीलमिति वाचकपरामर्शस्तथा वाचकस्यापि प्रकाशस्य अवश्यभाव्यं विमर्शेन। नच तत्स्वरूपव्यतिरेकेण तत् विजातीयं शब्दान्तरमस्ति सामान्यरूपं वा विशेषरूपं वा येन तत् नीलवाचकविशेषरूपं विमृष्टं भवेत्। नच अनेकशब्दद्वयाश्रयेण तत्सदृशेन शब्दान्तरेण तद्विमर्शोऽनवस्थया नीलपरामर्शस्यैव अभावप्रसङ्गे नीलप्रकाशायोगात्। तस्मात् स्वरूपपरामर्शस्वभाव एव अर्थस्य। यतो नीलशब्दः परामर्शकस्ततः स्वपरपरामर्शकत्वमेव अस्य स्वप्रकाशत्वम्।

१ 'तो घट' ख.।

परामर्शो हि प्रकाशस्य सत्यः स्वभाव इति निवेदितम्। प्रदीपस्य तु दृगावरणकारिच्छायाभिधानधर्मासहिष्णुतात्म भास्वरत्वं स्वात्मनि भवत् घटादावपीति, येनैव च भास्वरभावेन अर्थप्रकाशे अर्थसंवेदनरूपे तस्य उपयोगस्तेनैव स्वात्मनोऽपि संवेदनरूपे प्रकाशे। इयति प्रकाशस्य फलभूमिर्बीजभूमिश्च विमर्शनदीपनरूपा प्रकाश इति उक्ता। ज्ञानं तु स्वात्मना प्रथमानं तयैव प्रथया अर्थमपि प्रथमानं करोति,—इति स्फुटमेव स्वपरप्रकाशकम्। तेन दीपः स्वपरदीपनः, शब्दः स्वपरशब्दनात्मकः, ज्ञानं स्वपरप्रथारूपं, विमर्शस्तु स्वपरविमर्शरूपो न पृथक् गण्यते। ज्ञानस्वभाव एव हि असौ। वाचक तदर्थपरामर्शे परामृश्यते प्रकाशमानत्वादिति स्वभावः। परामर्शाभावे प्रकाशनमेव न भवेत् तत्स्वभावविरुद्धजडत्वप्रसङ्गादिति व्याप्तिसिद्धिर्वाचकस्वरूपेणैव तत्क्रियाकर्मतदन्याभावात् दीपज्ञानवदिति। तदेतदाह **'नहि तेन'** इत्यादिना। **'अनभिधाय'** इति अपरामृश्य। ननु विषयत्वमिन्द्रियगोचरत्वं, तत् धूमस्य इव शब्दस्यापि भवतु। ज्ञापकस्य हि किमेतदपूर्वम्। अत्र आह **'वाच्यीभाव एव'** इति परामृश्यतेत्यर्थः। कुतोऽयं विशेष इति चेदाह **'प्रकृत'** इति। स्वरूपवाच्यत्वनिर्णयप्रकरणादेव विशेष इति यावत्। तथा हि उपक्रान्तम्

'आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च भासते।
अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते॥' (वा०प० १।५०)

इति

'ग्राह्यत्वं ग्रहणत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानाम्··············।' (वा०प० १।५५)

---

१ 'वाचक' ख।

इति च। एतदेव स्फुटयति '**ज्ञानशब्द**' इत्यादिना ग्रन्थेन। ननु अक्षिज्ञाने यथा दीपालोक आलोकान्तरं न अपेक्षते, तथा श्रोत्रज्ञाने शब्दो न शब्दान्तरमपेक्षते, एवैव अनपेक्षा अस्य स्वरूपवाचकता, ननु एवं घटस्य,—इत्याशङ्क्य '**आलोकोऽपि-वा**' इति उक्तम्। नच आलोके स्वरूपवाचकत्वं प्रसिद्धम्। ननु इयता स्वरूपं वाच्यमभिधेयमिति अस्तु, परामृश्यता तु अत्र समर्थनीया प्रमातृतत्त्वात् भेदेनेति शङ्कामुद्धरति '**अभिधा च**' इति। आभिमुख्येन यथारुचिकरणस्वातन्त्र्यपर्यन्ततया शब्दन-स्वभावे प्रयोक्तृप्रतिपत्तृलक्षणे प्रमातरि धारणं प्ररोपणं विश्रमणा परामर्शनमित्येकोऽर्थः। तथाच वक्ष्यते '**स्वरूपाविवेकेनैव हि**' इति। एवं '**स्वनाम्ना तु अस्येव**' इति यदुक्तं, तदुप-संहरति '**तेन अस्येव**' इति। तत्पूर्वक एव अर्थे प्रयोगान्तरं वाचकः स्वरूपं परामृशति अर्थपरामर्शस्वभावत्वात् निश्चयादि-ज्ञानवदिति स्वभावः। निश्चयसंशयादिज्ञानानि हि स्वात्मनि निश्चयरूपाणि एव, अनिश्चये हि संविद्रूपविशेषस्य नियतो व्यवहारो न भवेत्, यदिहि तथापि भवेत् तत्रार्थे निश्चयादिस्वभावत्वात्, तर्हि अस्वप्रकाशे[3] प्रकाशे अर्थप्रकाशमात्रादर्थदृष्टौ सिद्धायाम्

'अप्रत्यक्षोपलम्भस्य.................।'

इति न उच्येत, निश्चयान्तरापेक्षया च निश्चयस्य व्यवहारे अनवस्था स्वप्रकाशत्वाभाव इव संवेदनस्य संवेदनान्तरापेक्षया। ननु अर्थेऽसौ निश्चयः, न स्वात्मनि; तर्हि कथं व्यवहार इति वक्तव्यम्।

'नहि इमाः कल्पना अप्रतिसंविदिताः।'

इति

'सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्य अपरिणामात्।'

इति

---

१ 'अक्ष' ख.। २ 'श्यति' क.। ३ 'शेपि' ख.। २ 'यासप्र' ख.।

'चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः ।'

इत्यादि च शाक्यसाख्यादिभिः कथमुद्धोप्यते । प्रतिसंवेदनं हि प्रमातृरूपताभिमुखभावगमनेन सम्यगध्यवसायपर्यन्तं वेदनं प्रकाशनमुच्यते । पुंप्रकाशादनन्यथाभावतः सत्त्वप्रकाशस्वभावो निश्चयस्वभावश्च अर्थात्मनि इव स्वात्मन्यपीति न निश्चयान्तरोपयोगः। ननु एवम्

'अशक्यसमयो ह्यात्मा '' ............ ।'

इत्यादिनीत्या स्वात्मनि अविकल्पकत्वं यत् विकल्पानामपि उच्यते, तत् कथ भवेत् । अस्मत्सिद्धान्ते तावत्

'स्वभावमवभासस्य........ ... ।' ( १।५।११)

इतिनयेन विमर्शमयत्वं सर्वसंविदामविकल्पत्वेऽपि तथा विमर्शादेवच व्यवहारपरिसमाप्तिः । नहि तत्र अतद्रूपारोपणमर्थ इव अभिशंक्यते, येन विकल्पता स्वात्मनि उपयुज्यते तत्संवेदनातिरिक्तस्य तत्संवेदकस्य आरोपणशङ्कातदपसारणादिव्यापारकारिणोऽसंवेदनात् । भट्टस्तु अध्यवसायापेक्षामेतदर्थमेव प्रामाण्यस्य न इच्छति । तदाह

'सिद्ध सिद्धतया रूपं निरूप्यं न तथा ततः ।'

इति । प्रकाशस्वसंवेदनादेव हि अर्थः प्रकाशितः, संवेदनं च प्रकाशितमिति किमपरेण । अध्यवसायापेक्षप्रामाण्यवादिनां तु इयत्येव अत्र गतिः—यथा अस्ति कूपे जलमिति विकल्पेऽनध्यस्तवस्तुप्रतिभासानन्तरभाविनि रजतमिदमिति विकल्पे वा कोटिद्वयस्पर्शस्य असंवेदनेऽपि साधकबाधकप्रमाणासंभवात् संशयरूपत्वं फलतः पर्यवसितमिति उच्यते, तथा स्वसंवेदने भ्रमत्वाशङ्काया

'नो चेत् भ्रान्तिनिमित्तेन संयुज्येत्र........ ।'

इतिन्यायेन समारोपकसंभवनिबन्धनाया अभावात् फलतो निश्चयरूपतैव । यदाह धर्मोत्तरोपाध्यायः

'नहि अज्ञानमात्रेऽपि सत्तायामिव सन्देहः ।'

इत्यादि । तत्र अपि दर्शने यदि तथाध्यवसायतादात्म्यं स्वसंवेदनस्य न भवेत्, तदनध्यवसितेन प्रकाशमात्रेणैव व्यवहारे सिद्धे किमर्थानुभवोऽपि अध्यवसायमुखावलोकनदैन्यदूयमानतापक्षे निक्षिप्यते । अथ अध्यवसायेन विना न व्यवहार्यः प्रकाशः, स्वसंवेदनप्रकाशोऽपि तर्हि एवं; निश्चयप्रकाशस्य अपि अयमेव पन्थाः । व्यतिरिक्ते च अध्यवसाये अनवस्था, अव्यतिरिक्ते च विमर्शतादात्म्यमेव प्रपतति, विमर्शतादात्म्यादेवच सुखादौ रागादौ संशयादिरूपत्वे च चैत्तवर्गेण पृथङ्निश्चय उपयुज्यते समारोपणादेरसंभवात्, अर्थे तु तस्य संभवादारोपापसारणफलः पृथगस्य असावुपयुज्यते एव सत्यपि अर्थप्रकाशस्य विमर्शमयत्वे । तदुक्तं

'परेपामपि केशादौ भ्रान्ता संविद्बहिर्मुखी ।'

इत्यलं वहुना । तेन अस्त्येव घटशब्देन स्वरूपस्य परामर्शोऽर्थपरामर्शस्वभावत्वात् निश्चयादिसंवेदनवदिति सिद्धम् । ननु घटशब्दस्य स्वरूपं श्रोत्रेन्द्रियेण चेत् गृह्यते, परामृश्येत नाम । प्रकाशस्य हि स्वभावः परामर्शः । स प्रकाशाभावे कथं भवेत् । नच इह श्रवणव्यापारोऽस्ति । एतत्परिहर्तुमाह **'नच'** इति । ननु शुकशारिकादिवक्तृभेदेन भिद्यमानासु घटशब्दव्यक्तिषु समानाकारप्रत्ययबलोपकल्पितमस्तु तावद्वुत्क्षेपणत्वादितुल्यवृत्तान्तं व्यक्तिभागक्रमाक्रमपर्यनुयोगमवधीर्य घटशब्दत्वसामान्यं, तत्तु न वाचकत्वेन लोके प्रसिद्धमित्याशङ्कां शमयति

---

१ 'प्रतपति' ख. । १ 'एवं' ख. ।

**'तत्रैव'** इति सामान्ये विकल्पिते संकेतो व्यवहारकालानुवर्तिनि च। नच एवंभूतस्वलक्षणमिति सामान्य एव सकेतः। ननु एवं स्वनाम्नैव वाचकस्य परामर्शनमिति युक्तं नाम। यत्तु उक्तं वाच्यवाचकस्वरूपे विच्छेदेनैव इदन्तया प्रकाशेते इति, तत् कथं समर्थितं भवेत्। इदन्ता हि विच्छेदः। नच वाचकशब्दस्वरूपं प्रमातृसाराया विमर्शभूमेर्विच्छिन्नं भाति। तदविच्छेदसारत्वादहमाचोचितमेव तदिति आशङ्क्य आह **'तेन च'** इति। वाचकशब्दस्वरूपेण परामृश्यमानेन यतः समानाधिकरणः सन्नर्थाभास आभासेन विमर्शाक्षेपात् प्रत्यवमृश्यमानार्थः, तस्मात्तदपि तथेति इदन्तया प्रतीयते एव। ननु अव्यवधानेन अर्थवदेव साक्षादिदमिति किं न भासते। तदाह **'वाचकस्य'** इति वाचकत्वादेवेत्यर्थः। परामर्शकता हि वाचकत्वम्। सा च प्रमातुरेव निजं वपुरिति वाचकस्य सतो न कदाचिदियं दुर्दशा भवति। ननु एवं प्रमातैव असौ, तत् कथमुच्यते—नाम्नो भेदेनास्ति परामर्श इति। तत्र आह **'वाच्यविशेष'** इति पृथुबुध्नोदराकारादिना विशिष्टेन वाच्येन यदुपाधानमुपरागः, नचापि तत् लाक्षया इव स्फटिकस्य परमार्थतोऽत्र भेदाभावात्; किन्तु मायोपकल्पितभेदभुवि सकेतमहिम्ना समारोपितम्। तेन अध्यारोपेण हेतुना यथा

'भिन्नसंवेद्य ·  ······ · ·············· ।' (१।५।२१)

इति भाविसूत्रनयेन अहमित्यवभासनोचितं प्रमातृतत्त्वं ज्ञानमिति प्रमाणमिति च वेद्योपरक्तमिति कृत्वा करणतया व्यपदिश्यते संवेदनभागेन, तथा वाच्योपरक्तमिति कृत्वा विमर्शांशेन अभिधानं शब्दनमिति करणतया व्यपदिश्यते, नतु कर्मतया पारतन्त्र्येण शुद्धेन। करणस्य हि कर्तृविश्रान्तितयैव स्वातन्त्र्यरूपपार्यन्तिकपरि-

१ 'उपधान' ख.। २ 'शे' ख.।

स्पन्दास्पदत्वादेव अनन्यापेक्षया साधकतमत्वम्। कर्मांशस्पर्शात्तु पारतन्त्र्यमुच्यते करवालस्य हि वीरकरतादात्म्यमिव यदभ्यासादिदमेव तन्मूलं करणत्वम्। सद्यःपरिगृहीतायुधो हि यथा जीयते, न तथा विजयते। तदुक्तं मयैव

'कर्तृकर्मोभयाश्लेषशालिना येन तु क्रियाम्।
कर्ता करोति करणं तत्············॥'

इति। ननु बोधस्य अपि भवति अव्यवधानेन वेद्यता इदं संवेदनमिति, वाचकस्य तु किमेषा गतिरस्ति। अस्तीत्याह **'असाक्षात्'** इति वाचकत्वात् प्रच्यावितस्येत्यर्थः, असाक्षात् पुनर्वाचकस्य अपि वाच्यत्वाविरोधो यदा शिष्य उपदिश्यते—जयति भुवनकारणम्—इत्यत्र जयति इति इदं क्रियावाचकमिति उपदेशाय प्रमातुः प्रमेयतेति संबन्धः। **'वाचकस्यापि'** इति अयं घट इत्यादौ योऽहं वच्मि स एव आत्मा इति

'स्वातन्त्र्यामुक्तमात्मानं············।' (१।५।१६)

इतिनीत्या वाचकत्वविश्रान्तिं पार्यन्तिकीमनुज्झत एवेत्यर्थः। यदा तु वाचकत्वं नैव स्पृश्यते, तदा वास्तवं वाच्यत्वमेवेति दर्शयति **'क्वचित्पुनः'** इति। अध्यापनादौ शिष्यप्रतिपादनेच्छया हेतुभूतया यदा स्वरूपविषयैव प्रयोक्तुः प्रतीतिर्विश्राम्यति, तदा स्वरूप एव शुद्धे वाचकतामस्पृशत्येव। एवमग्निमिति भवति परामर्शः। अत्र स्वरूपमेव विधेयतया प्रतिपाद्यम्, एतस्मादग्नेर्ढगिति तु अनूद्यमानतया अत्र हि ढग्विधेयः। तेन प्रधानगुणभावभेदेन परामर्शोऽस्ति इदन्तया,—इति निदर्शनद्वयेन उक्तम्। ननु अग्निमेतं पठेति वाचकस्यैव तस्य पाठो वाच-

---

१ 'यते इति' ख.। २ 'तद् स्यात्' ख. पाठान्तरम्। ३ 'स्फुटं' ख.। ४ 'कतासंस्पृशत्येव एतमग्नि' ख.। ५ 'भेदने' ख.।

कादेव च अग्नेरेवमिति आशङ्क्य आह 'तदा च' इति। अग्निर्द-हतीत्यत्र यो वाचकः शब्दोऽसुना अग्निशब्देन अनुकरणीयः, स व्यवहारवाक्येऽर्थं प्रति गुणभावापन्न एव उच्यते इति अभिधे-यतया परामृश्यते अयमग्निशब्द इति। अस्यां तु अवस्थायां स एव वाचको गुणभावभूमिकायाः केवलं प्रच्याविव इति परमार्थतो-ऽसौ तन्मय एव। अयं घट इति तु स्फुटशब्दोदीरणेन बाह्येऽर्थे प्रतिपादयितुमिष्टे यथा अयं घटः प्रकाशते इति प्रकाशांशो माया-शक्तिवशात् पृथक्कृतघटपक्षप्रक्षिप्तः सन्निदन्तापदवीमवतीर्ण एव, नच पृथक्तया प्राधान्येन, तथा विमर्शांशोऽपि। तेन बोधस्य इव विमर्शस्य अपि तत्त्व तावदहमिति। ततोऽपि इदन्ता अहंभाव एव लीना ततस्तस्मात् प्रच्युता अपि गुणभावेनैव भवन्ती, परत्र प्राधान्येन अपि भवन्ती गुणभावकक्ष्यां स्पृशन्त्येव ततस्तां कक्ष्यामुज्झन्तीति तात्पर्यम्। तत्र तृतीयैव दशा व्यवहारोपयो-गिनीति तामेव विवत्य विचारयति 'बाह्यार्थे' इत्यादिना। ननु न शुक्लवत् शब्दोऽर्थस्य धर्म इत्याशंक्य दूरविप्रकृष्टं दृष्टान्तमाह 'सिंह' इति। यथैवहि सिंहत्वं माणवके अध्यारोपितं, तथैव वाचकस्वरूपं वाच्ये केवलं वाचकस्य वाच्यानध्यर्स न कथञ्चन स्वरूपं वाच्यस्य वाचकाध्यासवन्ध्य वटुसिंहयोरिव अनाचरितो-पैदानमिति उपचारात् पृथगयमध्यास उक्तः। तत एव न अत्र उपचारः इति भिन्नपरामर्शविषयता आरोप्यमाणारोपस्थानयोः। 'सिंहेऽपि' इति परामृष्टे एव इति संबन्धः। प्रतीतिपरिसमा-प्तावधित्वं यतो नास्ति, तत एव प्रतीतिर्यतो न समाप्यते तावदेव यतो न तया प्रतीत्या प्रत्येतव्यं, अपितु सैव प्रतीतिः स्वात्मनः कृतित्वाय परं मृगयते, ततो हेतोरर्थस्य शुक्लगुणसि-

१ 'द्वारे' ख। २ 'र्थोऽसौ' ख.। ३ 'पादानम्' ख.। ४ 'इव' ख।

ह्यादेर्द्रव्यत्वं न स्यादिति पूर्वेण संबन्धः। अर्थस्य इदमिति यो विमर्शः, स तद्वाचकस्य अपि,–इत्येवं वा परेण अर्थस्येति संबन्धनीयम्। अत्र हेतुमाह **'स्वरूपमभिदधत्'** इति परामृशन् **'अभेदावभासनात्'** इति स्वरूपेण सह अर्थस्य ओतप्रोतीकरणात् **'अभिधत्ते'** इति परामृशति। ननु धूमः परामृश्यमान एव अग्निपरामर्शोपयोगी, नच तत्र अभेदावभासनमस्ति। सत्यं, तत एव तु न धूमो वाचक इति उच्यते, शब्दस्तु अभेदावभासनादेव वाचकः। एतदाह **'स्वरूप'** इति। वाचकपरामर्शस्वरूपादविवेको योऽर्थस्य, तेनैव उपलक्षितं परामर्शनं यत्, तदभिधानक्रिया उच्यते; नतु विवेकेन धूमकृतमिव अग्नेः। एतच्च पूर्वमुक्तमपि शङ्कान्तरशमनाय उपक्षिप्तम्। कश्चिदाचक्षीत–व्युत्पत्तेर्मुखमवलोकयते शब्दार्थव्यवहारः, साच स्वरूपविवेकेनैव भवति, शब्दो वाचको, वाच्यस्तु अर्थ इति। तत् कुतोऽयमविवेक आयातः। अत्र आह **'एवमेवच'** इति। चः शङ्कां द्योतयति। **'एवमेव'** इति अविवेकेनैवेत्यर्थः। **'वृद्धव्यवहारे'** इति निमित्तार्थे सप्तमी। वृद्धव्यवहारस्तावदविवेकेनैव। तन्निमित्ताद्व्युत्पत्तिस्तथैव संकेतनिमित्तिका द्विधा सामानाधिकरण्येन इतरथा वा। पूर्वा भेदनिष्ठैव, उत्तरा तु राहोः शिर इतिवदुपायमात्रमविवेकप्रतिपत्तेः। एतत् दर्शयति **'एतद्धि'** इत्यादिना। विद्वद्व्यवहार एव तर्हि प्रमाणीकार्यः। आह **'विद्वद्भिः'** इति

'लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः।'

इति हि न्यायः। ननु यदा भिन्नाभ्यां पृथगेव असंबद्धं शब्दमर्थं वा अभिदधद्भ्यां वाक्याभ्यां संकेतः, तदा न सामानाधि-

१ 'तः क्रियते तदा' ख.।

करण्यं न वैयधिकरण्यम् । तदाहि असम्बद्धमेव तत् द्वयमुदासीनमेवेत्याशङ्क्य आह '**यदापि**' इति । यदापि एव संकेतः क्रियते, तदापि,–इति उक्तं भवति । कथं संकेतः क्रियते इत्याह '**यदा**' इत्यादि । अत्र हि '**उच्यते**' इत्यन्तेन वाक्येन शब्द एव अवमृष्टः, न अर्थस्य नाम अपि गृहीतम् । '**बोद्धव्यः**' इत्यन्तेन शब्दमस्पृशता अर्थ एव तटस्थोऽवमृष्टः । किं तदुक्तं भवतीत्याह '**अयम्**' इत्यादि । प्रत्यक्षविकल्पावसेयो दृश्यसजातीयोऽसाधारणाभिज्ञानप्रदर्शितो वा अर्थो घटशब्दपरामर्शाभेदेन परप्रतिपादनात्मकव्यवहारनिमित्तं व्यवहर्तव्यः, अन्यथास्ति न परः प्रतिपादयितुं शक्यो लाघवेन । परामर्शाभावे च प्रतिपत्तिरेव कथं परस्य भवेत् । एतत् खलु उक्तं भवति वाक्यद्वयेन अपि । अत्र च वस्तुनि स्वरूपाविवेक एव तत्त्वम् । एतदुक्तं भवति–वाक्यद्वयार्थेऽपि यदा–तदेत्याभ्यां यावदेव एकवाक्यार्थीकृतं, तावदेव यदिदमेतत्परामर्शनं, तदेव अर्थपरामर्शनं त्वया कर्तव्यमिति तात्पर्यार्थोऽवतिष्ठते । ननु यदा धूमो दृश्यते, तदा अग्निः प्रत्येय इति एकवाक्यत्वेऽपि न धूमाग्न्योरभेदस्तद्वदत्रापि,–इति चोद्यं निरस्यति '**अन्यथा**' इति । एवं तात्पर्याभावे केन प्रयोजनप्रकारेण संकेतः क्रियेत । नहि तस्य अन्यत् प्रयोजनमस्ति व्यवहारसिद्धिं मुक्त्वा । सा च अभेदेनैवेति उक्तम् । ननु लौकिकीमभेदप्रतीतिमपहाय संकेतः फलान्तराय भविष्यति । एतत् न सहते '**नहि**' इति । ननु प्रतीतिरनुभवरूपा तावत् सिद्धा, किं तत्र संकेतेन । विकल्पात्मिका अपि यदि शब्दान्तरात्मिका, तत् किं संकेतान्तरेण । अत्र आह '**किन्तु**' इति । सहजोऽपि परामर्शव्यापारो घटादिशब्दनमयः सपाद्यते सिद्धरूपघटशब्दो-

१ 'स्विपर' ख ।

पक्रमेऽपि नैसर्गिको द्रव इव कठिनलवणशकलोपक्रमत्वेऽपि लवणरसद्रवमय इति । ननु धूमाग्निवदस्तु प्रत्याय्यप्रत्यायकभावः, किमनेन स्वरूपाविवेकेनेति यो मुह्येत्, तं प्रतिपत्तिहेतूनां विचित्रतां संवित्सिद्धामुपदर्शयन् प्रत्याययति **'किंचिद्धि'** इत्यादिना **'अवभाति'** इत्यन्तेन । **'स्वसामर्थ्यादेव'** इति योग्यतयैव । **'इन्द्रियम्'** इति । तत् हि बीजादिकमिव अङ्कुरादावप्रतीयमानमेव प्रतीतौ कारणम् । **'तत्र'** इति प्रतीतौ तावत् प्रविशति, अन्यस्यामेव वा तस्यामेव वा,–इति[1] तु वादान्तरम् । तथाहि धूमादग्निरिति वाक्यार्थप्रतीतौ विकल्परूपायां धूमो हेतुभावेन विदितत्रैरूप्यादिलक्षणयोगित्वात् साध्याविनाभावित्वेन अधिकरणतया प्रविष्टो दण्डिप्रतीतौ दण्ड इव संयोगित्वेन एकज्ञानालम्बनविशेषणविशेष्यवादे वा । नहि वाक्यार्थविकल्पो धूममन्तरेण वह्निमात्र एवेति भवति; अध्यवसेयं तु बाह्यमग्निमपेक्ष्य तत्रैव[2] न केवले प्रवृत्तिरिति तदभिप्रायेण तत्प्रतीत्यननुप्रविष्टोऽपि धूमः[3] प्रतीत्यन्तरप्रविष्ट इति उच्यते दण्डी शेते इति प्रतीतौ दण्ड इव भिन्नज्ञानालम्बनविशेषणभावादेव । पुनःशब्दः आभ्यां पक्षलिङ्गाभ्यां विशेषमाह । अर्थग्रहणेन श्रौत्रः प्रत्ययो निराक्रियते, जनकतयैव इन्द्रियवदास्ते, नापि अन्तर्भवत्येव परं धूमवत् । यदिवा एकवाक्यतया धूमादेव शब्दस्य विषय उत्पद्यते, प्रतीतेर्दर्शनानुमानवैलक्षण्येन भवन्त्या अभिधाख्यायास्तादृशः स्वभावो येन अभिधीयमान एव अर्थः शब्दमयः स्वीकृतशब्दनरूपो भवति, ननु शब्दो न भाति चक्षुषि, नापि प्रतीत्यन्तरे भाति धूम इव । नच तस्यामेव प्रतीतावर्थात् पृथग्भूततयैव भाति भूतलादिव घटः, अपितु तेन अर्थेन सार्धं मिलित एव ओतप्रो-

[1] 'इति' ख. । [2] 'तत्रैव केवले' ख. । [3] 'धूम' ख. ।

तीभूत एव । ननु भिन्नाक्षवीक्षणीययोः शब्दार्थयोः क एष वृत्तान्त इत्याशंक्य वाचक इह शब्दः, तस्य च श्रोत्रग्राह्यता, नच काचिदवस्था,—इति दर्शयति **'नहि'** इत्यादिना **'शब्दव्याप्तिः'** इत्यन्तेन । नहि श्रोत्रगोचर एव शब्दः, अपितु प्रत्यवमर्शरूप इति संबन्धः । नियमस्य निषेधे हेतुमाह मध्यग्रन्थेन **'सुश्रूयमाणोऽपि'** इति । **'न तथा'** इति न शब्दः स्यात्, अस्ति च तदापि शब्दव्यवहारः

'उपांशुर्मन्त्रं जपति ·················· ।'

इति शब्दविषयव्यक्तवाक्त्वव्यवहारादिति भावः । तस्य

'चत्वारि वाक् परिमिता ············ ।' (ऋ० १।१६४।४५)

इतिनयेन चतुष्टयीं व्याप्तिं दर्शयितुमाह **'अहमिति'** इति । अनेन परावस्था उक्ता **'सा प्रथमम्'** इत्यादिना पश्यन्तीरूपा परापरावस्था सादाशिवी **'तावतैव'** इति इयतैव तावदसौ प्रतिपादनक्रियायां स्वतन्त्रः प्रतिपाद्यस्य तदानीमेव आसूत्रितत्वात् **'परतस्तु'** इत्यादिना मध्यमाभूमिर्विद्यामायोभयस्पर्शिनी । **'मनोमयत्वेन'** इति अन्तःकरणरूपस्य मायाप्रमातुरुल्लासात् या प्राणनाख्या वृत्तिस्तया क्रमिकत्वेन चञ्चलरूपया प्राणवृत्त्या प्राणोदयेन भेदितौ परस्परतः स्वरूपतश्च यौ विशरारू वाच्यवाचकौ, तयोर्यो मध्यमाभूमाववभासः, स पृथग्भूतग्राह्यग्राहकप्रपञ्चमीषद्रचयति । यतोऽन्तरालवर्ती स प्रपञ्चः महासंविदः पृथग्भूतो बहिश्च स्फुटतामप्राप्तः, तत एव आत्ममात्रविषयः, नतु सर्वप्रमातृसाधारणः, अत्यन्तचञ्चलः, नतु स्थिरः । संकल्पना हि न एकत्र अवतिष्ठते । चञ्चलपवनोपगृहीतं हि संवेदनं न स्थिरं भाति

१ 'स' ख । २ 'वाह्य' ग । ३ 'सर्वैन प्रमातृ' ग ।

'ध्रुवमपि रविबिम्बं यद्वदन्तस्तरङ्गम् ।'

इति । तत एव

'राक्षसे राक्षसं भावम्··············· ।'

इत्यादि निरूपितम् । संसरणं नाम यदाजवञ्जवीभावलक्षणं, तदेव चतुर्दशविधसर्गादिक्रमेण बहुशाखत्वादिना तरुरिव । तस्य मूलभूतोऽसौ प्रपञ्चः । यतोऽन्तरालवर्तिनि एव तस्मिन् रागद्वेषादिलक्षणेन अभिनिवेशाधिशायिना रसेन उपसेक आर्द्रता पृथग्भावलक्षणशुष्कतापासनं क्रियते बहिर्भूमौ हि

'संसृज्यन्ते न भिद्यन्ते············ ।'

इति न्यायेन । ममेदमितिसंबन्धाभावे कौ रागद्वेषौ, इदन्ताया अपि अहंभावप्ररोहे भेदस्य अप्ररूढेर्भेदाधिष्ठानः कथं संबन्ध इति तत्रापि न रागादय इति मध्यमाभूमावेव मायीययोर्ग्राह्यग्राहकयोरुल्लासश्च संबन्धश्चेति तत्रैव रागादयः, मूलं च सेकेन उपबृंहणीयं भवति,—इति दर्शितम् । मूलस्य चञ्चलत्वेन विचित्रः प्ररोहः संसारस्येति उक्तम् । **'अन्तरालवर्तिनम्'** इत्यनेन इदमपि आह—यस्तत एव भूमेरान्तरं रूपं स्पृशति, स विद्यायामेव अभिनिविष्टः । यथोक्तं

'सेयं क्रियात्मिका शक्तिः शिवस्य······ ।' (स्प०का०४८)

इत्युपक्रम्य

'·········स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥'

इति । यस्तु तयैव बहिरनुधावति, स संसारमेव पुष्णाति । यथोक्तं

'·······························पशुवर्तिनी ।

बन्धयित्री································ ॥'

इति । अस्यामेवच मध्यमाभूमावध्यासो वाच्यवाचकयोरिति उप-

पादयति **'तत्र च'** इति वेद्यवेदकप्रपञ्चरचनालक्षणायां मध्यमायाम्। **'प्रमातृभूमिमेव'** इति बुद्धिप्राणलक्षणमायाप्रमातृतादात्म्यम्। **'इदन्तया'** इति ततः प्रमातुर्मायीयादपि पूर्णेन भेदेनेति यावत्। **'नतु'**[1] इति तथाभासेन हि भूतलघटवत् कोऽप्यासार्थो भवेत्। **'तेन'** इति वाचकेन शब्देन मायाप्रमातृभूमिर्न लक्ष्यते मध्यमादशायाम्। वेद्यत्वेन हि तदानीमर्थ एव पृथगवभासते, शब्दस्तु अहंभावमेव शबलयति परं, नतु ततः पृथक् भवति मनागपि ईदृशः सकल्पयिता। अहमिति हि तदानीं मायाप्रमातुरवभासः। तदुक्तं **'स्वरूपावाच्यस्य'**[2] इति अहन्ताशबलीकारकारणभूतो हि असौ वाचकः परामृश्यमान एव अर्थस्य परामर्शकः। वाचकस्वरूपेण च सह यतोऽर्थस्य परामर्शस्ततोऽर्थगतेदन्ता अर्थाध्यस्ते[3] वाचकेऽपि प्रसर्पति इव, नतु साक्षादस्य इदंभावः। अर्थाध्यासादेवच वाचकस्य शान्त्यभिचारादिप्रयोगेऽर्थस्य तथाभावः, अन्यथा तज्जपे प्रतिपाद्यस्य श्रोतुरभावे अङ्गुलिसमयस्य अङ्गुलिसमयान्तरेण निरन्तरेण यथा न शान्त्यादि, तथा अत्रापीति अध्यास एव सुतरां प्रातीतिकमेतदिति न हेतुतामात्रमत्रेति **'स एवच प्रत्यवमर्शः'** इत्यादिना वैखरीदशामपरदशाया एव प्रसरमयीं निरूपयति। एवकारेण आद्यैव दशा एतत्पर्यन्तेति दर्शितम्। **'प्रमातृ'** इत्यादिना **'एव'** इत्यन्तेन मध्यमाभूमेर्मायाप्रमातृरूपाया अत्रापि अवियोगं निरूपयन् पूर्वपूर्वावियुक्ततामुत्तरोत्तरदशायाः प्रदर्शयति। स्थानकरणाभिहरणात्मकं यत् प्रमातुर्व्यापारान्तरं, तद्रूपतां प्राप्य तद्व्यापारसंपादितशब्दरूपतां प्रतिपद्य, श्रोत्रेन्द्रियग्राह्येण भिन्नेन रूपेण निर्भासमाना, भिन्ने च वेद्ये स्वभावाध्यासनतद्वेद्यरूपतां स्पृशन्ती

१ 'ननु' क.। २ 'पवाच्य' क.। ३ 'व्यस्ते' ग.।

सुपरिस्फुटाकारा भवति। वैखरी हि व्यापाररूपा च कार्यरूपा च। सा तस्यामपि दशायां मायाप्रमातुर्देहभूमिकामध्यासीना अत्यन्तं भेदेन नीलादिवेद्यवत् निर्भासते इति तदवधिरेव शब्दव्याप्ति-रुक्ता, न नीलाद्यवधिः । नीलादेरपितु परमार्थतः शब्दव्या-प्तिरेके । यथाहुः परमेष्ठिपादाः

'घटादित्वविघृत्तासौ गृह्यते चक्षुरादिना ।' (शि०दृ०२।८)

इति । ननु श्रोत्रग्राह्य एव शब्दः, मध्यमादिषु तु शब्दत्वं स्वम-नीषिकामात्रमिति काणादस्य मोहं पारमेश्वरागमव्यवहारप्रदर्शनेन निराकरोति '**अत एव**' इति। यत एतावती शब्दव्याप्तिस्ततः परादिरूपतया जप उक्तः

'जीवन्मुक्तौ परो देवि मुक्तौ सूत्रितभेदकः ।
मध्यमो भोगमोक्षाख्य उपांशुः सिद्धिदायकः ॥
वाचिको भूतविषजित्सशब्दस्त्वाभिचारिकः ।
इति षोढा जपश्चास्य मन्त्राः सर्वार्थसाधकाः ॥'

इति। अन्यथा परादिरूपतया कथं जपः स्यात्। जपो हि शब्दा-वर्तनस्वभाव एव उच्यते, ननु ध्यानचिन्तनाद्यावर्तनेन जपव्य-वहारः । 'जप व्यक्तायां वाचि' इति हि स्मरन्ति । ननु आगमान्तरेण

'चितिः प्रत्यवमर्शात्मा.....................।' (१।५।१३)

इत्यत्र सूत्रे पठितेन श्रीकालपादीयेन अध्यस्यैव शब्दताव्यवहारो दर्शित इति शङ्कामपास्यति '**केवलम्**' इति । लोकप्रसिद्ध्य-पेक्षोऽयं व्यवहारस्तत एव प्रोक्तग्रहणं तत्र । वस्तुतो हि

'सादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम् ।' (स्व० )

इत्युपक्रान्तं यत्, तस्यैव अनेन व्याप्तिरुक्ता। अत एव मयट्प्र-

१ च कार्यरूपा च' इति ख. नास्ति । २ 'परम' ख. । १ 'क्तौ' क. ।

त्ययोपादानं तत्र उपपन्नम् । ननु यदि शब्दावर्तनं जपस्तदविच्छिन्ने कालभेदमस्पृशति परवाग्रूपे कथं जपव्यवहारः । आवर्तनस्य हि विच्छिद्य विच्छिद्य यदुदीरणं, तदेव रूपम् । **'परावस्थायाम्'** इति सकृद्विभातत्ववत् सकृदावर्तनमेव तत्र जप इति यावत्, आवर्तनव्यवहारश्च तत्र उदयमात्रे । सकृच्छब्देन तु *एकवारवाचिना सदार्थपर्यायेण वा विच्छेदशङ्का निवारिता,* यथोक्तं प्राक् **'स्वरसोदिता'** इति । यत्तु

'भूयो भूयः परे भावे भावना भाव्यते हि या ।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः ॥'

( वि० भै० १४५ )

इति परादशायामपि आवर्तनव्यवहारः, स स्पृष्टायामस्यां पश्यन्तीमध्यमादर्शपतिताया दशायाम् । एवं सकेतकाले शब्दननिष्ठमेव सकेतनमिति स्वरूपाविवेकेन अर्थपरामर्शोऽभिधानमिति व्युत्पाद्य व्यवहारकालेऽपि एषैव वर्तनी यन्मुखप्रेक्षी सकेत इति निदर्शयति **'व्यवहारकाले च'** इति । चोऽप्यर्थे । न केवलं सकेतमूलाया व्युत्पत्तावयं प्रकारो यावद्व्यवहारमूलायामपि,— इति अनेन वितत्य तदेव विभज्य उच्यते यत्तदुक्तं **'एवमेव च वृद्धव्यवहार** इति । **'श्रोतापि'** इति न केवलं वक्ता तथाभूतशब्दनमय इत्यर्थः । **'तथैव'** इति वक्तृवदेव तत्र अनूनाधिकम् । तदेव विमर्शनमिति वदन् घटमानयेत्यतो वक्ष्यमाणात् शब्दनात् वैलक्षण्यमिह दर्शयति । स च अयं व्यवहारो न सकेतानुपजीवीति दर्शयति **'शब्दन एव'** इति । ननु स्वीयं परकीयं च शब्दनमेकीकर्तव्यं सकेतेन, तच्च न अप्रमितं तथा सुकरमित्यत आह **'तदपि'** इति शब्दनं स्वगतं स्वसंवेदनात्, परगतं तु अनुमानात्, तदनुमाने च कर्तव्ये शब्द एव स्थूलः स्थूल-

दृष्ट्या कार्यहेतुर्वस्तुवृत्ते, नतु स्वभावहेतुरेव । शब्दनावस्थैव हि तत्पर्यन्ता । आनुमानिकत्वं तावत् परैरपि उपगतं, परमार्थतस्तु व्याप्तिस्मरणादिसंवेदनविघ्नाभावात् शब्दप्रमाणरूपतयैव शब्दः स्वरूपमिव नीलादिमिव च प्रयोक्तृगतं शब्दनात्मकं परामर्शमपि स्वपरामर्शाभेदेनैव परामृशन्, परस्य तत्स्वरूपपरामर्शमयतामिव तन्नीलाद्यर्थपरामर्शमयतामिव च तत्प्रयोक्तृपरामर्शपरामर्शनमयतामपि विधत्ते । ननु एवं व्यवहारो मयद्शब्दादुच्यते, स च तदुक्तस्वरूपसंविधानातिरिक्तः कः । न कश्चिदपरोऽसाविति दर्शयति '**शब्दनस्यैवच**' इति । मदीयं परामर्शमयं परामृशति, एतदीयं च अहमित्येष एव परस्परव्याप्तिलक्षणो व्यवहारः । व्यवेति कर्मव्यतिहारमाह, हरतिः प्राप्तिमिति हि उक्तं प्राक् । ननु घटमानयेति वक्तुर्यादृशं दर्शनं, न तादृशं प्रतिपाद्यस्य । क एवमाह । तादृशमेव हि तत्, तथाहि प्रैषस्तस्याभिप्रेत इति । प्रेषयाम्यहमिममिति हि परामर्शे वक्तुः श्रोतुश्च प्रैषोऽभिप्रेत एव स्फुरति प्रेषितोऽहमिति । केवलं कर्तृकर्मभावोऽत्र प्रतिपादकप्रतिपाद्यत्ववशादेव विजृम्भते, सहि प्रैषस्य प्रतिपादकत्वादेव कर्ता, इतरस्तु प्रतिपाद्यत्वादेव कर्म तथाभिसन्धानेनैव शब्दप्रयोगात् । यस्तु तटस्थः, तत्र न असौ प्रतिपाद्य इति तस्य न स्वात्मनि प्रेष्यमाणप्रतिपत्तिः, अपितु विदितसमयत्वात् सोऽपि तन्निष्ठमेव प्रैषं प्रतिपद्यते अयमनेन प्रेषित इतिप्रतिपत्तेः, अयमेव अधिकार्यनधिकारिणोः प्रतिपत्तौ विशेषः । घटस्तिष्ठतीत्यत्र अपि मामयं प्रतिपादयति, अहममुं प्रतिपादयामीति अस्ति एवं संक्रमणे परामर्शवैचित्र्यम् । उपजीव्यो हि परामर्शः स्वतन्त्रत्वेन कर्ता निर्भासते, तदनुजीवी तु तत्पारतन्त्र्यादेव कर्मभावमेतीत्येवं

१'एतदु' ग. । २ 'राप्राप्ति' क. । ३'मभ्येती' ख. ।

बिम्बप्रतिबिम्बवत् वैपरीत्यं, संक्रमणस्य केवलं घटस्तिष्ठतीत्यत्र कर्तृकर्मतावैचित्र्यं शब्देन पदरूपेण केनापि न स्पृष्टं, प्रकरणादिसहायवाक्यगम्यता तु तस्य केन अपसारिता तत्सन्निधौ हि तत्प्रतीतेः। यदि अन्यथासिद्धत्वं क्रियते, तत् वाक्यार्थोऽपि न कश्चित भवेत् वाक्यगम्यः। तेन वाक्यसंनिधौ यावदव्यवधिना नियमेन प्रतीयते, तावतो वाक्यार्थत्वमनवद्यमेव। अनेनैव आशयेन कर्तव्यत्वविश्रान्त प्रतिपत्तिकर्तव्यताबलात् सर्वं वाक्यमिति केचन मन्यन्ते। अथवा किं नः एतेन। तदस्तु शब्देन अपरिगृहीतम्, अनुमानमात्रात् तु अवगम्यते। सर्वथा तु प्रैषः शब्देन पदात्मना न स्पृष्ट इति विशेषः। तं पुनःशब्देन आह। पुनःशब्देन च वक्तृसजातीय एव प्रथमपरामर्शः चरमं तु स्वात्मनि प्रतिपाद्यतां परामृशत एव वक्तृविपरीतपरामर्शान्तरोदयः। प्रैषस्य हि ईदृश एव स्वभावो—यत् वक्तरि प्रेषकता, प्रतिपाद्ये तु प्रेष्यता। परमुखेन अपि व्यवहारे मूलभूत एव स्वतन्त्रः, अन्यस्तु तदनुकारी लेख इव वस्तुतो न वक्तैव। स तु स्वरूपस्य केवलं वक्ता लेखवदेव, स्वरूपात्तु प्रतिपन्नात् प्रैषप्रतिपत्तौ प्रतिपादकप्रतिपाद्यत्वावगतिः। ननु प्रैषो गम्यमान इति प्रक्रियालकारस्तु कर्तृकर्मान्यतरनिष्ठसंख्यामात्रशब्दनरूपः, तत् कथं प्रैषोऽपि लकारसशब्दित इति उक्तम्। उच्यते—इह अनादिव्यवहारपरम्परानिरूढेर्यतो यावदुत्पद्यते शब्दन शब्दात्, तावत् सोऽभिधेय इति तावत् परमार्थः। प्रैषेऽपिच भवति अतः परामर्श इति सोऽपि किं न वाच्यः। योग्यता वा समयो वा किं गुणप्रधानतावैचित्र्यावरुद्धेन एकत्र अपि अर्थे प्रतिह-

---

१ 'णे' क। २ 'स्पृष्ट' वा 'स्पृष्टं' ख। ३ 'मनपोद्यमेव' ख पाठान्तरम्। ४ 'पत्ति' ग।

न्यते येन शब्दस्य भारः कश्चित् भवेत्। ततश्च यथोन्मिषितदृशो यावत् योग्यदेशगं योग्यं वस्तु, तावत् समस्तविषयनिर्भासं चाक्षुषं विज्ञानम्, नच अस्य भारः कश्चित्; तथा शब्दस्यापीति शेषोऽपि परमार्थतस्तेनैव संशब्दितः संख्यादिवदेव। प्रक्रियास्तु अनियताकाराः। कचिद्धि धातुः साधने दिशि पुरुषे चिति तदाख्यातमिति कर्त्रादि धातुवाच्यमिति अभ्युपगतम्। प्रतिपादकशब्दनिष्ठाः किल यथारुचि चर्च्यन्तां प्रक्रियाः, कः खलु व्यवहारनिष्ठे तु आख्येये शब्दे विशेष इति अलमवान्तरेण भूयसा। **'संक्रमण'** इति बिम्बप्रतिबिम्बयोर्हि दृष्टमेतत् वैपरीत्यमिति भावः। **'अनुरूपेण'** इति शेषसामर्थ्यायातेनेति यावत्। एवं व्यवहारमूलाया व्युत्पत्तेस्तत्त्वमभिधातुं व्यवहारपरमार्थं विचार्य संकेतमूलया अपि व्युत्पत्त्या व्यवहारमूलयैव युक्तं भवितुमिति प्रत्यावृत्त्योपसंहारमुखेन आह **'तदेवम्'** इति **'भवति'** इति **'प्रतीतिः'** इति संबन्धः। **'व्यवहारोपयोगिनी'** इति व्युत्पत्तिरिति मन्तव्यम्। यथाहि अङ्गुलीसंवर्तनादि संकेतबलात् दानादिविषयतामात्रेण व्यवहारोपयोगि, न तथा शब्दस्वरूपं तस्य प्रतीतौ परामर्शनभागे परित्यक्तसिद्धस्वभावतया साध्यमानत्वेन शब्दनरूपतयानुप्रवेशात्। अङ्गुलीसमयेऽपि व्युत्पत्तिव्यवहारकालयोः शब्दनरूपतैव विजृम्भते। तत एव न सामयिकत्वमात्रं शब्दनस्य। तथाभावेऽपि न सामयिके अन्यस्मिंस्तदुपयोगो भवेत्। नहि अङ्गुलिनिवेशो तज्जातीयमपरं नियमेन उपयोगि, न सामयिकं शब्दनं समयान्तरे प्रवेशादिति सामयिकत्वस्य व्याप्तौ तदननुप्रवेशः एकेनैव चरितेऽर्थे-

१ 'भवति एतश्च' क.। २ 'उपगतम्' क.। ३ 'व्याप्ततद' क.।
४ 'नच' क.।

ऽन्यानुपयोगात्, तद्विरुद्धस्य च इयमुपलब्धिः। तत एव शब्दनस्य प्रतीतिव्यापारता उक्ता। तेन परामर्शावसरे शब्दः शब्दनरूपतां गतोऽर्थमपि बहिष्प्रकाशमान घट इति तन्मयीकुर्वन्नात्मानं वस्तुमयमिव वस्तु च स्वात्ममयमिव संपादयति, तदापिच बहिष्प्रकाशभूमौ तयोर्भेदादेव अध्यासव्यवहारः, अन्यथा आत्यन्तिके ऐक्ये कथं तद्व्यवहारः। अत एव भिन्नेन्द्रियग्राह्यत्वादिना अध्यासवादं बाधते इति दर्शयति 'ननु' इति। तथेदमनवकाशं—न अर्थे शब्दाः सन्ति—इत्यादि। ननु च विशेषणविशेष्ययोरपि एकं शब्दनमस्ति शब्दार्थयोरिव, ततस्तत्र अपि अध्यासव्यवहारः स्यात् यथोक्तरूपः, नच असौ सवेद्यते इति शङ्कां शमयति 'दण्डीत्यत्र' इति। एवं प्रक्रियाक्रमेण तावदेकशब्दननिष्ठत्वं तयोर्नास्तीति उपपाद्य पारमार्थिकमपि रूपमाह 'एक एवच' इति। तदा च भेदावस्थाया अभावः। एकमेकेन शब्दनेन यदि शब्दितं, तदा किं क अध्यस्तं स्यात्। ननु वस्तुतस्तावत् दण्डपुरुषौ भिन्नावेव, वस्तुवृत्तं न अत्र उपयोगि, किन्तु अवभासनमत्र विजृम्भते। तच्च भेदेन नास्ति दण्डीत्यस्यामेकघनविकल्पप्रतीतौ वाक्यार्थप्रतीतिस्थानीयायाम्। वस्तुवृत्तानुजीवी च न अध्यासव्यवहारः। एतत् दर्शयति 'एवमेवच' इति भेदेन प्रकाशमानाविवेत्येवम्। 'एतत्' इति 'अन्योन्याध्यस्तावुच्येते' इत्येवंवाक्यार्थरूपं वस्तु। ननु एवं प्रकाशो भेदमादर्शयन् वैयधिकरण्यं शब्दार्थयोरावेदयते, परामर्शस्तु तद्वैपरीत्येन सामानाधिकरण्यम्। तत्र व्यवहारे किं समुचिततरमित्याशङ्क्य आह 'सामानाधिकरण्यम्' इति वैखरीप्रसरे। 'अभेदश्च' इति मध्यमाभूमौ। प्रकाशबलोपनते

---

१ 'न यदि' ख.। २ 'इय' ग.।

तु भेदे वैयधिकरण्यं न आद्रियते । अत्र हेतुमाह '**शब्दन**' इति । उक्तं हि

'स्वभावमवभास.................. ।' ( १।५।१० )

इति, वक्ष्यते च

'दूरान्तिकतयार्थानाम्.......... ।' ( २।३।१० )

इत्यादि । तदयं वाचकस्वरूपाध्यास एव वाच्यत्वं, तदध्यासश्च वाचकत्वमुत्थापयति,—इति व्यवहार्यं वस्तु नामरूपलक्षणमनेवंरूपतया न कदाचिदास्ते,—इति एकान्त एषः । ततश्च अयं प्रयोगः—वाच्यवाचकेन परस्पराध्यस्ते व्यवहारे परस्परविशेषतो ह्लादतापाद्यर्थक्रिया योग्यत्वादिति स्वभावः । शुक्लपटयोर्हि परस्परोपरागादर्थक्रियाभेदः । तद्वत् तरुणीति आकर्ण्यमानमेव हृद्यमर्थोपरागात्, स्त्री दृश्यमानापि हृद्या इयमसौ रमणीत्युपरागादिति । ननु पश्यन्तीभूमौ कीदृगध्यासः । न कश्चित् तत्रेति निरूपयति '**अत एव**' इति यतो विभागेन अवभासते[२]ऽध्यासव्यवहारस्तत इत्यर्थः । '**आस्तां तावत्**' इति उत्तरत्र तु एतत्प्रपञ्चयिष्यते

'स्वविश्रान्त्युपरोधाय.............. ।' ( ४।१।१० )

इत्याद्युद्देशेषु । प्रकृतमुपसंहरति '**स्थितमेव तु**' इति । भेदेन प्रमातुः पृथग्भावेन परामर्शकाले शब्दः प्रकाशते, तस्य च स्वरूपमेव अनुरूपमुचितमिदन्तावमर्शनम् । नच तत्र व्युत्पत्तिरुपयुज्यते । सा हि व्यभिचारशङ्कां शमयितुम् । नच सा स्वरूपं प्रति संभवति । सा हि विशिष्टव्यवहारसिद्धये शक्तिनियमप्रख्यापनकृतात् नियमव्यावर्तनात् । नच स्वरूपस्य तत् संभवतीति । तस्य अन्तरङ्गत्वे व्युत्पत्तेश्च अनुपयोगः । ननु स्वरूपेण वाच्येन क-

१ 'हृद्यर्थोप' क. ।  २ 'सतं' ख. ।

व्यवहारः । आह **'अग्निमिमम्'** इति । **'तदेवच'** इति स्वरूपद्वारेण यदिदन्तायमर्शनम् । ननु एवमग्निमाहरेति स्वरूपस्य आहरण कस्मात् न भवति अर्थस्य इवेत्याशक्य आह **'केवलम्'** इति । **'शीतमपनेष्यामः'** इति हि प्रकरणादिबलादर्थक्रियाविशेष प्रति अर्थिता ज्ञाता, स च अर्थेनैव साध्यः, न शब्दस्वरूपेण, यत्तु तेनैव साध्यस्तत्र स्वरूपमेव वाच्यत्वेन स्फुटमुपलक्ष्यते–**'अग्नेर्ढक्'** **'अग्निं पठ'** इति । यद्यपि च 'अग्निमाहर' इत्यत्रापि तत्स्वरूपा[ध्य]स्तस्य यदाहरणं, तत्स्वरूपस्य अध्याहरणमेव, इत्थमेवच तदाहरणं युक्तम्, न स्वातन्त्र्येण वाचकस्य तदाहरणं भवेदिति न्यायात्, तथापि वस्तुभागमेव लोकः प्रधानत्वेन परामृष्टमभिमन्यते तत एव अर्थक्रियालाभादित्याशयेन **'अनुपलक्षणात्'** इति उक्तम् । एवम् **'अग्नेर्ढक्'** इत्यत्र अपि स्वरूपस्य यद्यपि वाच्याध्यस्तस्यैव प्रकाशः, अतश्च एवं यद्वावकादेव अर्थतोऽग्निशब्दात् प्रत्ययस्तथापि शब्दभागनिष्ठत्वेनैवं पौर्वापर्यस्य निर्वाहात् स्वरूपवाच्यतैव उच्यते । वस्तुतो हि शब्दार्थावसन्तावियोगेनैव प्रतीतिपथे भासेते, ततोऽयमध्यासः । स्वरूपाभिधायित्वं च प्रतीतिसिद्धमेव, व्यामूढैस्तु न व्यवह्रियते इति तदर्थं प्रमाणमत्र निरूपितमिति व्यामोहपदस्य आशयः । **'अध्यवसा'** इत्यङ्न्तः स्त्रियाम् ॥ २० ॥

ननु एवं परामर्शोपजीवितानि वेदनानि, स च अहमित्येव विश्रान्तिसतत्त्वो वेद्यमुखमनध्यासीनो वेद्यस्पर्शनोचिताभ्यां देशकालाभ्यां न अवष्टभ्यते,–इति समस्तं संवेदनमक्रममेव प्रसक्तम्, एकं च । भाति च सवेदने क्रमः स्वांशापेक्षया सवेदनान्तरा-

१ 'अर्थनत' ख । २ 'विष्ठत्वेनैव' ख । ३ 'परामर्शनजीवितानि' क । ४ 'मनध्यासीनवेद्य' ख । ५ 'क्रमस्वांशापेक्षया सवेदनान्तरापेक्षया' ख क. ।

पेक्षया च क्रमाभावेन संवेदनव्यवहारादर्शनात्[1] । अंत आत्मरूपतावभासने व्यापको योऽहंभावभासनकृतोऽक्रमत्वैक्ययोगस्तद्विरुद्धमिह संवेदनराशौ सक्रमत्वानेकत्वमुपलभ्यते

' ............ ज्ञानस्मृत्यपोहनशक्तिमान् ।' (१।३।७)

इति च वदता सिद्धान्तिनापि उपगम्यते इति । न आत्मरूपतावभासनमध्यवसायस्य उपपद्यते इति यो मन्येत, तं बोधयितुं सूत्रोक्त इवार्थ एव अभिव्यज्यते सूत्रान्तरेण

केवलं भिन्नसंवेद्यदेशकालानुरोधतः ।
ज्ञानस्मृत्यवसायादि सक्रमं प्रतिभासते ॥ २१ ॥

एतद्वाक्यार्थविशेषणं भवतु—अहमिति विश्रान्तिः पारमार्थिकी तावदखण्डितैव तत्पृष्ठ एव तु सक्रमत्वं निर्भासते इति प्रकटयति । तथाहि क्रमवत्त्वं देशतः कालतश्च पर्वतवदरसंवेदनयोर्वैतत्यावैतत्याभ्यां चिरशीघ्रतया च यत् भाति, तत् भिन्नसंवेद्यगतदेशकालोपरागात्, यच्च अनेकत्वं स्वरूपभेदाभिधानस्पृष्टं; तत् परामर्शनीयस्य भिन्नस्य संवेद्यस्य अनुरोधात् । वेद्यांशप्राधान्यमत्र तदनुरोधनं भिन्नसंवेद्यं च, देशकालौ च प्रत्यासत्तेस्तद्गतावेवेति द्वन्द्वः । एषच अर्थो वृत्तिकृता स्पृष्ट आदिपदेन । तेन अतिरिक्तानतिरिक्तरूपत्वमेव तत्त्वं ज्ञानादीनाम् । निर्भासनसारं हि वस्तु इति । तथा यत् भाति, तदेव शक्तिरिति संरम्भरूपतया, धर्म इति सिद्धरूपाकारभेदरूपतया, गुण इति तत्परतन्त्ररूपतया, व्यापार इतिच पूर्वापरविततरूपतया व्यपदिश्यते । यस्तु ज्ञानस्मृतिसंकल्पाद्यवान्तरजातिकारी भेदः, स मायाशक्त्येति (१।५।१८) पूर्वेण उक्तः । अनेन तु ज्ञानस्यैकजातीयत्वेऽपि यो भेदः—नील-

१ 'व्यवहारा' ख. । २ 'ततः' ख. । ३ 'उपयुज्यते' क. पाठः ।
४ 'क्तानानति' ख. । ५ 'ज्ञानस्य एकजा' ख. ।

ज्ञानं, पीतज्ञानं, नीलस्मरणं, पीतस्मरणमित्यादिः, यश्च देशकाल-क्रमोपरागात् विततावितत्वचिरशीघ्रत्वादिश्च संवेदनगतः; स निरूप्यते । अथवा स्वरूपभेदोऽखिलो

'मायाशक्त्या विभोः............ ।' (१।५।१८)

इत्यनेनैव सूत्रेण उक्त इति इह संवेद्यस्य यौ देशकालाविति समासः । अत्र पक्षे वृत्तावादिपदेन विषयगतं ह्रस्वत्वादि उच्यते यतः संवेदनस्य सुखदुःखाद्याकारतैव लक्ष्यते । तदेवच रूपश-ब्देन टीकायामुक्तम् । देशकालपदस्य च अत्र पक्ष उपलक्षणत्वं व्याख्यातम् । तेन संवेद्यस्य स्फुटास्फुटादिरूपतया ज्ञानसंकल्प-स्मरणादिभेदस्तावदन्तरङ्गः । प्रत्येकमपि तत्र नीलज्ञानं पीतज्ञा-नमिति अन्तरङ्गतरः, नीलेऽपि सुखं दुःखं संवेदनमिति अन्त-रङ्गतमः; चिरमिदं ज्ञानं, शीघ्रमिदमिति बहिरङ्गः, पूर्वमिदमपर-मिदमिति बहिरङ्गतरः, सूक्ष्मं मशकज्ञानं, स्थूलं हस्तिज्ञानमिति वहिरङ्गतमः इति प्रधानभूतसंवेद्योपरागकृतः संवेदनस्य भेद इति सूत्रार्थः । एतमवतारयति **'तदेवम्'** इति । **'केवलम्'** इत्यस्य अर्थं **'स पुनः'** इत्येतेन अधिकविशेषसंभवद्योतकेन व्याख्यातुं पीठबन्धत्वेन अभेदभित्तिरास्ते एव इह वास्तवी,-इति दर्शयति **'परामर्श'** इत्यन्तेन । अपिशब्दान्तेन वाक्येन अभेदो भवन्नपि न अवभासते इत्याशंकां निराकरोति । संवेद्य-शब्दः परामृश्यताविश्रान्तः संवेदनस्य परामर्शसारत्वाभिधा-नाय व्याख्यातः । ननु संवेद्यमपि भगवत एव अभिन्नं, तत् कथं संवेद्यस्य भिन्नता,-इत्याशंक्य आह **'विश्वात्मनोऽपि'** इति । अपिशब्द उक्ताशङ्काद्योतकः । **'पदार्थजातम्'** इति संवेद्यं सत् प्रकाश्यते मायाशक्त्येत्यर्थः । **'अत एव'** इति यतो मायया

---

१ 'शीघ्रादिश्च' ख । २ 'प्रकाशते' ख. ।

भेदेन प्रकाशनं घटादेस्तत एव हेतोर्वेद्यधर्मदेशकालयोगः, संवेदनमयत्वे तु वास्तवे घटादेरपि न इयं दुर्दशा,–इत्येतत् **'अत एव'** इतिशब्देन उक्तम्। भिन्नस्य संवेद्यस्य रूपं देशः कालश्चेति प्रतिपादयिष्यते

'क्रमो भेदाश्रय........................।' (२।१।४)

इत्यत्र। **'सजातीयादपि'** इति घटोऽपि घटान्तरात्। ननु स घटो वेद्यरूपः कथं संवेदनं कक्ष्यान्तरपतितमुपादधीतेति चोद्यमुद्धरति **'तच्चैतत्'** इति वेद्यदशायामपि न संवेदनस्पर्शं शक्नोति उल्लङ्घयितुमिति न अस्य संवेदनात् दवीयसी अवस्थितिरिति युक्तमेव चोद्योपधानं वेदनांशे। यदिशब्देन क्रियातिपत्तिर्द्योतिता हेतुहेतुमद्भावकथनाय। सा तु किंविषयेति कथयिष्यमाणस्य वाक्यार्थस्य तत्क्रियातिपत्तिविषयतो हेतुहेतुमद्भावविश्रान्ततां तच्छब्दो द्योतयति,–इति। **'ततोऽपि'** इति अभेदात्। **'न भवेत्'** इति तदा बोधधर्मः। **'प्रत्युत आक्रामेद्वेद्यम्'** इति स्वगतं क्रममुत्क्रामेदेव तत्। ननु बोध्यस्य उन्मग्नतायां प्रकाशनमेव अस्य न युक्तम्। आह **'मायावशात्'** इति। अभिमानबलेन इदमुन्मग्नत्वं प्रकाशते, न वस्तुत इति यावत्। **'बोध्यस्यावष्टम्भः'** इति कर्मणि षष्ठी बोध्यमवष्टभ्नाति, बोधः स्वं रूपं तदेकलीनं करोतीति यावत्। **'अथवा'** इति अत्र व्याख्यायां कर्तरि षष्ठी, बोधस्येति तु कर्मणि। ज्ञानस्मृत्यादीनामपि यः प्रत्येकं स्वरूपभेदस्तेन,–इति व्याख्याने तु ज्ञानस्मृत्यादिलक्षणेन स्वरूपभेदेनेति। एवंहि

'मायाशक्त्या...............।' (१।५।१८)

इत्येतत्सूत्रार्थेन अस्य पौनरुक्त्यं स्यात्, संभवन्त्यां च सूक्ष्मायां गतौ स्थूलदृष्टिर्न आश्रयणीया, ततः पूर्वसूत्रार्थोपसंहरणतात्पर्य-

मस्य सूत्रस्य न व्याख्यातमस्माकं गुरुपादैरिति । 'अर्थे' इति वृत्तिवाक्यस्य । एवंच अत्र योजना—ज्ञानादिरूपतया एकजातीयत्वेऽपि विभिन्नदेशकालादिना उपरक्तं ज्ञानमपि ज्ञानान्तरात् स्मरणं च स्मरणादन्यदाभासते इति समस्तसूत्रवृत्तितात्पर्यं संक्षिप्य आह **'मायाकृतोऽपि'** इति । एतदुक्तं भवति—बोधस्य यत् बोधरूपेण प्रधानीभूतेन अवष्टम्भन, न इदमसभाव्यं बोधस्वभावत्वादेव बोध्यस्य । अतश्च प्रकाशमानतालिंगितेन बोध्यभागेन निर्भासमानो बोधः किमद्भुतं यत्तदीयरूपदेशकालभेदेन तद्रूपानुपरिवर्तितामात्मनि निर्भासयति—इति । भागशब्दस्य अयमाशयः—यद्यपि ग्राह्यग्राहकयुगलसृष्टिशक्तिर्माया, तथापि ग्राहकस्य चिद्भागे न मायाव्यापारः, अपितु अचिदंश एवेति । तत् सिद्धं ज्ञानशक्तिर्भगवतो व्यतिरिक्तबोध्यभेदात् भिन्नकल्पा अपि परमार्थतो न व्यतिरिक्तेति । तदनेन प्रबन्धेन

'ज्ञानं च चित्स्वरूपं चेत्·········' ( १।२।७ )

इति यः परस्य व्यामोहः, स व्यपोहितः कल्पितभेदमेव वस्तुशक्तिरिति हि समर्थितमिति शिवम् ॥ २१ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्या ज्ञानशक्तिविमर्शे पञ्चम ॥ ५ ॥

---

१ 'ण च' ख. । २ 'स्त' ख. । ३ 'बोध्य' ग. ।

## अथ षष्ठो विमर्शः ।

अहमानन्दघनेच्छाघटितेश्वरतोन्मिषत्समस्तोर्मिः ।
इत्युल्लसतरङ्गितममृतोर्मिमहं चिदर्णवं वन्दे ॥

स्मृतिज्ञानशक्ती विमृश्य तदुभयानुग्राहिणीमपोहनशक्तिं वितत्य श्लोकैकदशकेन विमृशति

'अहंप्रत्यवमर्शो····················· ।'

इत्यादिना

'······················सर्वस्य जीवतः ।'

इत्यन्तेन । तत्र प्रत्यवमर्शस्य विकल्पो विशेष इति एकेन उक्त्वा शुद्धेऽहन्ताविमर्शे अपोहनव्यापारो निरस्यते श्लोकेन । ततोऽस्मद्दर्शन एव अयमपोहनव्यापार इति श्लोकेन उच्यते, द्वयेन अशुद्धाहंविमर्शस्य विकल्पता, अनुसन्धानस्य अपि विकल्पत्वमेवेति एकेन, एवंविधानुसन्धिस्वभावैव स्रष्टृता भगवतः इति एकेन । प्रकृते चिदात्मनि अर्थावभाससत्तोपसंहाराय एकः श्लोकः । अनुभवस्मृत्यादावर्थावभास एव विचित्रः,–इति द्वयेन उच्यते, एतदभिधानं च प्रकृतस्वात्मरूपेश्वरप्रत्यभिज्ञायामुपयुज्यते इति एकेन,–इति तात्पर्यम् । उक्तं प्राक्

'स्वभावमवभासस्य विमर्शं········।' (१।५।११)

इति । विमर्शश्च अभिलापयोजनया, स च अवश्यं विकल्पत्वमापादयति, तच्च सांसारिकमायापदोचितं भगवति कथं स्यात्,–इत्याशङ्कां शमयितुं सूत्रम्

अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः सह्युक्तो द्व्याक्षेपी विनिश्चयः ॥१॥

देहादिसंकोचशून्यस्य प्रकाशस्य य आत्मा सारस्वभावोऽन-

१ अच्छोल्लसेति पाठः । २ 'उपपादयति' क. ।

न्यवदनावलोकिस्वातन्त्र्यविश्रान्तिमयः परः प्रतिष्ठात्मा अहमिति **'प्रत्यवमर्शः, असौ विकल्पो न'** भवति। कुतः पुनरियं विकल्पत्वाशङ्का। आह **'वाग्वपुरपि'** श्रोत्रग्राह्यरूपातिरिक्तान्तरत्वमौसमानसविद्रूपावेशिवाच्याध्याससतत्त्वशब्दनात्मकशब्दशरीरोऽपि,—इत्यर्थः। कस्मादसौ न विकल्पः। आह **'सहि'** इति। विविधकल्पना भिन्नस्यापि गुडदधिमरिचादेरिव योजना, एकस्य अपि वैविध्येन कल्पना विविधस्य च शङ्कितस्य रूपान्तरस्य कल्पन विच्छेदनं विभज्य अन्यतश्च्यवनं प्रमातृबुद्धिकोशे प्रवेशनेन दार्ढ्यापादनपर्यन्तं परिपालनं विकल्प उच्यते निश्चयश्च। अत्र च सर्वत्र अवश्यं तदतद्रूपद्वयेन भवितव्यं, अन्यथा किं योज्यते, किंच विभज्यते, किंच शङ्क्यते इति सूत्रार्थः। आत्मनि यः प्रत्यवमर्शः प्रकाशस्य न नीलादेरिव वेद्यस्य इदमिति, नापि शरीरादेरिव विकल्पितप्रमातृभावस्य अहमिति परत्र प्रमातरि, स एवमुच्यते। **'अहमिति आत्मनि'** इति विषयिणि विषये चेति योज्यम्। एवमियता अहमित्यस्य तत्त्वं दर्शयितु वृत्तौ **'आत्मनि'** इति वैयधिकरण्येन सौत्रसामानाधिकरण्यपरमार्थो व्याख्यातः। **'परवाग्रूपत्वात्'** इति परार्थभागेन **'न विकल्पः'** इत्यत्र अयं हेतुः, उत्तरपदार्थभागेन साभिलापतायाम्। **'सहि'** इति विकल्पः। निषेधशब्देन निरसनं व्याचष्टे। प्रतियोगिनिषेधपूर्वत्वादेव निश्चयशब्दवाच्यता,—इति योजनीयम्। विकल्पस्य एकप्रकारव्याख्यानं वृत्तौ प्रकारान्तराणां तदनुविद्धत्वात्। **'अत्र'** इति विशुद्धे प्रकाशे। इयत्या वृत्त्या सूत्रार्थो व्याख्यातः। एनमवतारयति **'यदि'** इति। **'तस्य'** इति प्रत्यवमर्शस्य **'शब्दना-**

---

१ 'वदनालोकि' ग। २ 'वक्ष्यमान' क। ३ 'अपरार्थो' क।
४ 'निरनुमान' ग.।

**त्मत्वप्रतिपादनात्**' इति '**परवाक्**' इति वचसा प्राप्तमिति । नच तत् युक्तमित्याशयः । इयता '**वाग्वपुरपि**' इति व्याख्यातम् । '**निरूपणाय**' इति उत्तरसूत्रैरेतत् निरूपयिष्यते, तस्य अयं पीठबन्धः क्रियते इत्यर्थः । '**तावत्**' इति अशुद्धस्य तु विचारः करिष्यते इति तात्पर्यम् । '**प्रकाशस्य**' इत्यस्य व्यावर्त्यमाह '**शरीरादेः**' इति । ननु शरीरादि न भिन्नं किंचित् प्रकाशादिति कथं तत् व्यावर्त्यं स्यात्,—इत्याशङ्क्य आह '**तच्च**' इति । प्रकाशस्य शरीरादौ वेद्यीभूते यो विमर्शस्तं व्यावर्तयितुं यत् '**आत्मनि**' इति पदं, तदपि अनेनैव ग्रन्थेन व्याख्यातम् । '**तच्च**' इति तदपि व्यावर्तितमात्मनीतिपदेन,—इति संबन्धः । ननु विशुद्धे प्रकाशे वाचः करणरूपायाः कथं संभवो येन उक्तं वाग्वपुरित्याशङ्क्य ब्रूते '**शब्दनात्मत्वात्**' इति । वचनं हि शब्दनं, न वागिन्द्रियजन्यः शब्द इत्यर्थः । ननु एवं वृत्तौ परशब्दस्य किं प्रयोगफलम् । तत्र आह '**केवलम्**' इति । श्रुतिगोचरीकार्या या शब्दनक्रिया शब्दोत्थापिका क्रिया—ब्रूते जल्पति वक्ति—इत्येवं, तस्या जन्यत्वेन विषयतां यतो न प्राप्ता सा वाक्शक्तिः स्थूलशब्दभूमिकां यतो न स्वीकृतवती ततस्तज्जननकरणतारूपः सूक्ष्मशब्दात्मा न भवत्यसौ प्रत्यवमर्श इति संबन्धः । प्रत्यवमर्श एवहि शब्दात्मा परभूमौ प्रमातुः सूक्ष्मभुवि वागिन्द्रियं करणं स्थूलदशायां प्रमेयरूपः शब्दः,—इति निरूपयिष्यते वितत्य आगमाधिकारे । ननु च अभिलापिनी प्रतीतिः कल्पनेति । तत्र शब्दनात्मत्वे का विकल्पत्वशङ्का । आह '**शब्दानामेवच**' इति । ननु न अत्र भावे घञ्, अपितु करणे, शब्दनं च भावात्मकमिति चोद्यं '**यद्यपि**' इत्यादिना आशङ्क्य शम-

१ 'शक्ति' ग. । २ 'सूक्ष्मदशायां' ग. ।

यति 'तथापि' इत्यादिना। सिद्धत्वेन प्रमेयस्वभावो यः शब्दः, सोऽर्थवदेव अभिलप्यमानैकस्वभावः कथं करणभावमनुभवेत्। ततश्च कर्तुरेव यत् क्रियात्मकं रूपं, तदेव

'सव्यापारप्रतीतत्वात् प्रमाणं फलमेव सत्।'

इति न्यायेन करणतया निर्दिष्टम्। येन परिस्पन्देन प्रमाता अभिलपिता सन्नभिलपति,—इत्येवं व्यवस्थाप्यते, सोऽभिलपनक्रियात्मा परिस्पन्दः करणतया

'तद्वशात् तद्व्यवस्थानात्………… ….।'

इति नयेन अपदिश्यमानोऽभिलाप इति यावत्। अभिलपने प्रमातुः क्रियैव करणं प्रमातृकरणत्वात् प्रमाक्रियावदिति स्वभावः। करणत्वं हि साधकतमत्वेन व्याप्तं, तच्च अनन्यापेक्षया। तत् यदि प्रमातृक्रियाव्यतिरिक्तं करणं स्यात्, तदनपेक्षाविरुद्धा अन्यापेक्षा आपतेत्,—इति व्यापकविरुद्धोपलब्ध्या विपक्षात् प्रच्यवमानो व्याप्यमपि निवर्तयति। तेन व्यापकस्य अनुपलम्भात् व्याप्यं निवर्तते, कारणविरुद्धेऽपि कारणाभावात् कार्यमिति व्याप्तिसिद्धिः। 'तथा' इति अभिलापशब्देन। 'तैरपि' इति बौद्धैः। ननु इयता शब्दसंसर्गयोग्यतायाः शब्दनविषयता नाम तत्त्वमिति व्याख्यातं भवति। तच्च प्राक्तनैर्न उपगतम्। यथाह धर्मोत्तरोपाध्यायः—

'संसृष्टप्रतिभासेति वक्तव्ये योग्यग्रहणं किमर्थम्'

इत्युपक्रम्य

'अव्युत्पन्नसंकेतस्यापि प्रत्ययो भवति विकल्पः'

इति समर्थ्य उपसहृतं

---

१ 'तथाच' क, ग। २ 'प्राप्त' क.। ३ 'व्यापेक्षा' क, ग,।

विषयव्यापारनिरपेक्षोत्पादतया तु अनियतप्रतिभासस्ततश्च शब्दसंसर्गयोग्याभासः।'

इति। एतदेव परस्य अनुपपन्नम्, अस्माकमेव तु उपपन्नम्,—इति दर्शयति **'ननु'** इति। **'तदेव हि'** इति अनियतप्रतिभासत्वं परस्य न युज्यते। अत्र हेतुः **'नहि'** इति। ज्ञानस्य हि विषयव्यवस्थात्मकमेव निजं वपुः। तदस्य कथमव्यवस्थात्मकत्वं स्यात्, अव्यवस्थात्मकत्वे वा संशयरूपतैव स्यात्। एतच्च संभावनामात्रेण उच्यते। वस्तुतो हि संशयोऽपि नियतप्रतिभास एव। स्थाणुरेववा पुरुष एववा,—इति हि वार्थोल्लिङ्गितमेव अत्र वस्तु प्रकाशते। वार्थस्य तु तत्पृष्ठ[१] एव भवतो वस्तुनि विकल्पकत्वं न संभवति। नहि एवमत्र प्रतिपत्तिः—वस्तु विकल्पते इति, अपितु तदेकमेव। अंशे तु विपर्यासः, सोऽपि एकनिष्ठ एवेति न संवेदनं नाम विषयं प्रति अव्यवस्थात्मकं युक्तम्। यश्च अध्यवसायापेक्षं प्रामाण्यं अभिमन्यते, तस्य अध्यवसाय[२]श्च अनियतप्रतिभासश्च,—इति का भाषा। 'दर्शनायन्ते विकल्पाः' इति चोद्यमाने सुतरामयं भग्नो वादः। स्वपक्षे तु एतदुपपत्तिमाह **'प्रमातुः पुनः'** इति। एतदुक्तं भवति—यस्य अर्थप्राधान्यात् तद्बलोपपन्नं दर्शनं, तद्रूपानुकारी च विकल्प इति दर्शनं; तस्य अर्थे नियते सर्वमेतत् नियतरूपमेव। अस्माकं तु प्रमाता प्रधानत्वेन प्रपतति, नतु अर्थो वराकः कश्चिदस्ति। तदसौ प्रमाता यावन्तमाभासं स्वातन्त्र्यात् विमृशति, तावति असौ विकल्पः; नतु आभासान्तरे,—इति आभासनिकुरुम्बरूपत्वास्पर्शादनियतप्रतिभास उच्यतां नाम, अतद्व्यावृत्तिभेदकल्पनमपि सर्वतोनिराशंसरूपस्वलक्षणनियन्त्रितत्वे

१ 'तद्दृष्ट एव' क. ग.। २ 'अव्यवसायः' क. ग.।

कथं स्यादिति, तदपि प्रमातर्येव आयतते तदेतत्संस्कारस्य अतत्समारोपस्य अतद्व्यावृत्तेश्च प्रमात्रधीनत्वात्,—इति अर्थस्य व्यक्तये स्फुटत्वाय उपयोगिनो ये आभासा देशकालादयः, तान् यदा प्रमाता न आद्रियते स्वव्यापारे, घटभासमात्रविमर्शे तु विश्रान्तिमाद्रियते, तदा युक्तमनियतप्रतिभासत्वम्। ननु शब्दो विषयपक्षे स्फुरतु नाम, शब्दनं तु नाम किम्। एतदाह '**शब्दनं च**' इति। श्वेतगुणसत्ताशब्दाश्च प्रमातृभूमिपतिताः प्रमात्रा विमृश्यमाना विमर्शे लोलीभूताः पूर्वापरीभूतेन विमर्शरूपेण उपबृंहिताः श्वेतते-भवति-ब्रूते-इत्यादिक्रियारूपभाजः। सिद्धरूप एवहि पदार्थो विमर्शबलेन पूर्वापरीभूतरूपतापतितः क्रियारूपे निमग्नो भाति पुत्रीयताविव पुत्रः। '**वाच्यकर्मणोऽपि**' इति वाच्यं शब्दलक्षणं कर्म निर्वर्त्यमर्थलक्षणं च प्राप्यं येषां, तथाविधा अपि शब्दार्थाः शब्दक्रियाश्च उक्ताः। यदिहि शब्दः क्रियारूपतां न आश्रयेत्, कथमीप्सिततमं धातोर्वाच्यं स्यात्। नहि करोतेर्घटोऽर्थो, गमेर्वा ग्रामः। ननु वृत्तौ यदुक्तं '**स्वभावभूतः**' इति प्रत्यवमर्शविशेषणं, तस्य किं व्यावर्त्यं, नहि प्रकाशस्य अस्वभावभूतः कश्चन विमर्शोऽस्ति। अस्ति,—इत्याह '**अत एव**' इति। घटनिष्ठो यः प्रकाशः—घटः प्रकाशते—इति घटनिष्ठीकृत एव मायाशक्त्या तस्य प्रकाशस्वभावस्य अपि सतो विमर्शः परत्वेन अनात्मभावेन अपि शक्यते वक्तुम्। कुतः। आह '**अत एव**' इति। विषयरूपशब्दवैलक्षण्येन यदेतन्निरूपणमस्माभिः कृतं शब्दस्य, अत एव हेतोः। यतः प्रमातुरसौ व्यापारस्ततस्तत्रैव प्रमातृत्वे विश्रान्तः प्रमेयस्य अनात्मभूतो भवति। यद्यपिच प्रकाशविमर्शयोरुक्तनयेन अन्योन्यमव्यभिचारस्तथापि मायाशक्त्या प्रकाशस्य पृथगवभासनात् घटोऽयमिति विमर्शो न आत्मभूतः,

स्वात्मनि तु विषयनिष्ठतामस्पृशति, प्रकाशस्य सद्यःप्रमातृलक्षणे वपुषि यो विमर्शोऽहमिति सोऽनात्मभूतत्वेन अनभिशङ्क्यः,—इति प्रतिपादयितुं विशेषणम्। ननु प्रकाशस्य कथमियं प्रमेयरूपस्पृक्ता,-इत्याशङ्कामपास्यति **'मायाशक्त्या तु'** इति। एवमियता अपि **'वाग्वपुः'** इत्यस्य अर्थं व्याख्याय **'नासौ'** इत्यादि विवृणोति **'शब्दनरूपत्वात्'** इति। विमर्शरूपता यद्यपि सामान्यरूपा, तथापि विकल्पतानिबन्धनभूतरूपान्तरशून्यो यो विमर्शव्यक्तिविशेषः, स विकल्पव्यक्तेर्विभिन्न एव,—इत्यभिप्रायेण तदुभयानुयायि शब्दनात्मकसामान्यलक्षणमित्याह **'अर्थ'** इति। ननु तुच्छमकिञ्चिद्रूपं प्रकाशकलयापि अस्पृष्टं प्रतियोगि भवतीति यावत्। **'तस्य'** इति अतद्रूपस्य। **'तदात्मनि'** इति अतद्रूपविपरीते पारमार्थिके न सार्वात्म्येन शङ्क्यमानत्वमस्ति, तदसावपसारणीयः, अन्यथा स न निश्चितः स्यात्। ननु एतदपसारणे प्रत्युत अपूर्णोऽसौ[1] निश्चितः। सत्यं, तथैवतु स उपयोगी मायापदे इति दर्शयति **'भेदमय'** इति। **'प्रमातृस्वभाव'** इति प्रमाणातिरिक्तः प्रमातुरेव असौ प्रमितिशब्दवाच्यो व्यापारो येन प्रमाता स्वतन्त्रो व्यपदिश्यते इत्यर्थः। **'अत्र'** इति वृत्तिगतं व्याचष्टे **'विशुद्धे'** इति विशेषणं मायाप्रमातुर्व्यवच्छेदाय। **'प्रकाशात्मनि'** इति, अनेन प्रतियोग्यसंभव एव आसूत्रितः। अप्रकाशमानो हि न प्रतियोगीति दर्शितम्। प्रकाशमानश्च प्रकाशतादात्म्यवृत्तिः प्रकाशस्य प्रतियोगी,—इति उच्यमानमेव त्रपाकरमिति ॥ १ ॥

ननु घटे प्रतियोगी संभवति, न प्रकाशे इति कुतः। नञर्था-

---

[1] 'अपूर्वोसौ' क. ग.।

लिङ्गितो हि अघट इव घटे प्रकाशेऽपि अप्रकाशो भवेदेव,—इत्याशङ्क्य सूत्रं

भिन्नयोरवभासो हि स्याद् घटाघटयोर्द्वयोः ।
प्रकाशस्यैव नान्यस्य भेदिनस्त्ववभासनम् ॥ २ ॥

मायापदे हि घटाघटौ भिन्नौ प्रकाशेते । ततश्च अत्र प्रतियोगिसंभवः । शङ्क्यते हि घटाक्रान्ते योग्यदेशे तद्देशाक्रमणशीलो विनाशजनकः स्वकारणोपनतः पटादिरघटः । देहादिसङ्कोचकलाविकले सत्यप्रकाशे तु *योऽप्रकाशः शङ्क्यते, तस्य प्रकाशादवभासनमु*चितम् । अवभासेन हि अप्रकाशत्वहानिः । हिरिति हेतौ । यत एवं, ततो युक्तं **'नासौ विकल्पः'** इति,—इति सूत्रार्थः । हिशब्दस्य अर्थं **'तथाहि'** इत्यनेन वृत्तिकृत् व्याचष्टे वृत्तिं वृत्त्यन्तरेण संगमयितुम् । अत एव वृत्तौ पुनर्हिशब्दार्थो न व्याख्यातः । एवं **'तथाच'** इति भाविसूत्रगतं हिशब्दव्याख्यानं स्मर्तव्यम् । तेन नैषा सूत्रसंगतिरिति न भ्रमितव्यम् । सूत्रार्थमवतारयति **'नहि'** इति इत्येवंभूतं प्रतिपक्षासभवं युक्त्या हेतुनिरूपणेन हिशब्दद्योतितेन निदर्शयितुमाह । कस्मात् पुनरत्र युक्तिरुच्यते इत्याह **'आशङ्क्यमानम्'** इति । प्रतिपक्षासभवो हि न निःशङ्कोऽप्रकाशस्य प्रतिपक्षस्य वचनार्हत्वात् । युक्त्या कीदृश्या । आह **'तथाहि'** इत्यनेन वृत्तिवाक्येन **'उपक्रम्य'** इति प्रथमत एव द्योतितयेति शेषः । तथाहीत्यनेन उपक्रमणीयया युक्त्येति वा कर्मधारयः । एतत्सूत्रार्थस्य पूर्वसूत्रार्थे हेतुत्वमिति

'.......... द्वयापेक्षी विनिश्चयः ।'

इत्येवं भागमिह व्याचष्टे । **'विकल्पस्य'** इत्यादि । क्रमेण अत्र हेतुहेतुमद्भावः पूर्वग्रहणमपोहनं प्रतिषेधनं तावन्मात्रमेव च, न निश्चयः प्रकाशरूपतया विधौ विश्रान्तत्वात् निश्चयस्य,—

इत्याह '**नीलमेव**' इति हि एवार्थद्योतितपरापसारणप्रतिलब्धनियमविशिष्टे नील एव विधिरूपे विश्रान्तिरन्यस्य प्रकृतनीलापेक्षया अतल्लक्षणस्य प्रतियोगिनो नीलप्रच्यावाविनाभूतस्य पीतादेराक्षेपात् । '**उभयविषयतया**' इति निषेधभागस्य हि अतद्रूपं विषयो, विधिभागस्य तु तद्रूपम्, विविधं हि कल्पनं विधीयमाननिषिध्यमानतयेति विकल्पनम् । ननु न अत्र समुच्चय इव तदतद्रूपद्वयं विषयस्तत् कथमुभयविषयता,—इति चोद्यं परिहरति '**यद्यपि**' इति । यत एव द्वन्द्वपदार्थवैलक्षण्येन उभयविषयता, अत एव समुच्चयवैलक्षण्यं निश्चयविकल्पनसंगीतीनाम्[१] । एतदाह '**यत्रापि च**' इति । '**विकल्प**' इति निश्चयव्यतिरिक्तो विभापणात्मा वा आत्मरूपः । ननु आसां समुच्चयादस्तु वैलक्षण्यमुक्तनीत्या, परस्परतस्तु कथमेकपर्यवसानस्य उभयापेक्षे(क्षेपे)ऽपि अविशेषात् । आह '**केवलम्**' इति । निश्चयरूपे विकल्पे घट इतिप्रतीतिस्वीकृतमेव एकतापर्यवसानम्, एकमेवहि तत्र अनुभवेन प्रतीतमारोपणमात्रायातं तु अपरमपसारितम् । विकल्पनसंशयोस्तु प्रतीतं द्वयमेव दोलायमानत्वात् । प्रतीते तर्हि एकपर्यवसानं कथमुक्तं, कश्च अनयोर्विशेषः । उच्यते '**अपरत्र**' इति निश्चयव्यतिरिक्ते शाब्दे प्रमातृरुचेरेकतापर्यवसानं;[२] तथा हि प्रमातुर्ह्रीहियवादि यद्यदेव अभिप्रेतं, तत्रैव प्रतीतिमनुष्ठानहेतुं विश्रामयति '**स्वनहसोर्वा**' (३।३।६२) इत्यपि घञ्चि वा । ननु रुचेरनियन्त्रितत्वात् द्वयेऽपि जातु कथं तावत् विश्रमयेदित्यत आह '**समुच्चये य**' इति विरोधोपपादितवार्थमहिम्ना हि नियन्त्रिता प्रमातृरुचिरिति कथमनिय-

---

१ 'नियमः' क. ग. । २ 'संगीतानां' क. । ३ 'एकत्रपर्यवसानं तथा हि' ग. ।

त्रिता असौ। **'संशये च'** इति **'एकतापर्यवसानम्'** इति संबन्धः। चशब्दस्तुशब्दद्योतितं पूर्वोक्तं निश्चयात् वैलक्षण्य समुच्चिनोति। तत एव विभाव्यमाणसशययोः सामान्येन निश्चयात् वैलक्षण्यमुपसहरति **'ननु'** इत्यादिना **'विशेष'** इत्यन्तेन। तुशब्दार्थे वा वर्तमानो विकल्पनात् वैलक्षण्यं सशयस्य द्योतयति। प्रकरणापन्न एक एव इह निश्चय इति तु अभिधातु तद्वैलक्षण्यमात्रमुभयोरविशेषेण उपसहृतमिति योज्यम्। **'प्रतीतिप्रभावात्'** इति। प्रतीतिर्हि अत्र उभयत्र प्रत्युत द्वयालम्बना। **'इमावेव'** इति उभयस्वीकार एकपर्यवसानमित्येतत्तु तुल्यं त्रितयेऽपि,–इति वार्थस्यैव अयं प्रकारभेदः,–इति वार्थानुगमात् विकल्पवाचोयुक्तिर्निश्चयेन न युक्तेति एवकारः। एव विकल्पस्वरूपं पूर्वसूत्रोपजीवितमुपसहारेण **'तदेवम्'** इत्यादिना प्रदर्श्य सत्सप्तम्या अवश्याङ्गीकर्तव्य एषोऽर्थ इति निरूपयन्त्या प्रकृते एतदुपयोजयन्तद्वैलक्षण्यमहप्रत्यवमर्शस्य दर्शयितुं यदुक्तं **'प्रकाशस्यैव'** इत्यादि, तत् व्याकर्तुं प्रक्रमते **'चिदात्मन'** इत्यादि। **'विमर्शगत'** इति विमर्शविश्रान्तेर्विमर्शस्थाने एव विकल्पता सभाव्यते, नतु अवभासस्थाने इति तत्रैव सा पराकर्तव्या,–इत्यभिप्रायः। **'तादात्म्येन'** अति तत्स्थानापत्त्येति यावत्। **'अवभास'** इति सभाव्यमान इति शेषः। **'द्वितीयस्य'** इत्युक्तौ वृत्तौ[1] भिन्नपदस्य कोऽर्थ इत्यत आह **'चित्प्रकाश'** इति। स्वकल्पनाकल्पितेन द्वितीयेन न प्रतियोगिपरिपूरण क्रियते। नहि नीलस्य कारणत्वकार्यत्वक्षणिकत्वादि प्रतियोगिपक्षे वर्तते, नहि तत् पृथक् किञ्चित्। स्वकल्पनोत्थापितं च चित्प्रकाशस्य यदादीति न प्रतियोगि। प्रतियोगित्व हि तत्स्थानापन्नत्वम्। तच्च पृथक्तया

१ 'उक्तौ' क ग।

वस्तुत्वेन व्याप्तमवस्तुनस्तदर्थक्रियाकारित्वानाक्रमणसंभावनवैधुर्यात्। तद्विरुद्धं च कल्प्यमानत्वमिति विरुद्धोपलब्धिः। ननु अवस्तुनैव तुच्छेन स्वप्रच्यावनेन नीलस्य विरोध इति, स वा अस्य प्रतियोगी, तदविनाभाववन्तस्तु पीतादयस्तन्मुखेनेति मन्यते। मैवं, परस्परं हि परिहृत्य यदवस्थानं, स एव उपपादयिष्यते विरोधः। नच तुच्छेन सह परस्परार्थः कश्चित्, परिहारार्थो वा। नच तुच्छस्य किञ्चिदवस्थानमुचितं, ततः पीताद्येव नीलस्य वास्तवी तुच्छता; व्यवहार्यं तु तुच्छतारूपं प्रमुखीकृत्य उच्यते तुच्छमुखेन विरोध इति। प्रकृते तु तुच्छता व्यवह्रियमाणा व्यवहारस्य प्रख्योपाख्यामयत्वात् प्रकाशविमर्शावेशिन्येव,–इति कथं तन्मयस्य चित्तत्त्वस्य प्रतिपक्षतापक्षे प्रक्षेप्तुं सा क्षम्येत, तत् युक्तमुक्तं **'भिन्नस्य'** इति वृत्तौ पदम्। **'तथापि'** इति। तस्य घटस्य मायापदे द्वितीयस्यापि शुद्धात् विमर्शेऽपोहनं न कर्तुं शक्यमर्हं युक्तं चेति संबन्धः। अत्र हेतुः **'विरोधाभावात्'**। अत्रापि विशेषणद्वारेण हेतुः **'चिदन्तःप्रवेशेन'** इति। ग्राह्यशब्देन ग्राहकस्य अपि आक्षेपादत्र व्यर्थोऽपि। तदयमर्थः—चिद्रूपे यद्यन्तः प्रविशति प्रमात्रा च यद्यन्तः प्रवेश्यते, तदा अस्य यो मायाप्रमात्रपेक्षयापि व्यवस्थाप्यते ग्राह्यभावः; स उपपन्नोऽन्यथा प्रकाशमानस्य ग्राह्यतेति चैतन्यप्रकाशेन साकं कथं घटादेः प्रकाशमानस्य सतो विरोधः, अप्रकाशमान(त्व)शङ्कारोपापसारणानि संवेदनबलोपनिपतितानि कथं सहेत। **'अत एव'** इति यतो न युक्तमपोहनं घटादेः। **'वस्तुतः'** इति निर्विकल्पकप्रकाशनिष्ठेऽहमितिविमर्शे विश्वमन्तर्भूतं यावत्। परतस्तु मायाप्रभावात् मानसे विकल्पे देहादिसंकुचित एव संवेदने अहमिति-

१ 'ततोऽयं' क.।

विमर्शो विकल्पतायामेव पर्यवस्यति,—इति तत्रैव विश्रान्तिमभिमन्यमानस्तां विश्वैकात्मतां प्रकाशविमर्शमयीमपि अप्रकाशितविमृष्टिमभिमन्यते इति तात्पर्यम्। **'ननु'** इति द्वितीयतामात्रमेव अपोहनस्य प्रयोजकमिति मन्यमानस्य अयमाक्षेपः। **'तथापि'** इति उत्तरम्। **'नच तथा'** इति संबन्धो न विरुद्ध इत्यर्थः। वस्तुन एवहि परस्परपरिहारार्थः। ननु किं विरोधचिन्तया, प्रतियोगी हि अपोहनीयः। सत्यं, प्रतिपक्षतया योगी प्रतियोगी विरुद्धः एवं भवति,—इति भणति **'विरुद्धश्च'** इति विरुद्ध एव प्रतियोगीत्यर्थः। **'स च'** इति यस्य अपोहनं शङ्क्यते परैरित्यर्थः। **'व्यपदेश'** इति तुच्छेन हि अतुच्छमेव व्यपदिश्यते इत्यनेन सद्रापदं व्याख्यातम्। एवंभूतमेवच विकल्पनस्य रूपमिति दर्शयितुं सूत्रस्य पूर्वार्धे यत्, तत् वृत्तिकृता प्रसिद्धस्पष्टार्थमिति न व्याख्यातम्। वृत्तिकारस्तु विवृणोति **'घटोऽयम्'** इति। **'अत्र च'** इति। अपोहनस्य प्रसिद्धमिदं रूपं तद्रूपशङ्कापसारणाय प्रकृते प्रमेयेऽवश्यापेक्षमिति प्रमेयसमुच्चायकश्चः। तस्मिन् संभाव्यमानस्य अघटस्य अपोहने[1] यो निश्चयः, स सभाव्यते। **'यत्स्थाने'** इति यस्य घटस्य स्थाने यः पटादिः सभाव्यते, तस्मिन् योग्ये देशे स्वकारणवलात्, नच भवति तस्मिन् स्थाने यतो घटेन तत्स्थानमा समन्तात् क्रान्तं स्वीकृतं, स पटादिस्तस्य घटस्य प्रतियोग्यादिवाचोयुक्तेरास्पदम्। ननु तत्स्थानाक्रमणसभावननिरसनादि यदुक्तं, तत् सहानवस्थानविरोधे शीतोष्णादौ स्पष्टमपर्यन्तकारणस्य भवतः 'अन्यभावेऽभावाद्विरोधगतिः'[2] इति न्यायेन, ननु परस्परपरिहारस्थितिलक्षणके विरोधे न्यायोऽयं स्पष्टेन पथा सगच्छते[3], तत् कथ विरुद्धस्य इयदेव लक्षणं दर्शितं, कथंच प्रकृते

१ 'अपोहेन' ख। २ 'भावे भावात्' क। ३ 'संग्रथ्यते' क।

अन्योन्यपरिहारे सहानवस्थानन्याययोजनम्। एतदाशङ्क्य अयमेव परस्परपरिहारात्मा विरोधः सहानवस्थानं वध्यघातकभावं च व्याप्नोति, ननु एतौ ततोऽधिकाविति दर्शयति **'तत्स्थानाक्रान्तिर्हि'** इति। हि यस्मादेवं, तस्मादुपपन्नमेतत्सर्वमित्यर्थः। **'कदाचित्'** इति यत्र प्रसिद्धः सहानवस्थानव्यवहारः, **'कदाचित्'** इति यत्र अन्योन्यपरिहारव्यवहारो लोकस्य। **'भावस्य'** इति घटस्य कर्तरि संबन्धित्वेन विवक्षिते षष्ठी। तत् घटात्मकभावकर्तृका कल्पितरूपा विपर्ययस्थानस्य अघटरूपताया यत् स्थानं संभाव्यते, तस्य कर्मभूतस्य आक्रान्तिः। एवमर्थतत्त्वे संबन्धमात्रेण शब्दसंस्कारः, एवमन्यत्रापि अवधेयम्। **'विपर्ययरूपतानुपपत्तेः'** इति। नहि घटस्य सत एव अघटरूपत्वमुपपद्यते, ततो हेतोर्या कल्पितायाः शङ्क्यमानत्वेन आरोपिताया विपर्ययरूपताया निवृत्तिः, सा स्वरसेन स्वभावबलेन स्वहेतुपरस्परोपनतेन यद्यपि कृता; तथापि तेनैव घटेन इव कृतेति उत्प्रेक्ष्यते प्रमातृभिः। प्रमाता हि एवं विचारभूमिपतित उत्प्रेक्षते। घटस्य अयं स्वभावमहिमा यदेतदीयं स्थानं न कदाचिदघटोऽवस्कन्दति। तदवस्कन्दे हि स घट एव न स्यात्। नच इह न भवति घटः स्वकारणात् स्वप्रमाणाच्च तस्य यतः सिद्धिरविकल्पनीयेति[1]। अतो हेतोर्भावकर्तृका कल्पितरूपा विपर्ययस्थानस्य आक्रान्तिरिति संबन्धः। एतत् निदर्शनेन स्पष्टयति **'यथा'** इति। **'तत्'** इति तस्य घटस्य संबन्धिनी तत्कर्तृका कल्पितरूपा घटाभावस्थानस्य आक्रान्तिः, यदिवा कल्पितं सत् घटाभावस्थानं कल्पनया तथा कृतं, तस्य घटेन आक्रमणमिति व्याख्या; पूर्वत्र अपि कल्पितं यत् विपर्ययस्थानं, तस्य आक्रान्ति-

---

१ 'अविकल्पनीया' ग.।

रिति। एतदुपसंहरति '**एवंच**' इति एकात्मतया शङ्क्यमानया यो विरोधो निजेन विशेषेण विशेषान्तरस्य रोधन स्वात्मनि अनङ्गीकरणं, स एव एको विरोधः सर्वत्र योऽन्योन्यपरिहारः इति प्रसिद्ध इति आकूतम्। '**स तु**' इति विरोधः। कल्पितस्य अघट इव पटस्य अकल्पितस्य उष्णस्थान इव शीतस्य या निवृत्तिप्रतीतिः कल्पिताकल्पितयोर्वा निवृत्त्योर्या प्रतीतिस्तत्पूर्विका प्रथा यस्य, तादृशोऽसौ। '**केवलम्**' इति भेदेन। आख्यायते इति आकूतशेषः। प्रतीतिप्रथाशब्दाभ्यां कल्पिताकल्पितभावो वस्तुतः क्वचिदपि न उपयुज्यते, नवा हि स्वलक्षणात्मानोऽन्योन्यमात्मानं मिश्रयन्ति वा विरुन्धन्ति वा

'संसृज्यन्ते न भिद्यन्ते······· ···· ।'

इतिन्यायात्। प्रमाता तु विचारभूमिमधिशयानः प्रथानुसारी व्यवहरति। '**एवम्**' इति। सा चेद्विरोधे तुल्या, तर्हि वास्तवावास्तवत्वविचारणमकिंचित्करमेवेति दर्शितम्। अन्योन्यपरिहारानुप्रवेशे तु शीतोष्णादेरपि न विरोध इति दर्शयन् उक्तमेव न्यायं द्रढयति '**तथाच**' इति। तथाहि सहेति समानकालतया अवस्थानं न भवत्येवेति नैकान्तिकं शीतोष्णप्रभृतेः सहावस्थानम्। स्वरूपमेव देशस्तद्यवष्टम्भाच्च आकाशभूतलादिकमपि। वध्यघातकभावेऽपि उक्तचर सचारयति न्यायम् '**अहिनकुलस्यापि**' इति न केवल शीतोष्णादेरिति अपिशब्दः। नकुलस्वरूपावष्टब्धस्य देशस्य '**तेन**' इति नकुलेन '**तद्देशस्य**' इति अहिदेशस्य तन्मयत्वमहिविग्रहावष्टब्धत्वमतन्मयत्वं च नकुलशरीरावष्टब्धत्वेन भोगिभोगानवष्टब्धत्वं विपर्ययो वा। एतल्लक्षणयोः स्वरूपविरोधो देशस्य तत्पर्यवसायी, तदेकपरमार्थोऽहिनकुलस्यापि विरोध इति संबन्धः। तत एव देशयोर्विरोधे तत्र तद्दे-

शत्वमन्यत्र अन्यदेशत्वमिति विषयभेदेन यः परिहरति, न तेन बौद्धस्य किंचित्कृतमात्मा तु वृथा खेदितः। देशद्वयद्वारकमेव हि विरोधमाह परः, तस्य तेनैव विरोधे परिहार इति समस्तविरोधापध्वंसनमिदमुत्तरं नीलानीलयोरपि विरोधं निरुन्धीत। तत्र नीलेऽनीलमनीले च नीलं, तदेवच तद्विषयभेदादिति तत्र तद्देशमन्यत्र अन्यदेशं, तदेवच तद्विषयभेदादित्यनयोर्हि वाक्यार्थयोः किं वैलक्षण्यं देशद्वारेण स्वरूपद्वारेण वा यो विरोधस्तस्य तेनैव परिहारायोगात्। एतावत्तु वाच्यं—प्रतीतिभेदात् सिद्धे स्वरूपभेदे प्रतीतिसिद्ध एवच आधाराधेयभावे ते एकस्य देशे बहवः कारणं, यथा एकस्य बहवो ननु बहूनि कारणानि येन तत्कारणकत्वेतरत्वकृतो विरोध इत्यत्र भविष्यति एतदिति अलमवान्तरेण। ननु यदापि अन्यतरदेशो न आक्रम्यते अन्यतरेण, तदापि उच्यते अहिनकुलस्य विरोधः; अतश्च उच्यते यच्चवह्नियते 'येषां च विरोधः शाश्वतिकः'(२।४।९) इति, तत् कथं सर्वत्र अयं विरोधप्रकार इत्याशङ्क्य आह '**अन्यदा तु**' इति। एवं '**भिन्नयोरवभासः**' इत्यपि व्याख्याय प्रकृतमेव अर्थमेतद्वैपरीत्येन अयत्नसिद्धमनुबध्नाति '**एवंच**' इति। वैधर्म्येण दृष्टान्तं योजयति न संभाव्यते घटोऽहमितिस्थाने। '**तस्मात्**' इति तदेकरूपत्वं हि प्रकाशस्य असंभाव्यं, तन्मात्रसहत्वं तु सति प्रकाशरूपत्वे न अपोह्यमित्याह '**नापि**' इति। '**तत्र**' इति प्रकाशे। '**असौ**' इति घटः। '**अत**' इति यतो न तत्र संभाव्यते, स्वेन केवलेन वपुषा अकेवलेन च यतो न निरसनार्हस्तत इत्यर्थः। '**स**' इति घटः। '**ततः**' इति प्रकाशात्। कस्तर्हि प्रकाशो विरुद्धतायोग्यः, आह '**किं तर्हि**' इति। नच तादृगस्तीत्याह '**तुल्य**' इति। '**इतरशब्देन**' इति वृत्तौ। ननु

प्रमेयतास्थाने नीलस्य यथा अनीलं संभाव्यते, भवति च तत् तत इतरत्, तथा प्रमातृस्थानेऽपि चिद्रूपस्य संभाव्यमानं वस्त्वन्तरं स्यादिति भ्रमं भिनत्ति '**तावन्मात्र**' इति मात्रपदेन। प्रमेयस्य हि मायानिर्मितस्य आभासनिकुरुम्बात्मकत्वे अनेकवैचित्र्यसहत्वं न अपूर्वं, शुद्धप्रकाशस्य तु प्रमातृरूपान्तरं मनागपि न सह्यम्। '**अनेन**' इति प्रकाशेतरत्वात् '**न स्यात्**' इति वृत्तिवाक्येन। अभ्युपगमेन अपि आह '**तथापि च**' इति। देशकालस्य भेदेऽपि भवन्तु प्रकाशाः स्वभावभेदेनैव भिन्नाः, तथापि नीलमिति निश्चये यथा न नीलान्तराणि अपोह्यानि, प्रत्युत

'......... दृष्टसंकल्पनात्मकम्[1]।

इतिनयेन तानि योजयितव्यानि, अन्यथा स्मरणादभिलापेण व्यवहारासिद्धेरपितु पीतादीन्येव नीलाभावानुप्राणितानि व्यावर्तनीयानि, तद्वत् प्रकाशे निश्चेतव्ये प्रकाशान्तराणि स्वसंवेदनकक्ष्याभाञ्जि न अपोहनीयानि,—इति पुनरपि न विकल्पतासिद्धिः। ननु

'निर्वृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते।'

इतिनीत्या यत एवासौ प्रकाशेत तेन स्वभावो नाभाति, तत एव नितरां तदपोहो भविष्यति। एतदपास्यति '**प्रतियोग्यनाभासे वा**' इति। हेतोर्हि विपक्षात् व्यावृत्तिर्वस्तुगत्या निरूप्यते, सा च विपक्षासंभवे न म्लायति इति श्रद्धेयमदः, इह तु न वस्तुचिन्ता वर्तते। किं तर्हि। संवेदनचर्चा। प्रमातृव्यापारो हि अपोहनम्, तत्र च आरोपणादेरवश्यम्भावः। तच्च अनाभातपूर्वे कथं विकल्पोत्थापितत्वेऽपि आरोपणादेर्विकल्पनतया विकल्पस्य अनुभववासनोपजीवित्वेन अत्यन्ताभाभातेऽसंभवात्। एतत् परो न सहते

[1] 'कलनात्मक' ग।

**'ननु'** इति। अत्र हि यदि अघटमाभासमानं विकल्पयेदा-रोपयेत् निषेधेच्च, तदा कालभेदेन बह्वयः संवित्तयो भवेयुः, इतरेतराश्रयचक्रकानवस्थानदोषाच्च एवमुक्तमिति अनाभातस्य नास्ति अपोहनमिति, तत् प्रत्युत अपोहनमिच्छतानाभासनमेव तस्य अपोहनमेषणीयमिति आकूतशेषः। एतत् परिहरति **'उक्त-मत्र'** इति। आक्षेपवाचोयुक्त्या हि सर्वमेतत्समाहितमिति मत्वा आक्षेपार्थमेव[१] व्याचष्टे **'नह्यत्र'** इत्यादिना। संवित्तिहंसी स्वमुखेन युगपदेव हेयं च जहाति, उपादेयं च समादत्ते,—इती-यति ततः स्वातन्त्र्यमस्या आस्ते एव। एनां हानसमादाननिर्वचन-भागिनीं तद्विदो मन्यन्ते[२]। **'प्रतियती'** इति प्रतिपत्तिरेवं यद्धि आत्मना विश्वसते इति यावत्। **'अन्यथा'** इति यदि कथित-नयेन हानोपादानमय एको व्यापारो····मलक्षणो न उदियात् प्रमातुः। ननु घटमर्थयते खलु, ततः प्रवर्तते। सत्यमर्थिता प्रवर्तिका, नतु केवलैव सा प्रमाणव्यापारनियन्त्रिता नियतविषयो-न्मुखां प्रवृत्तिं कुर्यादिति मात्रपदम्। अर्थितायां च प्रमाण-व्यापारनिरपेक्षायां प्रवृत्तिकारणत्वेन उपगम्यमानायां दुःखनि-वृत्त्यर्थितापि भवन्ती तदैव निवृत्तिहेतुस्ततो यदैव प्रवृत्तिर्यत्र, तदैव ततो निवृत्तिरिति महद्वैशसम्। तदाह **'अनिष्टशङ्कया'** इति। शङ्कामात्रादेव निश्चयानपेक्षादर्थित्वे सति प्रवृत्ति-रिति हि प्रक्रान्तम्। एतच्च निवृत्तावपि तुल्यम्। एवमु-पपाद्य उपसंहरति **'तस्मात्'** इति रहि····हितादयो हि शब्दा अन्तर्लीनीकृतप्रतियोग्यभावविशिष्टविधिप्रधानवस्तुनिष्ठा एव यथा, तथैव घटादयः सर्वे शब्दा इति दर्शयति **'एवम्'** इति। परस्य अपि एतत् संमतमित्याह **'एक'** इति। एकस्य नीलस्य

१ 'आपेक्षार्थमेवे' क.। २ 'मवास्तव एनां' ग.।

यावदेव प्रत्यवमर्शत्वेन आख्यातं विज्ञानं, तावदेव तत्र एकत्र विश्रान्तः प्रमाता स्वयं स्वेनैव प्रमातृतामहिम्ना तत्कार्यतत्कारिराशिद्वितयसरकारयानतत्कारिवर्गात् हेयात् तत्कारिवर्गमुपादेयत्वेन विभजति, तत एव प्रमातृव्यापाररूपेण उपादेयाभिमुखतया हातव्यमवाङ् कुर्वन् विमर्शः प्रत्यवमर्श इति उच्यते। पठितवाक्यार्थं प्रकृते योजयितुं वाक्यस्य तात्पर्यमाह **'अनेन'** इति। तदयं प्रयोगः—सर्वा प्रमेयेषु प्रतिपत्तिरपोह्याभासारोपनिषेधव्यापारान्तःकारिणी निश्चयप्रतीतिरूपत्वात् केवलं विविक्त इत्यादिप्रतीतिवदिति स्वभावः। विपक्षाद्धि हेतुर्व्यावर्तते स्वभावविरुद्धोपलब्धिभयात्। यदि हि न एतावदन्तःकुर्वीत, सेयमनिश्चयरूपतैव भवेत्। उपपादितं च इदानीमेव एतत्। एतत् प्रकृते प्रमेये योजयन् प्रकृतमुपसंहरति **'तदेवम्'** इति। अहमिति शुद्धचिद्विमर्शो न विकल्पः प्रतियोग्याभासनाद्यनुपलब्धेरिति व्यापकानुपलब्धिः, व्याप्यव्यापकभावश्च वितत्य निर्णीत एव। एतदेवच प्रकृतमिह प्रमेयमिति वृत्तिकारेण साक्षात् सूत्रस्य उत्तरमर्धं चर्तितं[1], पूर्वं तु गम्यमानार्थत्वेन॥ २॥

सूत्रमाशङ्कापूर्वकमवतारयति

तदतत्प्रतिभाभाजा मात्रैवातद्व्यपोहनात्।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम्॥ ३॥

**'ननु'** इति। दर्शने यदवभातं विषयस्तन्निष्ठश्च व्यापारस्तदेव उभयं विकल्पस्य विषयो व्यवहरणीयत्वेन। दर्शने च उभयं भाति घटो घटसवेदनं च, ननु अघटतन्निषेधने तत्र अवभाते, अनन्यत्रभाव इह विषयार्थः। युक्तिनिदर्शनवाहेतुर्निश्चीयमानाकारता हिशब्देन या द्योतिता सूत्रे, सैव **'तथाच'** इत्यनेन वृत्ति-

1 'प्रवर्तित' क.।

पदेन उपक्रान्ता। तस्य घटस्य अतस्य च अघटस्य च या प्रतिभा तां यो भजते अन्तर्गर्भीकरोति, तादृशेन प्रमात्रैव विषयतद्दर्शनादिपारतन्त्र्यमुज्झता स्वतन्त्रेणैव अतत्कारिवर्गं व्यपोहता तत्कारिणो यत् निश्चयनं घट इत्येवमाकारमयमसौ विकल्प उक्तः। **'हि'** इति यस्मादेवं विकल्पस्तस्मादहंप्रत्यवमर्शो न विकल्पः—इति पूर्वेण संबन्धः । यदिवा यस्मात्प्रमात्रैव इत्थं तन्निश्चयनं क्रियते,तस्मादुक्तचोद्यानवतरात् तन्निश्चयनात्मा घट इति विकल्पो गर्भीकृततद्व्याहननेन उपपद्यते,—इति संबन्धः इति सूत्रार्थः। **'एवकारः'** इति वृत्तौ। वृत्तिव्याख्याने च विवृतेस्तत्क्रमविकासरूपायाः प्राधान्यमित्यभिप्रायेण **'सूत्रेऽपि'** इति उक्तम्। ननु सर्वस्यैव प्रमातुः किमेवंरूपता, न इत्याह **'ईश्वर'** इति। अहमिति सामानाधिकरण्येन यतो वर्तते विशुद्धाहन्ता च सर्वसहा, ततो न भिन्नः संवेदनात् प्रमेयान्तराच्च अङ्गभूतश्च अवयवतुल्यः इदमिति पृथग्भावेन उन्मेषात्, एवंभूतो यः प्रमेयवर्गादेकदेशोऽपि ईश्वरप्रमातरि, स न अपोहनव्यापारमाद्रियते अचिरद्युतिवदस्य उन्मिषतोऽपि अप्ररोहात् । क तर्हि अस्य प्ररोहः। आह **'मायीयौ'** इति। **'पुनः'** इति ईश्वरावस्थातो विशेषकः। **'तत्र'** इति एवंस्थिते । ननु तत्रापि चक्षुर्व्यापृतौ निर्विकल्पत्वं सत्यपि विमर्शे **'तदानीं हि ऐश्वरो भावः पशोरपि'** इति सार्वात्म्यमुक्तम्, एतदाशङ्कितं **'सर्वात्मकत्वेऽपि'** इत्यनेन। कदा तर्हि विश्रान्तिरपोहने। आह **'विकल्प'** इति। **'पर्यवसानम्'** इति गाढत्वेन प्रतिष्ठा। अनेन निर्विकल्पदशायामपि अस्ति संस्कारयोगेन मायीयता, नतु सर्वथा नास्ति; ईश्वरताया एव हि नैर्मल्ये विषयत्वेनैव कथं समनन्तरविकल्पोदयनियमो भवेदिति दर्शितम्। **'तदा'** इति विकल्पकाले। **'विमर्शनेन'**

इति विकल्पनं गतेनेति भावः । एतदेवच स्फुटयति **'साहि'** इति । **'तथा'** इति मायीयः । **'तस्य'** इति मायीयस्य अपि । प्रमातृतामयो यः सविलक्षणः स्वभावस्तस्य यत् माहात्म्य महात्मता सर्वात्मता, ततो हेतोः । **'अपोह्यमान'** इति यस्य अपोहः करिष्यते इति भावः । स्वभावस्य मायीयत्वस्य च यो महिमा **'भेदकत्वेन'** इति परमात्मनि मायाप्रमात्रन्तरे प्रमेयान्तरे च परस्पर वर्तमानत्वेन पट्प्रकार एकयैव वृत्त्या विदग्धादशनदष्टविचित्राकृतिभागिताम्बूलीदलविषयखण्डनव्यापारसमानच्छेदनव्यापारस्तन्माहात्म्यादपोह्यमानः सन् प्रमातुः प्रमेयान्तराच्च विच्छिद्यमानः स्थित एव । **'अन्यत्'** इति येन इतरेतराश्रयादिदूषणानवकाशो भवेत् । तत एव आह **'पूर्वभावि'** इति । तत्कालोदिते हि निमित्ते निमित्तान्तरान्वेषणमवश्यभावीति स्यादेव अनवस्थादिदूषणम् । ननु अघट इति घटव्यतिरिक्तो विश्वः पदार्थराशिरपोह्योऽसौ पृथक् स्वालक्षण्येन अवभासते । नच तत्र अघटत्वं सामान्यमस्ति, सद्भावेऽपिवा तस्य न सवेदनमस्ति,–इति यो मुह्येत्, तं प्रबोधयति **'घटविपर्यय'** इति । चः शङ्काद्योतकः । घटविपर्ययः सामान्यरूपः । स यद्यपि एकघटार्थिना तदवभासनवशेन अनुपलक्षणादप्रतीत इत्यभिमानेन उत्प्रेक्षितस्तथापि वस्तुतः प्रतीत एव । सामान्यरूपतायां तावत् हेतुमाह **'नियत'** इति । ननु मा भूदस्यं विशिष्टं नियतं रूपं, पटादीना तु कथं तत्सामान्यम् । उच्यते पटादिरूपं यतस्तेन अवष्टब्धमनुगमेन आलिङ्गित, नच स्थूणयेव वंशचक्रवालम्, अपितु तदेकरूपत्वेन आरोपादभेदेन अध्यवसायात् । प्रतीतत्वे हेतुमाह **'उक्त'** इति । अन्यथा हि न नियतं प्रवृत्त्यादि भवेदिति

---

१ 'अर्थस्य' क. ।

उपपादितं यतः। उभयत्र प्रसिद्धं दृष्टान्तमाह दृश्ये स्वलक्षणे यदा सामान्यात्मा विकल्प आकारो नियतघटरूपाभावादित्या-दियुक्तिभिरस्ति, यथाच पृथगनवधारितोऽपि वस्तुतो[1]ऽवधारित एव, त(द्व)च्च अयमपि। नहि अत्र विशेषो विधिप्रतीतावेव सामान्येन भवितव्यं, नतु निषेधप्रतीताविति। आभासवस्तुता-वादो हि अयं, ततश्च कणादप्रक्रिया न अवश्यमत्र प्रमाणीक-र्तव्या 'अभावे चेत्सामान्यं समवेयात्[2], भावरूपता अस्य प्रसज्येत' इत्यादिः। तदुक्तं तत्रभवता

'व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः।'

(वा०प०३।१।११)

इति। उभयात्मताभासे तर्हि संशयात् निश्चयः कथं भिद्येतेति चोद्यं समाधातुं या वृत्तिः '**अतदपोहनेन**' इति, तां तात्पर्यतो व्याचष्टे स्फुटेन दृष्टान्तेन '**उभय**' इत्यादिना। निषिध्यमानत्वेन हि द्वितीयोऽत्र भाति, न तुल्यकक्ष्यतया दोलायमानत्वेन येन संश-यरूपता शङ्क्येतेति मन्यते। संशयस्य अपि तद्दोलास्पदवस्तुद्वयेत-रव्यपोहनयोगात् निश्चयरूपत्वेन विकल्पतैव नाम। '**शब्देन**' इति विकल्पनं विकल्प इति। '**धातुवाच्या क्रिया**' इति क्रियात्वेनैव अत्र प्रसिद्धिरिति यावत्। '**उक्त**' इति वृत्तिका-रेण व्याख्याते विशब्दार्थनिर्वचनमहिम्ना ॥ ३ ॥

ननु अहमिति प्रत्यवमर्शो न विकल्प इत्युक्तं, ततश्च शरीरे गौरोऽहमिति, धियि सुख्यहमिति, प्राणे क्षुधितोऽहं तृषितोऽह-मिति, शून्ये वीतसमस्तबाह्याभ्यन्तररूपोऽहमिति यो विमर्श-स्तत्रापि विकल्पत्वाभावेऽन्यो न अपोह्यते इति तेषां[3] परस्परेण प्रमात्रन्तरैः प्रमेयैश्च बहुशाखः संकरः प्रसज्यते इति स्वपरप्र-

१ 'वस्तुनः' ग.। २ 'समवायात्' ग.। ३ 'तेषां च' क.

विभागभङ्ग आपद्यते। अत्र आह श्लोकद्वयेन उत्तरं

चित्तत्त्वं मायया हित्वा भिन्न एवावभाति यः।
देहे बुद्धावथ प्राणे कल्पिते नभसीव वा ॥ ४ ॥
प्रमातृत्वेनाहमिति विमर्शोऽन्यव्यपोहनात्।
विकल्प एव स परप्रतियोग्यवभासजः ॥ ५ ॥

अहमिति विमर्शश्चित्तत्त्वमेव यद्यपि आलम्बते

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता ॥'

(अज०प्र०सि० २०)

इतिन्यायेन, तथापि तत् विहाय अनादृत्य उल्लंघ्य देहादौ भेदितेऽभिमानकल्पितेन नीलादिविषयप्रमातृताभिषेकयोगेन, नतु सकेतमात्रप्रभावेन[1] योऽहमिति विमर्शोऽवतीर्णः, स निर्विकल्पकभुवि या शुद्धा विमर्शरूपता तां तिरस्कारेण विधूय विकल्पावस्थाया विकल्पतामेव स्वीकुरुते यतः प्रतियोगिनः परस्य वस्तुभूतस्य अवभासानन्तरं जातस्तस्य व्यपोहनमवलम्ब्य। उल्लंघनभेदेन अवतरणी तिरस्करणीयेषु च उक्तेषु मायाशक्तिरेव भगवतः सबन्धिनी हेतुः, नतु यथाहुरपरे'अनित्याशुचिदुःखानात्मसु'इत्यनेन अनात्मनि आत्माभिमानस्य अविद्यामात्रहेतुताम्। सूत्रे **'मायया'** इति सर्वेष्वशेषु सवन्धनीयम्। वृत्तावप्येव, विमर्शो विकल्प एवेति दूरेण सबन्धः। **'अविद्यादि'** इति आदिग्रहणाददृष्टविशेष एकसामग्र्यधीनतादि च चिद्निमित्तान्तरम्? । स्वतन्त्रस्य भगवतो या परमभूमाविच्छा ऐश्वर्यशक्तिरुच्यते, सैव श्रीसदाशिवेश्वरदशायां परापरभुवि प्रसृत्य विभागेन ज्ञानं क्रिया च

---

[1] 'प्रभवेन' क ।

इति भेदाभेदनिष्ठेन वपुषा विजृम्भते, अपरभूमौ तु ते एव भेदपर्यवसिते मायाशक्तित्वेन निरूप्येते इति दर्शयति '**ज्ञान**' इत्यादिना। न सामयिकमात्रमहमिति शरीरेऽपितु ज्ञेये कार्ये च ज्ञातृकर्तृतामयस्वातन्त्र्यात्मकपरामर्शयोजनमेतत्, अपरथा गच्छामि—चलामि—तिष्ठामि,—इति स्वातन्त्र्यामर्शनमविच्छेदप्राणं कथं देहे संक्रामेत्। नहि अन्यस्य स्वातन्त्र्यमन्यस्य क्रियायै भवेत्। विच्छेदविमर्शे हि स्यादेतत्—अयं चलतु—इति। अविच्छेदेन तु गच्छामीत्यादिविमर्शः। एतत् दर्शयति हेत्वन्तरं वदन् '**इन्द्रिय**' इति। '**देहे**' इति व्याख्याय '**बुद्धौ**' इति व्याचष्टे '**सुखाद्यात्मन**' इति त्रैगुण्यात्मकत्वात्। '**ग्राहकावेशात्**' इति संवेदनतादात्म्यगमनादित्यर्थः। यदाह

'इदमेव हि नः सुखं यत् सातसंवेदनम्।'[1]

इति। ननु नीलादिवत् वेद्यमेव सुखादि अतश्चैव यत् प्रमेयस्य जडस्यैव धर्म इति बुद्धितत्त्ववादिना उपगतं तदिति यो ब्रूयात्, तं प्रतिब्रूते '**अन्यथा**' इति अहमितिविमर्शाभावे। तत एव चिच्छायोपरागवत्यां सुखाद्याकारायां बुद्धावहंकारः संवित्सुखादिरूपे अविवेकेन अभिमन्यमानो व्यवहर्ता सन् प्रीतिपरितापोत्थापकोऽभ्युपगतः। प्रीतिपरितापौ हि न बाह्यवस्तुनो रूपम्,—इत्यध्यवसीयते केवलं तत्। प्रीतिपरितापात्मकसुखादिजनकत्वेन सत्कार्यवादोपपत्त्या बाह्यस्य अपि तद्रूपत्वं व्यवस्थाप्यते। '**प्राणे**' इति व्याख्यातुं या वृत्तिः '**आन्तरे**[2] **वा स्पर्शे**' इति तां व्याचष्टे '**प्राणस्य**' इति। '**स्पर्शे**' इति स्पर्शनेन्द्रियगम्य इति आशयः। अन्यथा देहे चक्षुरादिगम्ये बुद्धिवृत्तौ च अन्तःकरणगम्यायामस्तु अहन्ताभिमानः, आन्तरे पुनर्वायौ केन अधिगते तथाभिमान इति शङ्क्यते। शरीरस्य

१ 'सातं' ग.। २ 'आन्तरं' ग.।

च अविषयीभूतस्य असत्यां भोग प्रति आधारतायां अहमिति भोक्तृत्वमारोपित, बुद्धेस्तु सत्या भोगं प्रति करणतायाम्। तद्वदेव आन्तरस्य स्पर्शस्य करणतायामेव सत्यां भोक्तृत्वमारोपितमिति निरूपयति '**न चात्र**' इति। अस्थि(क्षि)शूले हि वायुना अक्ष्णोऽभिघातजनिततीव्रमर्मस्पर्शो दुःखवेदनादायी येन तत्र करणतास्पर्शः। '**आन्तरत्वम्**' इति अबाह्यत्वम्। '**यावत्**' इति अन्तरङ्गत्वादपि आन्तरत्वमिति आशयः। सर्वाणि इन्द्रियाधिष्ठानानि व्याप्नोति, तत एव त्वगेव एकमिन्द्रियमव्यतिरेकादिति मन्यन्ते। ततोऽयं प्राणः सर्वतो देहादेरुत्कृष्टः सकलकरणमार्गाधिष्ठानात्। '**अत एव**' इति अहमिति यतः प्रमातृरसेन अयमभिषिक्तस्ततो हेतोर्न आन्तरो वायुर्नासिकामुखाभ्यां प्रवेशनिःसरणधर्मा यः, स एव प्राण इत्युच्यते, अपितु तत्र अधिकं रूपमस्ति,—इति अपिशब्दः। जीवतीत्येवं जीवनशब्दवाच्यो यत् प्रमातुर्हंसस्य सतो व्यापारात्मा, सा प्राणनक्रिया लक्षणोक्ता प्राणाख्ये प्रमातरि अस्ति। कीदृशी असौ क्रिया। आह—सर्वाभिरिन्द्रियशक्तिभिरनुस्यूतं यत् पुर्यष्टकं, तस्य सबन्धिनी। अत्र च विशेष्यद्वारेण विशेषण बोद्धव्यम्। तदनुवेधकत्वेन वर्तमानानामिन्द्रियशक्तीना सबन्धिनी साधारणा आन्तरी याऽसौ वृत्तिः

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च।' (सा०का०२९)

इति निरूपिता, सा यस्मिन् प्रकृता फलत्वेन प्रस्तुता। '**अत एव**' इति यत एवंरूपोऽसौ व्यापारस्तत आन्तरत्वं सर्वानुवेधकमपि अभिमतम्। यतः प्रमातुः शक्तिरूपाणि यानि

१ 'च विषयी' ग। २ 'तप' क ग.। ३ 'अभिशिष्ट' क। ४ 'तदनुबोधक' क. ग.। ५ 'एव वा' ग.।

इन्द्रियाणि प्रमाकरणानि यद्योगात् प्रमाता, तेषां या भूमिरन्तर्मुखरूपं; तत्र अवस्थितोऽसौ व्यापारः। तेन अबहीरूपत्वादन्तरङ्गत्वात् सर्वानुवेधकत्वाच्च आन्तरत्वं प्राणस्य,—इति तात्पर्यम्। **'प्राणे'** इति विचार्य **'कल्पिते नभसि इववा'** इति व्याचष्टे **'अथवा'** इति। सर्वो य एवंसंवेद्योऽन्तःकरणबहिष्करणगम्यत्वेन प्रसिद्धो बुद्धिदेहप्राणलक्षणोऽर्थस्तस्य यो निषेधः

> 'तथा हि वेद्यते यद्यत् तन्मध्येऽहं न कश्चन ।
> अपित्वेतद्विविक्तोऽस्मि················॥'

इतिनयेन, तदभावमात्रं न अन्तःकरणस्य सुखादिवस्तुवत्, न बहिष्करणस्य नीलाद्यर्थवत् विषयोऽविषयत्वादेवच कल्पितो विकल्पनमात्रपरमार्थस्तथैव वस्तुभूतस्तत्र योगिनोऽहमितिविमर्शः। शून्ये च वेद्यीकृते शून्यान्तरमेव योगिनः प्रमातृ, तत्रापि अन्यदिति यावदयं भेदग्रहः, तावत् कल्पना न विरमति, नच अनवस्था। शुद्धप्रकाशस्यैव हि वस्तुतः प्रमातृता, देहादौ तु तथाभिमानमात्रं, पर्यन्ते च संकोचमात्रमेव चिद्रूपं शून्यम्। **'शून्यत्वम्'** इति च **'तुच्छं रूपं तत्'** इत्यत्रैव संबन्धनीयम् **'तस्य'** इति अक्षसंवित्त्यभावस्य स्फुटीकरणाय। आकाशं हि न सर्वथा तुच्छं तद्वादिनां मते। **'तदेवच'** इति शून्यत्वम्। **'अत एव च'** इति यतो न सर्वात्मना तुच्छं तदाभासमात्रत्वादाभासस्यैव च वस्तुत्वात्, ततः। **'अस्य'** इति शून्यस्य। **'वस्तुता'** इति न केवलं वस्तुत्वमाकाशसाम्येन उक्तं, यावद्व्यापिता चेति व्यापित्वमपि उक्तम्। ननु शून्यस्य किं व्यापकत्वम्। नभसो हि सर्वसंयोगिसंयोगाश्रयत्वमेव वैभवं, नच शून्यस्य तदस्ति

१ 'प्रकाशतैव हि' क.। २ 'तुच्छतद्' ग.।

अद्रव्यत्वात् । अत्र आह **'महाविषयता'** इति । सा च[1] कथम् । उच्यते सर्वोऽर्थो यतो वेद्यरूपस्तत्र निषेध्यस्ततो निषेधस्य महान्विषयो, न तादृगस्ति यत्तेन महानिषेधेन न स्पृष्टम् । यथोक्त

'यद्यत् सवेद्यते किंचित् नच तद्रूपमिष्यते ।'

इति वीप्सया हि सर्वमत्र निषेध्यमिति दर्शितम्[2] । महाविषयतैवच प्रातीतिकं व्यापकत्वं, नभसोऽपि हि तदेव वैभवं स्वप्रक्रियो-पारोहणाय तु सर्वसयोगिसयोगाधारत्वमित्येवमुक्तम् । नच अस्य व्यापकत्वमपूर्वमिति दर्शयति **'एतावदेवच'**[3] इति न तैरविक दृष्टम् । सयमात्मानो नेति नेति हि वीप्सया सर्वनिषेध-स्वभावत्वादेव बृहत्त्वेन अभावमेव ब्रह्म मन्यन्ते केचन ।

'शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।

आत्मसस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥' (गी० ६।२६)

इति । अत्र हि सकलचिन्त्यविविक्ततैव तावदात्मतत्त्वमिति उप-पादितमधरभूमिकापरित्यागं तावदाद्रियन्तामित्याशयेन[4], न-तु तदेव परं तत्त्वम् । इदमेव दर्शयितुं श्रीस्पन्दशास्त्रे

'नाभावो भाव्यतामेति ·· · ······ ।' (१२)

इत्यादिना

'अभाव भावयंस्तावद्यावत्तन्मयतां व्रजेत् ।'

इति अभावब्रह्मवादिमतं दूषितम् । यत् किल स्मर्यते, तत् कालालि-ङ्गितं वेद्यं च शून्यं च एवंभूतोऽहमकिञ्चिद्रूप आसमिति देहादि-प्रमातृतावतरणे स्मर्यमाणत्वेन । **'तथा'** इति वेद्यमेव तत् वेदकी-कृतं देहादिवदेव, अहंप्रकाशस्तु सततानस्तमितः स्वतो निर्विच्छे-दत्वात् न स्मरणार्हः इत्युपपादितमादिसिद्धसूत्रे[5]—प्रमातृशून्यता

---

१ 'सापि' ग. । २ 'दर्शित' क. । ३ 'एतदेव च' ग । ४ 'अभ्या-येन' क. । 'अन्यादायेन' ग । ५ 'आदिसूत्रे' ग. ।

न कदाचिदुचिता—इति उपपादयता शास्त्रकारेण । एतदुपसंहरति **'एवम्'** इति । तस्मिन् तस्मिन् निजनियतरूपे शरीरादौ यावदाभासमानत्वं, तावदेव तस्य शरीरादेरवश्यं प्रतियोगिनः सकाशादपोहः क्रियते,—इति यो वृत्त्यर्थः,स नियमितशब्देन विवृतः । **'घटोऽयमितिवत्'** इत्यनेन व्याप्तिरुक्ता वृत्तौ, देहादावहमितिविमर्शो विकल्पः प्रतियोगिव्यवच्छेदप्राणत्वात् , विकल्पस्य हि तावन्मात्रलक्षणकत्वं व्यापकमिति वितत्य प्रसाधितमिति स्वभावहेतुः । **'प्रतियोग्यपोहनकरणात्'** इति या वृत्तिस्तां तत्त्वतो विचारयति **'एषां च'** इत्यादिना । तथाहि प्रतियोगी देहस्य यथा घटादिः ,तथा बुद्धिप्राणशून्यान्यपि । नच शरीरप्रमातृताभिमानसमये बुद्धिप्राणादीनामपोहनं संवेद्यते, कामं शून्यस्य संवेद्यते, बुद्धिप्राणयोस्तु तदेकतावेशो लक्ष्यते प्रत्युत य एव अहं स्थूलः,स एव सुखी क्षुधित इति प्रत्ययात् । तदयं प्रतियोग्यपोहो विमर्शनीय इति शङ्कायामयं ग्रन्थः । **'एषां च'** इति निर्धारणे षष्ठी । शरीरमत्यन्तमननुवर्तमानमिति प्रमातृता तत्रापि निकृष्टा,—इत्याशयेन पार्यन्तिकीकृतम् । ननु यदि उत्तरं पूर्वावियोगि, तर्हि पृथग्भूतं तत् पूर्वमुत्तरस्मात् प्रमातुरिति कथं सिध्येत् । अत्र आह **'पूर्वः पूर्वः पुनः'** इति एकतोमुखेऽपि च व्यभिचारे नभःपवनयोरिव सिद्ध एव पृथग्भाव इति भावः । अव्यभिचारं व्यभिचारं च ग्रहणकवाक्यद्वयदर्शितं क्रमेण विभजति **'तथाहि'** इति । ननु पृथक्त्वे वास्तवे सति कस्मादेवमित्याह **'अयमेव'** इति । हि यस्मादनात्मनि वेद्ये यदात्माभिनिवेशस्य प्रमातृत्वगाढाभिमानस्य स्वरसवाहिनो विवेकमात्रेण अपसारयितुमशक्यस्य अवतरणमवरोहणमूर्ध्वरूपशुद्ध-

२ 'निवेश' क. ।

सवेदनभूमित्यागेन अधरभुवि वेद्यरूपायां निपतनं, तत्र अयमेव शून्यप्राणबुद्धिदेहाभिधानभूमिकापरिग्रहः पूर्वपूर्वयोगेनेति ईदृश एव क्रमः। तथाहि वेद्यरूपेऽपि नभसि सर्वावकाशसहिष्णुत्वं व्यापकत्वं चेति न अत्यन्तमिव जडता, ततो वैभवरहिते वायौ स्पन्दशक्तिमये गगनावियोगिनि नीरूपे, ततो रूपवति प्रकाशमये तेजसि, ततः प्रकाशशून्ये परप्रवेशक्षमे अम्भसि, ततोऽपि परप्रवेशासहिष्णावतिघने स्थूले पार्थिवे अत्यन्तजडे प्रमातृताभिमानः क्रमेण निकर्षदशामधिशेते। तत्र केवलशून्यस्य अयोगिभिरव्यवहार्यत्वात् लोकापेक्षया स्पर्शमयस्य प्राणस्यैव परिगृहीतशून्यानुवेधस्य तेजःसवन्धाविव्योपन्नतचराचरदग्धृत्वस्य प्राथम्यमुच्यते। तेन संविदः परिणामो हस्तिन इव तटे गाढेन अभिनिवेशेन अनात्मनि वेद्यरूपे सक्रमणम्। स देहाद्यपेक्षया पूर्वं प्राण इत्युच्यते, अन्तःकरणस्य सकल्पनाभिमननिश्चयनवृत्तिमयस्य तत्त्वम्। यदनुग्रहादेवंविधवृत्तिलाभः, तत् चित्तत्त्वं, तस्य वायुः प्राण आश्रयत्वमधिष्ठेयत्वं गतः। तथाभूतेन संवित्तत्त्वाधिष्ठितेन प्राणेन बुद्धिरूपपुर्यष्टकसाहित्यभाजा यतोऽधिष्ठितं शरीरं, ततश्चेतनोचितस्वातन्त्र्ययोगोऽस्य, नतु साक्षात्संवेदनेन अधिष्ठितं तत्। तथा च उक्तं

> 'प्रकाशरूपो भगवान् प्राणाधिष्ठान उच्यते।
> प्राण एव सगो धर्मो हंसश्चेति त्रिवाहनः॥'

इति। अत एव

> 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
> गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥' (१५।८)

इति भगवता गीतासु[2] संविद्रूपस्य ईश्वरस्य प्राणपुर्यष्टकाधिष्ठान-

१ 'घने पार्थिवे' ग.। २ 'भगवद्गीतासु' ग.।

द्वारेण देहाधिष्ठानत्वमुक्तम् , स्पन्दशास्त्रेऽपि गुरुणा

'यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम् ।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥
लभते······················ ।' (का० ७)

इत्यत्र 'सहान्तरेण चक्रेण' इति । तत एव देहस्य भस्मीभावेऽपि स्वप्न इव शयनैकनिमग्नतात्मकव्यामोहदशायोगेऽपि चेतनाधिष्ठितप्राण-क्रोडीकृतस्य पुर्यष्टकस्य तादवस्थ्यात् परलोके देहान्तराधि-ष्ठानद्वारेण भोगो न दुःसमर्थः । दृश्यन्ते च भूयसा योगिन्यः स्वशरीरे स्वगृहावस्थिते एव स्वतन्त्रीकृतप्राणगमागमयोगेन देहान्त-रगतेऽपि वस्तुनि ज्ञानक्रियायोगिन्यः । स्वतन्त्रीकरणे च युक्तय उपदिष्टा एव । यत् किल शिवसूत्रं

'ब्रह्मपदे कमलशरीरस्तदुत्थप्राणिरूपेण सर्वत्र सर्वदा विचरति ।'

इत्यादि । तदलमनेन । सर्वथा तावत् देहप्राणयोः पृथग्भाव एव । यदाह मुनिः

'सहवर्धितयोर्नास्ति संबन्धः प्राणकाययोः ।'

इति, सम्यग्बन्धोऽत्यन्ताविद्योग इति यावत् । तथाच कक्ष्या-स्तोत्रं

'भग्नो भ्रमोऽयं भवता विचित्रां
स्वप्ने विदेहादिगतिं प्रदर्श्य ।
देहे गते भस्ममये परत्र
कीदृक्······················ ॥'

इति । यथाच अयमवतरणे भगवन्नियतिशक्तिमहिम्ना क्रमः, तथा अधराधरभूमित्यागेन ऊर्ध्वरूपारोहणलक्षणं यदुत्तरणं तत्रापि अयमेव क्रम इति दर्शयति '**तथा**' इति । शरीरभूमिका-

वस्थितस्य एतच्छरीरगतं स्थौल्यं सौक्ष्म्यं च

'परममहद्वा शरीरमण्डपर्यन्तम् ।'

इति

'परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ।' (यो०सू० १।४०)
इति च नयेन भावयतो वितर्कविचारौ, ततोऽपि आनन्दास्मिते।
त्रैगुण्येऽपि बुद्धेः सत्त्वप्राधान्यं सत्त्वपदे च दर्शयन्नानन्दस्य सत्त्ववृत्तिरूपस्य तस्मिन् पदे प्रमेयत्वेन आस्वाद्यतामाचक्षाणो नेय परमानन्दभूमिरिति निरूपयति । **'तत्'** इति शरीरं बुद्धि-सत्त्वं च,—इति उभयं न अपेक्षन्ते सदपि न आद्रियन्ते । अत एव शरीरभूमिवर्तिनामिन्द्रियाणामनादरणात्[1] न शब्दादिभोगः, नच सुखोपभोगो बुद्धिमत्त्वस्य अपि अनादरणात् । तदशेषभोगाभावाच्च अस्मितामात्रमेव तत्र स्फुरति, ननु न किञ्चिद्रूपं तत् भवति शून्यभूतस्य प्राप्तेः, नच शुद्धचिद्रूपं तदिति वेद्येन तेन शब्दाद्यन्यतमेन भवितव्यम् । स्पर्शरूपं तत्र प्राणभूमौ वेद्यम् ॥५॥

ननु प्राणनाभूमौ प्राणादिपञ्चककर्मेन्द्रियबुद्धीन्द्रियान्तःकरण-वर्गत्रयमिति पुर्यष्टकरूपता, तत एव

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ।' (सां०का०२९)
इति उक्तम् । तत्र इन्द्रियान्तरसद्भावात् रूपादेरपि कथं न वेद्यतेत्याशङ्क्य उक्तं **'स्पर्शनप्राधान्यात्'** इति । ननु तस्यामवस्थायामवश्यं निश्चयमात्रे[2] वा अभिमानमात्रे वा विश्रान्त्या भवितव्यं, नच बुद्ध्यहंकाराभ्यां स्पर्शनस्य[3] परिग्रहः । अत्र आह **'तदा च'** इति । तस्यां दशायां पुर्यष्टकावशेषतारूपायां स्पर्शनेन्द्रियस्य अपि सूक्ष्मतया सम्भवो न विरुद्धः । स्पर्शनवच्च बुद्ध्यमप्यस्ति,— इति दर्शयति **'महाभूतवायुरूपतया सूक्ष्मतया सं-**

१ 'मनादरणात्' क । २ 'निश्चयमात्रे' ग । ३ 'स्पर्शस्य' क ।

**भवः**' इति। ननु इयति किं महाभूतानां संभवोऽस्ति। अस्ति,–इत्याह '**नावस्थायामपि**' इति। अपिशब्दः परापरदशाया-मपरदशायां च केयमसंभावना,–इति द्योतयति।

'सद्योजातस्तु पृथिवी आपः स्याद्वामदेवकः।
तेजोऽघोरो नरो वायुरीशानो व्योम कीर्तितम्॥'

इति हि पठ्यते। चिदानन्देच्छाज्ञानक्रियालक्षणमेव हि शक्ति-पञ्चकं क्रमेण प्रसरमासादयत् सप्तपञ्चकानि दर्शयति '**अविभा-गेन च आस्ते**' इति षट्त्रिंशत्तत्त्वात्मना आस्ते इति। उक्तं श्रीकालपादादौ

'पृथिव्यापस्तथा तेजो वायुराकाश एवच।
पञ्चैतानि तु तत्त्वानि यैर्व्याप्तमखिलं जगत्॥'

इति। वितनिष्यते च एतदागमाधिकारे। ननु यदा इन्द्रियेषु अनात्मसु आत्मबुद्धिस्तदा कथं शब्दाद्यन्यतमता, न खलु इन्द्रि-याणि कस्यचित् निजेन वपुषा वेद्यानि येन तेषु आत्माभिमानो भवेत्। एतेनैव आशयेन आह '**विशिष्टानाम्**' इति। प्राति-स्विकेन वपुषा न तानि संवेद्यानि। अहङ्कारशक्तिरूपत्वेन हि तानि व्यवस्थापितानि आगमेषु। ननु संसारिणां बुद्ध्यहङ्कारयो-रस्ति आत्माभिमानः, तत्र च कथं शब्दादिरूपता। आह '**बुद्धिः**' इति। परतत्त्वे यत् ज्ञानक्रियामायाशक्तित्रयं, तदेव वेद्यप्राधान्यं भजमानं सत् सुखदुःखमोहात्मकं गुणत्रयमिति वक्ष्यते

'स्वाङ्गरूपेषु भावेषु पत्युः.........।' (४।१।४)

इति। ननु योगिनामिन्द्रियाणि प्रातिस्विकेन वपुषा वेद्यान्येव, तत्र कथं शब्दादिरूपता; किंच सुसूक्ष्मत्वसूक्ष्ममपेक्ष्य तत्र

---

१ 'यन्' क-ग.।

सूक्ष्मरूपत्व शब्दादीनामित्याशङ्काद्वयमेकेन यत्नेन निराकरोति **'योगिनामपि'** इति । आहङ्कारिकत्वेऽपि अक्षाणा प्रतिनियतविषयतासिद्ध्यै तत्तच्छब्दादिप्रकृतत्वविशिष्टादहङ्कारात् तत्तदिन्द्रियप्रसरोपगमः,- इति भौतिकत्वमविरुद्धमेपाम् । ननु सुखाद्यनुभवे कथं शब्दादिसद्भावः । आह **'विपयानुपक्तमेव'** इति । गीतमेव हि तथाभूतमास्वाद्यते कण्टकस्पर्शो वा । सौपुप्ते तर्हि कथम् । आह **'सुपुप्त'** इति । **'अन्ततः'** इति । रमणीकुचकलशस्पर्शादिमय तावत् निद्राया सुख, तदभावेऽपि स्वशरीरान्तर्वर्तिस्वस्थस्वभावप्राणवायुस्पर्शमय सुखं, अत एव अस्वस्थप्राणवायुस्पर्शो दुःखात्मा, निद्रायां तमःसपिण्डितप्राणमयत्वे मोहात्मा । तदाह गुरुः **'सुखमस्वाप्सं प्रसन्नं मे मनः'**इत्यादि । सुखग्रहणं टीकायां दुःखमोहावपि उपलक्षयति । ननु वेद्यस्फुटशब्दादिसमुत्तीर्णे किमस्ति सवेदनम् । सत्यमस्ति, ननु तदानीमनात्मनि आत्मावेशः । एतदाह **'उत्तीर्णत्वे तु'** इति । शब्दादेर्वेद्यादुत्तीर्णे यदा भवति प्रशस्तमितमायीयविद्याकलासकोचत्वात् बुद्धिकर्मेन्द्रियान्तःकरणव्यापाराभावे सहजाया ज्ञानशक्तेरुन्मेपात् हेतोः सवेद्यभुवं त्यजति यतस्तदा बोधस्य स्वानन्दविमर्शमयः स्वयं प्रकाशः इति सुपुप्तोत्तीर्णा सा व्यपदेशान्तरासहिष्णुतया तुर्या दशेति उच्यते, न सुपुप्तावस्था । ननु वेद्योत्तीर्णतादशाया यदि तुर्यदशा न सुपुप्तत्वं, तर्हि सुपुप्ते यत्

'सवेद्यमपवेद्यं च' ' ··· ··· ।' (३।२।१५)

इति वक्ष्यते, तत् व्याहन्यते इत्याशङ्क्य आह **'स्थूल'** इति । स्थूले शरीरे या अस्मिता, तस्या त्यक्ताया प्रमाणविपर्ययविकल्पनिद्रास्मृतिलक्षणाना सर्वासां चित्तवृत्तीना निरोधेन उपल-

---

१ 'विपये' क. । २ 'यथा' क ।

क्षिता या शून्यावस्था; सा तावन्मात्रैव स्थूलरूपशून्यतैव, नतु शरीराद्युत्तरं यत् प्राणादि, तच्छून्यता असौ, यतः स्थूलशरीरशून्यता नाम प्राणादिरूपमेव भूतलमिव घटाभावरूपता, ततश्च तस्यां शून्यतायां न तुर्यता शून्ये वेद्य एव अनात्मनि आत्मताभिनिवेशात्, अपवेद्ये तु वेद्यत्वेन प्रसिद्धस्य शब्दादेरस्य स्थूलरूपभाक्त्वेन असंवेदनात्, सूक्ष्मतया तु शब्दादेः परावस्थायामपि संभव एवेति उक्तम्। एतमेव आशयं रूपशब्देन आविष्करोति। एतदागमेन संवादयिष्यन् व्यतिरेकद्वारेण कथयति **'अन्यथा'** इति। यदि शून्यमपि तदा वेद्यतया न अवशिष्येत, तर्हि वेद्यं सर्वथा तुच्छीभूतं प्रख्योपाख्याविरहादिति वेदकतैव निःसपत्ना,–इति कथमियं सुषुप्तदशा भवेत्। तुरीयदशैव हि साम्यार्थः [सा स्यात्]। यदा तु शून्यरूपमेव वेद्यमस्ति, तदा तथात्वमिति सुषुप्तरूपत्वमुपपद्येत। **'अत एव'** इति। यतो निवृत्तिर्नाम शून्यरूपा वेद्या, नतु वेद्यवर्गस्य सर्वथा तुच्छता निःसपत्नवेदकमात्रस्वभावा; ततो हेतोः, श्रीरौरवसूत्रसंग्रहे

'अथात्ममलमायाख्यबन्धत्रयनिवृत्तये।'

इति निरूप्य

'व्यक्तये तु शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते।'

इति शिवत्वव्यक्तिः प्रयोजनान्तरत्वेन उक्ता। तुर्हेतौ यतो न मलनिवृत्तिरेव शिवत्वव्यक्तिः। तथाहि कार्ममलस्य

'कर्तर्यबोधे कार्मं तु············।' (३।२।५)

इति वक्ष्यमाणस्य निवृत्तिरिति परमार्थतो मायीयाणवमलद्वयमेव

---

१ 'अपवेद्यत्वे तु' ग.। २ 'उपपद्यते' ग.।

उच्यते। व्यवहारतश्च तत्र प्रतियोगित्वेन स्फुरन् कार्ममलोऽपि भाति । तथाहि भूतलमेव घटाभावो वस्तुतो व्यवहारतश्च घटो निषिध्यमानः स्फुरति सर्वथा घटस्य प्रख्या नोपाख्येति यदेतद्रूपं, तत् न किञ्चिदेव, ननु तद्घटाभाव इत्यपि किंचित्, अखिलवेद्यविनिर्मुक्तशुद्धवेदकप्रकाश एव हि सः। एवं मायीयस्य

'भिन्नवेद्यप्रथात्रैव मायाख्यम्......।' (३।२।५)

इति निरूपयिष्यमाणस्य निवृत्तावाणवमलमेव परमार्थः, व्यवहार्ये च निषिध्यमानत्वेन मायीयम्। ननु

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।' (३।२।४)

इति यत् सहजं मलद्वयवत् मलान्तरानपेक्षं मलद्वयोल्लासकमीशशक्तेरिदंपूर्वत्वाभावादनादिभेदावभासनरूपं मायीयं च धर्माधर्मलक्षणं च कार्ममलं तदायत्तमिति कृत्वा अनपेक्षणीयं यत् आणवेन, अतस्तदुभयापेक्षया तत् नैसर्गिकम्। तस्य निवृत्तौ यद्यपि मलान्तरं न अवशिष्यते, तथापि क्षयोन्मुखत्वं क्रमेण क्षीयमाणत्वं वितत्य क्षीणत्वेऽपि तत् क्षीणमिति प्रख्यायां प्रतियोगितया वासनाशेषत्वेन अवस्थानं, ततः संस्कारयोगात् संकोचवासनाकालुष्यं यत्सविदस्तेन अनेकविधं

'उदितं विपुलं शान्तं सुप्रसन्नम्...... ।' (मा०वि०२।४५)

इत्यादिभेदैः सुषुप्तभूमिकावैचित्र्यमन्तराले यत् उत्तिष्ठति, ततो हेतोर्झटित्येव तद्रूपं न स्फुरति शुद्धसंविल्लक्षणं यत् सर्वमलानां **'सर्वथा'** इति सर्वेण प्रकारेण संस्कारावशेषताया अपि असंभवे सति सर्वात्मना तुच्छरूपत्वमिति भण्यते। आणवमलनिवृत्तावपि एवम्। यत्र सुषुप्तिभूमिका, ननु तुर्यरूपता, तत्र तदपेक्षया प्रथमायां सुषुप्तभूमौ स्फुटमेव तुर्यत्वमिति दर्शयति **'प्रथम'** इति। स्वशक्तेः स्वातन्त्र्यबोधस्वभावाया ज्ञातृकर्तृत्वलक्षणाया यदप्रका-

शनं परिपूर्णेन अन्योन्यावियुक्तेन स्वभावेन अप्रथनमख्यातिलक्षणं, तदात्ममलं स्फुटमेव अस्ति,—इति संबन्धः। ननु एवं स्वशक्त्य-प्रकाशनस्य निवृत्तिः स्वशक्तिप्रकाशनं, तत्र च कथं सुषुप्तता येन उक्तं **'सहजस्याणवस्य निवृत्तावपि'** इति। एतत् परिहरति **'क्रमेण तु'** इति। शिवत्वव्यक्तिलक्षणा हि क्रिया पूर्वापरीभावेन वर्तमाना मलनिवृत्तिलक्षणां क्रियां क्रमेण उद्भव-न्तीमपेक्षते इति। यथा यथा मलस्य क्षयस्तथा तथा प्रकाशस्य व्यक्तिर्यावत्सर्वावरणमलापेतस्य ज्ञानस्य आनन्त्यात् ज्ञेयमल्प-मिति स्थित्या मलस्य संस्कारमात्रेण संभव इति शुद्धत्वेन सुषुप्तता युक्तैव। तुर्यता तर्हि का। उच्यते, त्रयाणामपि मलानां न कथं-चिदपि प्रख्योपाख्ये यदा, तदा अवस्तुरूपा तेषां या तुच्छता; सा वेद्ययोगेन कर्मबन्धेन संकोचेन च कालुष्यांशेन विनिर्मुक्तं शुद्ध-मेव संविद्रूपं भगवत आत्मामिति। आगमाधिकारे हि वितत्य एतत् चिन्तयिष्यते। एवमुत्तरणक्रमोऽपि नियत इति यदुक्तं, तत् निर्णीतम्। तथाहि विचार[वितर्का]वस्थे देहे, आनन्दावस्था बुद्धौ, अस्मितावस्था प्राणे इति चतुर्विधसंप्रज्ञातयोगस्वरूपमुक्तम्, ततोऽपि शून्यभूमौ विचित्रप्रकारायां विरामप्रत्ययाभासयोगे तारतम्येन असंप्रज्ञातयोगस्वरूपम्। इयति सबीजावस्था, तुर्य-भूमौ तु निर्बीजः समाधिरिति। प्रकृतं कारिकार्थमुपसंहरति **'इदं तावत्स्थितम्'** इति। **'सर्वदशासु'** इति जाग्रत्स्वप्नसुषुप्त-लक्षणासु। **'अतोऽपि च'** इति सुषुप्तरूपायाः। **'शुद्धप्रमातृ-पदे'** इति तुर्यदशायाम्। **'अत एव'** इति यतः शरीरादेः पूर्व-पूर्वाविनाभाविता, तत इत्यर्थः। यदि हि शरीरस्य प्रमातृता प्राण-पुर्यष्टकादिसंस्पर्शशून्यस्यैव भवेत्, तदा भस्मीभूते शरीरे कस्य पर-लोकित्वं चिन्त्यते इति परलोकिनोऽभावात् परलोकाभाव इति

वदन्तः शोभेरन् । ननु एवमपि स्त्रीबालमूर्खादीनां शरीर एव प्रमातृताभिमान इति तान् प्रति इदमर्थवत् भविष्यति । न,–इत्याह **'शरीर'** इति । नहि तेषामपि गौरोऽहमित्येव अभिमानः, अपितु सुख्यहं, बुभुक्षितोऽहमिति बुद्धिप्राणाद्यपि स्फुरति प्रमातृतया, नच शरीरस्यैव इदं वपुरिति निर्णीतमन्यत्र

'नच शरीरमेव बुद्धिस्तद्दर्शनेऽपि बुद्धिविकल्पे संशयात्' इत्यादौ । ननु प्राणादेरपि अपूर्वस्यैव देहवदुत्पत्तिर्भविष्यति,– इत्याशङ्कां परिहर्तुमाह **'तथाहि'** इति । एतच्च

'पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः । प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् । वीतरागजन्मादर्शनात्' ( न्या० सू० ३।१।१९,२२,२५ )

इत्याद्युद्देशेषु मुनिभिरेव निर्णीतार्थम् । शरीरभेदकृतमेतत् भविष्यतीतिमोहमपोहति **'शरीरितासाम्येऽपि'** इति । एतच्च **'तदतद्रूपिणः'** इत्यादिस्थानेषु निर्णीतमन्यैः । क्षणभेदश्च न कार्यभेदात्, अपितु सतानभेदादेव,–इत्यपि विमृष्टं पूर्वैरेव । **'प्रतीयन्ते'** इति । अद्यत्वे भावनां विनैव पारावतानां रागित्वम्, उरगाणां कोपनत्वमिति हि दृश्यते एव । **'एषाम्'** इति रागादीनाम् । **'निर्हेतुकत्वमेव'** इति । भावना हि तेषां हेतुत्वेन । एतज्जन्मनि दृष्टे सा चेत् न हेतुरापतितमहेतुकत्वं, तथाच देशकालस्वभावनियमायोगः । शास्त्राणां परलोकयुक्तिप्रसाधनप्रधानानां बहुत्वात् प्रतिशास्त्रं भूयसीभिर्बह्वीभिः साधितमिदमिति वक्तुं **'शतशः'** इति वीप्सा । शतमिति अनेकोपलक्षणं, बह्वीभिर्युक्तिभिरिति यावत्, नच एतदिति प्रकृत प्रमेयमिति दर्शयति **'चिन्मात्रस्य तु'** इति सकृदवभातत्वेन अविच्छिन्नत्वात्[1] कालास्पर्शः, स्वप्रकाशत्वेन अन्तर्मुखत्वात्

---

1 'अनवच्छिन्नत्वात्' क. ।

देशास्पर्शोऽपि । आदिग्रहणेन परलोकगतं स्वर्गनरकादिभोगजातमाह । एतद्धि सर्वं प्राणपुर्यष्टकनिष्ठमेव ॥ ५ ॥

इह अयमहंप्रत्ययः शुद्धश्च अशुद्धश्च प्रत्येकं द्विधा अनुभवानुसन्धिभेदात्, तत्र शुद्धः शिवात्मनि अनुभवस्वभावोऽहमिति, सदाशिवभूमावनुसन्धिरूपोऽहमिदमिति, सोऽयमुभयोऽपि प्रतियोग्यवच्छेदविश्रमशून्यत्वात् विकल्पताविनिर्मुक्तः शुद्धविमर्शस्वभाव एवेति उपपादितम् । अशुद्धस्तु देहादावहमित्यनुभवस्वभावोऽपि प्रतियोग्यवच्छेदविश्रान्तिशरीर इति विकल्प एव असौ, न शुद्धो विमर्शः इत्यादि निरूपितम् । अशुद्धोऽनुसन्धानात्मा तु योऽहमिति प्रत्ययः, तत्र देहावस्थानां भेदात् न इदं तद्विषयपरामर्शनम्, अपितु संविन्मात्रमस्य विषयः । तद्धि नित्यमेकमिति । यदिवा स्थिरमेव शरीरमनेन साक्षात्क्रियते । उभयथापिच न विकल्पता काचित्,—इति व्यामोहापसारणाय सूत्रान्तरम् । अथापि देहावस्थाविषयोऽयमहमितिप्रत्ययस्तथापि देहावस्थाभेदैकीकरणस्फुरणादभेदसारतां स्पृशन् कश्चित् विमर्शमात्रतां शङ्केत अपरः, तं प्रति च सूत्रं

कादाचित्कावभासे या पूर्वाभासादियोजना ।
संस्कारात्कल्पना प्रोक्ता सापि भिन्नावभासिनि ॥ ६ ॥

'देहे बुद्धौ' इत्यादि पूर्वसूत्रादनुवर्तते । यदिवा विशेष्यविशेषणानुपादानादेतद्विशेषणयोग्यं देहादि लभ्यते एव अनियतं, एतदाशयेन वृत्तौ बहुवचनम् । तत्र च अयमर्थः[1]—घटाद्यनुसन्धेरपि विकल्पता समर्थिता भवतीति । कादाचित्कोऽवभासो यस्येति उपलक्षणं, कौत्रचित्कः कार्थचित्कोऽवभासो यस्येति च । अनियतकालदेशाकारे स्वलक्षणात्मनि देहे युवरूपे पूर्वा-

१ 'अयमाद्यर्थः पटा तु' क. ।

भासेन बालदेहाभासेन पूर्वनाम्ना च चैत्र एव अहमिति, तथा भविष्यतापि स्थविराभासेन, प्राणेऽपि क्षुधिताभासेन तृषिताभासेन दुर्बलादुर्बलाभासेन च, बुद्धावपि सुखित्व-दुःखित्वाद्याभासेन, शून्येऽपि परिमितापरिमिताभासभेदेन मूर्छा-समाधानाद्याभासान्तरैश्च सह योजना तावदस्ति । प्राच्यानुभ-वाहितवासनाप्रबोधप्रभवस्मरणमहिमा च तस्यां कारणं, किन्तु सा योजना कल्पनैव विकल्प एव तन्निबन्धनस्य भिन्नाव-भासस्य संपूर्णस्यैव भावात् । योज्यमानयोर्हि आभासयोः प्रति-योग्यपोहनोट्टङ्कितभेदयोरेव योजना, योज्यमानोऽपिच असौ देहादिः पूर्वावस्थैकीकृतोऽपि अतद्रूपापोह एव निर्भाति । योजना च प्रमातुरेव अर्थानपेक्षो व्यापार इति सा कथं न विकल्पः स्यात् । एवमत्र सूत्रे सर्वः पदार्थो यथायोग्यं कल्पनात्वे हेतु-भावेन व्याख्येयः । एवं घटादावपि अनुसन्धिरभिधानीयो विकल्पनत्वेन, किन्तु तावत्यां भूमौ कस्यचित् भेदस्य तिरस्कार इत्याशयेन परिपूर्णाभेदसौधसमारोहणसोपानत्वमेवमादेरनुस-न्धानस्य गुरुभिरभाणि । पूर्वाभासेन या ऐक्ययोजना आदिम-हणादहंकारेण तत्समानाधिकरणेन च चैत्र—इत्यादिनाम्ना च, सा कल्पनैव,—इति वृत्तौ सबन्धः । अत्र च देहधीप्राणशून्याना-मपि परस्परमस्ति अनुसन्धानं, तत्तु सर्वथैव विषययाथात्म्यला-भेन अत्यासन्नभावोपकारकत्वात् विभ्रमात् । नहि तत्र एकमवस्था-न्तरूपमवयवि, तथा वक्ष्यमाणमिव देहरूपं किंचिदस्ति, ततो न शून्यादिभिन्नाभिन्नरूपप्रमातृतानुसन्धानमिह विचारितम् । सूत्रार्थं सक्षेपेण अवतारयति 'योऽपि' इति । न केवलं देहाद्यनुभव-मयोऽहमितिविमर्शो विकल्पो,यावदनुसन्धिमयोऽपि,—इति अपि-

१ 'कृतेऽपि' ग. । २ 'भेदे' ग. ।

शब्दार्थः । यदाशङ्काविघटनाय सूत्रं, तत् दर्शयति **'ननु'** इति । **'प्रथमस्य'** प्रधानस्य । प्रथमग्रहणेन च सदाशिवादिप्रमातृभूमावस्ति अनुसन्धिगन्ध इति सूचयति । सोऽपि च अचिरप्रभावद्प्ररूढरूप एव संवेद्यस्य संवेदकमेलनेनैव तत्र आत्मलाभादित्याशयेन संबन्धपदम् । सम्यक् बन्धोऽनुसन्धानप्रत्ययस्य रूढिरिति यावत् । 'बालो गौरश्च अहमभवम्, अद्य तु अन्यथा' इति युवा व्यायामकर्कशीभूतदूर्वाकाण्डश्यामशरीरः । एतत् देहावस्थानामनुसन्धानात् निदर्शितम् । अत्र च वाग्रहणे न अवस्थान्तरं निर्दिष्टं तत्समये अवस्थान्तरस्य असंभावनीयत्वात् 'सुखित्वादौ तु दुःखित्वादिना संभाव्यम्' इति उत्तरत्र वाशब्दप्रयोगः । 'सुखी दुःखी वा अभवम्, अद्य तु अन्यथा' इति बुद्ध्यवस्थानां, 'क्षुधितस्तृषितोऽहमासम्, अद्य तु अन्यथा' इति प्राणावस्थानां, मूर्छाव्यामूढः परिमितशून्यावस्थः समाधानबलात्

'बहिरकल्पिता वृत्तिर्महाविदेहा, ततः प्रकाशावरणक्षयः' (यो० सू० ३।४३)

इति

'निर्वृक्षगिरिभित्यादि ............... ।' (वि०भै०६८)

इति

'स्ववदन्यशरीरेऽपि ...................... ।'

इति

'अपेक्षां स्वशरीरस्य ...............। (वि०भै०१०७)

इत्यादिनीत्या 'देहादिशून्ये क्रमविकस्वरे सति सह उन्मेषेण क्रमविकासेन वर्तमानो वा अभवम्, अद्य पुनरन्यथा' इति शून्यावस्थानाम्, नित्यमेकं चित्तत्त्वं यत्, तत् न अस्य विषयः,

१ 'तृषार्तः' ग. ।

शरीरादि नित्यमेवं सदेकं विषयोऽस्य 'वक्ष्यते' इति

'..........द्रव्यदिक्कालबुद्धयः' (२।२।१)

इत्यत्र। ननु एकमेव नित्यमेतदस्तु, किमनित्यतया, अत्र आह **'बाल्य'** इति। ननु **'सर्वदा'** इति कथमुक्तं, नहि सद्योजातस्य क्षणान्तर एव विशेषो दृश्यते। दृश्यते एव,–इति दर्शयति **'तदाह'** इति। अतिशयपदेन इदमपि आह—यदि पूर्वतरस्यैव वैसादृश्यं न भवेत्, अन्तेऽपि न भवेत् तादवस्थ्यानपायात्। यथोक्तं श्रीमदनन्तपादैः

'अन्ते पुराणतां दृष्ट्वा प्रतिक्षणं नवत्वहानिरनुमीयते।'

इति। पूर्वरूपेण आभासेन अनुप्रवेशो व्यामिश्रताऽसदप्रकाशमानो विकल्पभूमाविति न असत्यम्। **'ऐक्यशब्देन'** इति वृत्तौ। **'एतेन'** इति **'ऐक्ययोजना'** इत्यन्तेन वाक्येन। ननु विमर्शबलात् वर्तमाने स पूर्वाकारः स्थित एवेति अभ्युपगम्यतां, तत् को योजनार्थः,–इति शुष्कसांख्याः मन्यन्ते, तान् प्रबोधयति **'एकस्य'** इति। ननु नास्त्येव विच्छेदः, केवलमनभिव्यक्त इति कृत्वा स आकारो न उपलभ्यते। अत्रापि आह **'ननु'** इति। दृश्यत्वं हि यदि तस्य रूपं च, एवंच अभिव्यक्तिः; तर्हि इदानीमपि किं न दृश्यते इति शक्तिव्यक्त्यादिनामान्तरप्रच्छन्नं तादवस्थ्यातादवस्थ्यकृतं विच्छिन्नत्वमेव इदमङ्गीकृतं स्यात्। तस्मात् चिदद्वयवाद एव सविदर्पणप्रतिबिम्बरूपे भावकलापे अभ्युपगम्यमाने शक्तिव्यक्तिविभागः सविच्छक्तिचित्रितनिमेषणोन्मेषणपरमार्थ उपपद्यते, न अन्यथा,–इति दर्शितं श्रीवसुगुप्तपादैः संविद्रूपात्मस्पन्दादेव उन्मेषनिमेषतः संघातविग्रहविपर्यासैर्लयोदयोपलक्षितकल्पपञ्चकप्रपञ्चसंभवं निरूपयद्भिः।

---

१ 'एवं' क।

एतदेव स्फुटयति '**अनित्यत्वं च**' इति। '**तेषाम्**' इति आकाराणाम्। '**समर्थयिष्यते**' इति[1]

'यदसत्तदसत्……………।' (२।४।३)

इत्यत्र अन्तरे। '**अन्यथा**' इति शुद्धेन बौद्धसांख्यादिमतेन। '**ततश्च**' इति यतो विच्छेदेन आकाराणामनित्यता तस्मात् नित्यमेकं शरीरं यतोऽस्य विषयस्ततोऽपि न अयं विकल्पो, न इयं योजना। नहि एकस्मिन् योजनार्थः कश्चिदित्यपि न आशङ्कनीयम्। '**अनुसन्धानस्य**' इति अनुसन्धानत्वेन अभिमतस्येत्यर्थः। अपिशब्देन इदमाह—चिदेकविषयत्वेन योजनाभावो यः शङ्क्यते, स न केवलमयुक्तो यावन्नित्यशरीरमात्रविषयत्वेनापि। एतदेव प्रकटयति '**चिदात्मनीव**' इति। चिद्रूपे यथा साक्षात्कार-भूमौ प्रकाशलक्षणायामहमिति शुद्ध एव विकल्पताशून्यो विमर्शो, नैवं देहादौ। '**यतोऽपि**' इति साक्षात्कारविमर्शमात्ररूपत्वात् संभाव्यमानात्[2] विकल्परूपता न भवेत्, नच तत् संभाव्यते इति अपिशब्दार्थः। असंभावनायां हेतुमाह '**यस्मात्**' इति। यदि वर्तमानमेव शुद्धं देहादिरूपमत्र स्फुरेत्, भवेदयं साक्षात्कारः; नतु एवमित्याह '**नष्टस्यापि**' इति। '**अत एव**' इति नष्टस्य यतः प्रतीतिः, ततः संस्कारजा सा; ततो विकल्पात्मिका। एवकारेण वर्तमानभागे भवत्वपि साक्षात्काररूपता,—इति दर्शयति। ननु नष्टेऽपि भवेत् साक्षात्कार इत्याशङ्क्य आह '**नहि असति**' इति। साक्षात्कारो हि असंनिहितेन विषयेण अयोगिनां न जन्यते, नच असतो जनकत्वमुचितम्। '**तथाभूतेन**' इति संस्कृतेन। पूर्वानुभवो हि प्रमातुरुद्रिक्तविषयोपाधिकृतभेदः पूर्वमभूत्, स एव निलीनभेदः संस्कार इति उच्यते, नतु सर्वथैव

१ 'च इति' क.। २ 'संभाव्यरचनात्' क.।

ध्वस्तभेदः, स पुनः प्रबुद्ध इदानीन्तनदेहादिज्ञानसचिवो भवन् स्मृतिरिति तात्पर्यम् । **'तथा'** इति ज्ञानजनकत्वेन यदनुसन्धीयते **'पूर्वत्वम्'** इति । कर्मणि लकारेऽपि **'यत्'** इत्यनेन धात्वर्थः परामृश्यते, न कर्म,पूर्वं तु अस्य यदनुसन्धानं,स विकल्प एव यतः प्रमातुरसौ स्वतन्त्रस्य व्यापारः । पुरोऽवस्थितस्तु अर्थः कामं साक्षात्कृतः, स केवलं निजस्वातन्त्र्यकलोल्लिख्यमानपूर्वानुसन्धानचित्रस्य अभित्तिभूत इति सप्तम्या निरूपयति । उक्तमेव स्फुटयति **'नहि'** इति । **'तदा'** इति सर्वमुक्तपूर्वं प्रमेयं प्रकृते हेतूकरोति । ततइत्यर्थे वर्तते यतः । ननु एवं यदि विकल्प एव अयं, तर्हि किं तेन सनिहितेन अर्थेन तत्र कृतम् । आह **'केवलम्'** इति । भिन्नं तात्कालिकमभिन्नं पूर्वावस्थया एकीकृतं देहादि यतोऽस्या विषयस्तत इयं न शुद्धो विकल्पो, नापि शुद्धः साक्षात्कारः, अपितु च्छायामयी प्रत्यभिज्ञा,—इत्युच्यते । पूर्वस्य प्रत्यावृत्त्या वर्तमानस्य च आभिमुख्येन ज्ञानमिति प्रत्यभिज्ञाशब्दस्य यो वृत्तौ प्रयोगस्तस्य अभिप्राय इयता विवृतः । **'ननु देहस्य'** इति । एतदुपलक्षणम् । देहस्य बाल्यादिना, बुद्धेः सुखादिना, शून्यस्य संकोचेतरतारतम्येन काममस्तु विच्छिन्नत्वात्, प्राणोपलक्षितस्य तु स्पर्शस्य न कश्चित् भेदो लक्ष्यते । तथाहि स स्पर्शो देहेन सह ओतप्रोतीभूतस्य प्राणस्य भवन् देहस्वभाव एव भवति अयोगिनां योगिनां वा प्राणायामपद्धत्यभ्यासपृथक्कृतस्वतन्त्रप्राणवृत्तीनां प्राणस्वभाव एव । उभयथापि न अस्य कश्चित् भेदो येन विच्छिन्नो-
पलम्भो भवेत् तथाभूतश्च ग्राहकत्वेन व्याख्यातः । **'यत्'** इति यत ए...त्वं **'तत्'** इति तस्मात् कथं वृत्तौ वीप्सया सार्वत्रिको विच्छेद ...ः । **'तदपि'** इति स्पर्शस्यापि ग्राहकत्वम् । सामान्यरूपमभिन्नमेव स्पर्श...नम् । आदिग्रहणात् प्राणीयोऽन्तर्नादो यतः

सोऽपि न सर्वदा अनुवर्तते, अपितु कदाचित् सुखजनकः, कदाचित् दुःखजनकः स्वस्थास्वस्थत्वादिबहुतरभेदाधायीति तत्रापि विशेषाः सन्त्येव । यत एवं, तस्मादेव हेतोः पूर्वमेव वृत्तावुक्तं सौत्रान्त्यपदविवरणं **'शून्य'** इत्यादि ॥ ६ ॥

देहादीनां क्रमेण पूर्वपूर्वप्रमातृवेद्यतायामनवस्थानात् प्रमातुरप्रकाशे प्रमेयमपि न जातुचित् प्रकाशेत, तस्मात् परमेश्वर एव स्वप्रकाशः परमार्थतः सर्वत्र प्रमाता, देहादौ केवलं प्रमातृताभिमानः, स च मायाभिधानपरमेश्वरेच्छाहेतुक इति सूत्रान्तरेण निरूपयन् सदैव सृष्ट्यादिकृत्यपञ्चकप्रपञ्चनचातुर्यं नोज्झति हि परमेश्वर इति च दर्शयन्

'स्वामिनश्चात्मसंस्थस्य············ ।' (१।५।१०)

इति यत् प्रकृतं प्रमेयं, तद्गतत्वेन विमर्शस्वरूपस्य तदनुप्रसक्ततया च अपोहनशक्तिविचारस्य आपातात् तदपि उपसंहरति

**तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।**
**भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ॥ ७ ॥**

**'देहे बुद्धौ'** इत्यादि यदुक्तं **'तदेवम्'** इति एतत्सूत्रार्थवशात् युज्यते । तथाहि **'व्यवहारे'** मायापदेऽपि **'देहादि'** वेद्यमपि प्रभुरेव प्रकाशपरमार्थः प्रभुत्वादेव मायाभिधानया स्वेच्छया आविशति प्रमातृतया स्वीकरोति तद्देहप्राणादिप्राधान्यं निर्भासयन् तत्प्रमातृभावं निर्भासयति, निर्भासयंश्च **'अन्तः'** इति अहन्ताभुवि स्थितं भासनपरमार्थत्वादविच्छिन्नावभासनमेव **'इच्छयैव बहिः'** इति अन्तःकरणबहिष्करणवेद्यताभूमौ स्फुटमस्फुटं च क्रमेण इदमिति भासयति, ततो हेतोरेतत् युज्यते एव अनवस्थाया अभावात् । हेतौ लिङ् । किंच यदेतदुक्तमपोहनस्वरूपं, ततो हेतोः । **'एवम्'** इति वक्ष्यमाणस्वरूपं वस्तुजा-

तम्। किं तत्। आह न केवलं प्रसिद्धेषु सृष्टिस्थितिसंहारतिरोधानानुग्रहकालेषु यावदस्मिन्नन्योन्यक्रयविक्रयविवादोपदेशप्रेक्षाप्रभृत्यनन्तव्यवहारकालेऽपि देहप्राणादींश्चैत्रमैत्रादिभिन्नान् **'आविशन्'** ऐक्येन तावत्यंशे निर्मिमाणस्तत्रैव स्थितिं भासयन् पूर्वप्रमात्रैक्यं संहरन्, तदेकघननिजरूपनिमीलनात् विलयमुपदर्शयन् ऐक्यावेशांशेन अनुग्रहकलां निर्भासयन् **'भान्तमेव'** अत्यन्तप्रकाशमेव सन्तमर्थराशिं **'इच्छया प्रभुः'** स्वतन्त्रः कृत्यपञ्चकसंपादने सदैव उद्युक्तो **'बहिः'** एकाभासतया भासयति,—इति न असंभाव्यमेतदिति एतत् जातम्। संभावनायामत्र लिङ्। तदेतदुक्तं

'सदासृष्टि ·············· ··· ········ ।' (उ०स्तो०२०।९)

इत्यादि,

'प्रतिक्षणमविश्रान्तः···············।' (स्त०चि०११२)

इत्यादि,

'प्राकाम्यमात्मनि························ ।'

इत्यादि च। अपिच यतो विमर्शस्वरूपनिरूपणं वितत्य कृतं, **'तत्'** इति ततो हेतोः। **'एवं'** इति परिनिष्ठितं तत् जातं यत् पूर्वमुक्तं

'स्वामिन·····················।' (१।५।१०)

इत्यादिसूत्रैः। इदं हि तेषां तात्पर्यं—प्रभुः सृष्टिकाले व्यवहारकाले च देहादीन् प्रमात्रीकुर्वन्नेव अन्तर्भान्तमर्थराशिं बहिर्भासयति,—इत्येष नियमो नियोग इति विधिरूपे नियोगे अत्र लिङ्। वृत्तावपिशब्दं व्याख्यातुं **'आदिसर्गे'** इति। **'इच्छया'** इति देशाद्यावेशे बहिराभासने च हेतुरिति निरूपयितुं **'मायाशक्त्या'** इति **'कर्तृशक्त्या'** इति च। **'क्रमेण'** इति पूर्ववः प्रमातृवर्गात् विश्लेषणमपरेण संश्लेषणमिति कृत्यपञ्चकावेशः

सूचितः। '**महेश्वरो भासयति**' इति अनवस्थापरिहारः। एवं त्रिधा सूत्रार्थमवतारयति '**इत्थम्**' इत्यादिना। 'एव' इत्यनवस्थाशङ्काशमनम्। '**न केवलम्**' इत्यादिना सृष्ट्याद्यविच्छेदशक्तत्वं पूर्वप्रस्तुतमिति प्राक्तनार्थनिगमनकारित्वमवतारितम्। '**स्वम्**' इति शुद्धश्रीशिवभूमौ, अवयवात्मकं श्रीसदाशिवादिदशायां '**रूपमस्य**' इति द्वन्द्वगर्भो बहुव्रीहिः। इन्द्रियमतिषु विशेषरूपं स्फुटं यदीश्वरभूमावविभागेन अहमिदमिति भाति, मनोभूमौ सामान्यरूपादस्फुटं यत् किल श्रीसदाशिवपदे सर्गातिसर्गप्रारम्भे शुद्धे सदाशिवादिरूपे मायीये च ब्रह्मादिरूपे। लक्षणषष्ठीसमासोऽयं बहुव्रीहिरपि। सृष्टिस्थित्यादौ प्रसिद्धे यथा, तथैव सर्वदापीत्यर्थः। '**आभासयति**' इति सृष्टिस्थितिसंहारतिरोध्यनुग्रहयोग्यतयेति गम्यते एव विशेषानुपादानात्। '**शुद्ध**' इत्यादिना '**प्रभुः**' इति व्याचष्टे।

'स्वामित्वञ्च......................................।'

इत्यर्थं स्मारयन् क्रमेण अशुद्धमेतदीयं सर्गं निरूपयिष्यन् '**तस्य**' इत्यादिना शुद्धं तावदाह, स्मारयति च

'.......न विना तस्मादिच्छामर्शं...... ।'

इति। इच्छा नाम तस्य स्वरूपमेवेति इच्छाशब्देन दर्शयन्, किमर्थमस्य तादृशी इच्छा, तथाहि

'क्रीडार्थायां जगत्सृष्टौ विहन्येत कृतार्थता।
सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः॥'

इत्यादिव्यामूढपर्यनुयोगं निरवकाशयति। यथोक्तं

'पञ्चप्रकारकृत्योक्तिशिवत्वान्निजकर्मणे।
प्रवृत्तस्य निमित्तानामपरेषां क मार्गणम्॥' (शि०दृ०१।१२)

इति। सिद्धे हि स्वप्रकाशवपुषि स्वतन्त्रे क एष व्यामोहः। विम-

१ 'स्फुटयत्' ग.। २ 'व्यापारः' क.।

र्शप्रधाना प्रतीतिः, सत्यपि प्रकाशे सदाशिवपदे या मनोभूमिर्मायादशायां भविष्यति, अत्र च प्रकाशांशस्य अवभासरूपस्य अप्रधानत्वेन निमीलनात् भावाना च अवभासनत्वात् धूमधूसरीभावश्यामलितविचित्रपटनिविष्टभावपटलवत् निमीलनमिति निमेषव्यवहारः करिष्यते । एवञ्च आगमाधिकारे

'ईश्वरो बहिरुन्मेष············ ।' (३।१।३)

इत्यत्र निरूपयिष्यते । विमर्शप्राधान्यादेव समस्तनामाविभागसारनादभूमिरित्युच्यते दशा इयं, विमर्शांशनिमीलने तु अवभासात्मकसाक्षात्कारोचितप्रकाशरूपप्राधान्यात् बोधावभासोन्मेषरूपाविभागस्वभावबैन्दवपदव्यपदेश्या ऐश्वरी दशा, इयमेव मायापदे इन्द्रियविषयता भविष्यति । एवंभूतं प्रतीतिद्वयं प्रति यो विषयभावस्तत्कृतो यो भेदस्तेन यः स्फुटत्वेतरविभागस्तद्युक्तं यत् स्वाङ्गभूतं तत एव अविभक्तं समर्थं षट्त्रिंशत्तत्त्वात्मकं वस्तु चिदचिद्रूपं भविष्यति, न ततोऽधिकं किंचिदस्ति,—इति कृत्वा तस्य यत् प्रकाशनमियमेव विश्वस्य सृष्टिः । स्वरूपभूतैव च असौ भगवतो ननु अधिका असौ काचिदधिकस्य वा कस्यचित् । नीलमस्फुटं पीतं स्फुटमितिवत् न अत्र भिन्नविषयत्वमिति ब्रूते च्चि[1]प्रयोगेन, नच एतत्सृष्टियोगेऽपि भगवतः किंचिदूनत्वमधिकत्वं वा,—इत्याह '**तदा च**' इति । '**अस्याम्**' इति सदाशिवेश्वरपदतिरोहितायां शुद्धशिवदशायाम् । ननु किं क्रमिकमेतत् दशाद्वयं भगवति, उत युगपत् । उभयथापि न,—इत्याह '**न चापि**' इति । क्रमो हि कालवृत्तिः । स एव च अपेक्षान्तरेण यौगपद्यं, कालानुन्मेषे च तदुभयमपि न किंचित् । ननु च एवं सति '**तदा**' इति '**अवस्थायाम्**' इति '**तदुत्तर**' इति च

१ 'द्विप्रयोगेन' क. ।

यदुक्तं, तत् सति क्रमे अवस्थाव्यवहारादुचितमिह, तदभावाद-न्धप्रायं भवेदित्याशङ्क्य आह **'केवलम्'** इति । मायासंस्का-रदार्ढ्यादमायापदमकालकलितं वक्तुं साक्षादशक्नुवन्नविरुद्धमपि रूपद्वयभेदप्रधानस्वबोधदौरात्म्यात् *विरुद्धमिव अभिमन्यमानः* प्रतिपाद्यः प्रतिपादकश्च स्वप्रतिपत्तिपरिनिष्ठितं क्रममत्रापि आरो-पयति । अनारोपितं तु कीदृक् तत्त्वमित्याह **'सर्वत्रात्र'** इति श्रीशिवसदाशिवेश्वरत्वे । देशभेदो मूर्तिभेदतः, कालभेदः क्रियाभेदतः । तौ च अत्र न स्तः इति

'सर्वत्राभासभेदोऽपि..................'। (२।१।६)

इति प्रकरणे वक्ष्यते, उक्तं च आदिसिद्धसूत्रे । एवं शुद्धां सृष्टिं विचार्य अशुद्धां विविनक्ति **'तदेवम्'** इति । अनन्त-रशब्दः परवचन इति दिक्शब्दयोगे पञ्चमी । अत्रापि 'यदा तदा' इति मायासंस्कारादेव भगवदिच्छायां कालवि-भागाभावात् । **'दर्पण'** इति आधिक्यावभासेऽपि अनाधि-क्यमाह । **'यासु'** इति यासु आभास्यमानास्विति निमित्त-सप्तमी आभासनाया नैमित्तकत्वमाह । ततश्च अयमर्थः—यदा-भासननिमित्तं देहादीनि ग्राहकीभाव्यन्ते, देहाद्युपयुक्तशब्दादि-व्यतिरिक्तं तु शब्दादि ग्राह्यतामापद्यते । नहि अन्यथा ग्राह्य-ग्राहकद्वयसन्ततीनामाभासना उपपद्यते । यत एवमियं शुद्धमिश्रा-शुद्धव्यवस्था **'तत्'** इति तस्मात् हेतोरेनामेव अशुद्धदशामपेक्ष्य

'दृक् स्वाभासैव..................।' (१।३।२)

इति प्रकरणे व्यापकविरुद्धव्याप्तोपलब्ध्या स्वपरसंविद्रूपयोरन्यो-न्याभावः साधितः शुद्धे मिश्रे च पदे निरोधाभावात् । ननु प्रमात्रादीनां भेदो यदि प्रतिभासते, तत् प्रतिभासानुसारेण स एव

---

१ 'तदभावान्धपदप्रायः' क. । २ 'स्वभेद' क. ।

अस्तु तात्त्विको विधाचतुष्टयवादिनामिव,—इति किं मायापरिकल्पनेनेत्याशङ्क्य आह 'अत्रापिच' इति। भेदव्यवहारे शङ्काद्योतकश्चः। न केवलं शुद्धदशायामभेद एव सारं, यावदिहापीति अपिशब्दः। ज्ञेयस्य न पृथक् किमपि तत्त्वम्, अपितु ज्ञेयता नाम ज्ञानमेव। तदपि न अपरं किंचित्, अपितु प्रकाशरूपमेव स्वतन्त्रतया अहमितिविमर्शात्मकप्रमातृतत्त्वमयम्। ननु तदपेक्षया मायापि कथमवभासयेत् भेदमित्याह 'मायीय' इति। देहादौ प्रमातरि आरोपितं यतस्तत्प्रकाशरूपमहमिति, ततो देहादिसंबन्धसंकुचितावभासं तत्, ततस्तदपेक्षया भेदाभिमान उपपन्नः। ननु मायीये प्रमातरि एषैव मायीयता यदध्यारोपितः प्रमातृभावस्तत्र किमपरेण प्रकाशरूपारोपणेनेत्याशङ्क्य आह 'तद्धर्म' इति प्रकाशरूपतारोपणमेव प्रमातृतारोपणमिति यावत्। ततो यथा अपारमार्थिकबाह्यपदेन आरोपितमेव प्रकाशरूपं संकुचितस्वभावमिति कृत्वा तदपेक्षया भेदेन न उचितस्तथा इहापि, केवलमस्य अर्थस्य अनुपपत्तौ सत्यामनुपपन्नावभासनकारिणी मायाख्या शक्तिः स्वप्रकाशे भगवति प्रकाशवपुषि परमशिवे तदागमविमर्शप्रभाविता अभ्युपगम्येति भावः। ननु एवमारोपितस्य प्रकाशविमर्शनः(तः)कथं तदर्थक्रियाकारित्वमुचितमित्यत आह 'वस्तुतः' इति। ननु घटः पटस्वभावो मायापदे शुद्धपदेऽपिवा, तदापि सविदेव विश्वरूपा, ननु घटः कश्चित् स्वतन्त्रः। ननु एवमस्मिन्नशुद्धे मायापदे कालविभागस्तावदुन्मिषितः,—इति तदपेक्षया भगवत्यपि स प्राप्नोति। यावद्धि पुरा मायापदमशुद्धं नोल्लसित तत उल्लसितमिति व्यवहारो यथोक्तम् अनन्तरमेव 'शुद्धसर्गादनन्तर यदा' इत्यादि, तावदुप-

---

१ 'आरोपेण' ग.।

निपतितो युक्त्या कालविभागः,—इति मोहमपहर्तुमाह **'अत्र च'** इति मायापदे, आदिशब्दात् मिश्रदशा । भवेदयं दोषो, यदि च परमेश्वरापेक्षया यदेति अनन्तरमित्यादि च स्यात्; यावता मायीयविभागानुभवाभासाधिवासितास्मादृशद्रष्टपेक्षया एतदित्युक्तं, भगवति तु

'केन नाम न रूपेण भासते ............... ।'

इत्येतावत्परमार्थप्रकाशे 'इदानीं भाति प्रागभासीत् भास्यति' इत्यादिकमपि शुद्धभासनमात्रपरमार्थं स्वशक्तिविजृम्भितं दर्पण इव विततावितदेशतादि तत् केवलं स्वच्छताविजृम्भितमिति परमशिवापेक्षया न शुद्धमिश्राशुद्धतया भेदव्यवहारः कश्चित् तत्प्रकाशैकपरमार्थत्वात् सर्वस्य, चित्रबोधापेक्षया नीलपीतादितया **'यथा'** इति । यदिहि तदपेक्षया भेदव्यवहारः, स तर्हि तेषां न प्रकाशो भवेत् घट इव पटादेर्नियमतश्च स एव तेषां प्रकाशोऽन्यानुपपत्तेरिति नियमस्य व्यापकस्य अनुपलब्धिलक्षणप्रसङ्गसंत्रस्तहेतुविपक्षात् प्रच्युतस्तत्प्रकाशैकपरमार्थत्वलक्षणो हेतुर्भेदव्यवहारविपरीताभेदव्यवहारेण व्याप्यते इति विरुद्धव्याप्तोपलब्धिः । ननु एवं कथमुक्तं पूर्वं पूर्वप्रमातृदशायामुत्तरो नास्ति,—इति । एतत्परिहरति **'तदानीं केवलम्'** इति । विश्वप्रमातृतापदलक्षणे तस्मिन् काले कथं देहप्राणादेर्मातृता । सा हि संकोचवती तस्या उद्रेके सति असंकुचिताया विश्वप्रमातृताया एव अयोगापत्तेः । एतदुक्तं भवति—शरीरस्य वेद्यरूपस्य सत एव विभिन्ने वेद्यवेदकरूपेण या प्रमातृता, सा प्राणं बुद्धिं शून्यं परमशिवप्रकाशं च प्रमातृत्वेन अपेक्षमाणैव झटिति स्फुरति । यथोक्तम्

'अपित्वात्मबलस्पर्शात्पुरुषस्तत्समो भवेत् ।' ( स्प० का० ८)

इति । भगवतः पुनर्वेदकैकस्वभावस्य प्रमातृता स्वभाव एव ।

**'अभिन्नवेद्य'** इति तथा शरीरादेर्भासमानस्य अपि परशिवप्रकाशाभिन्नत्वेन न वेदकता काचित् । ननु शरीरप्रभृतेः प्रमातृता परिमितत्वेन भावानामभितो भेदमाभासयति, परमशिवस्य तु मातृता सर्वमभिन्नमभितो, नच एकदा घटादेर्भेदाभेदावुचिताविति परस्य भ्रमं भिनत्ति **'माया'** इति । एवमशुद्धं सर्गमुक्त्वा तस्यैव शेषभूत व्यावहारिकं सर्ग''''दपर सूत्रार्थमुन्मीलयति **'तत्'** इति । **'शुद्धचिदात्मन'** इत्यादिना **'तस्य विश्वनिर्माणेच्छोः'** इत्यादिना **'शुद्धव्यामिश्ररूपनिरूपणपूर्वकं मायीयसर्गरूपं यदा संसारचिकीर्षा'** इत्यादिना यदुक्त, तदेव वक्तुं **'तथाहि'** इत्युपक्रमेण **'विश्ववर्तिन'** इत्यादिना शुद्धमभिन्न विद्यामयं भिन्नाभिन्नस्वरूप स्मारयति । **'ईश्वरस्य'** इति भगवतः शिवस्य । **'परस्परापेक्षया'** इति ईश्वरापेक्षया तु परस्परमपि न भिन्नाः, सविदेकरूपपरमार्था हि ते, तदपेक्षया तदाहमित्येव ते भासेरन्, ननु सर्वमिति इदन्ताप्राणितेन सर्वशब्देन व्यपदेश्यतया । **'ईश्वरस्य'** इति भगवतः शिवस्य सदाशिवेश्वरपदे एवंभूतप्रकाशस्वभावता । एतच्च श्रीशिवसदाशिवेश्वररूपत्वमन्तरनुप्राणकत्वेन प्रत्योपाख्यारूपप्रतिपत्तिप्रतिपादनात्मके व्यवहारेऽपि पूर्वभावित्वेन स्फुरति । **'विश्वस्रष्टाविव'** इति पुनः स्मारणेन सूचयति । **'ततश्च'** इत्यादिना आदिसर्गस्वरूपं यत् व्यवहारकाले लोकयात्रालक्षणेऽपि अतिदिष्टं, तत् स्पष्टयति । **'तेषामेव'** इति विश्ववर्तिनामर्थानां दशात्रितयभाक्त्वेन दर्शितानाम् । **'वाय्वादिः'** इति । शून्येन भूयसा व्यवहाराभावात् प्राणबुद्धिदेहप्रमातृत्वैव उक्ता । ये पूर्वं सदाशिवभूमौ, ते इदानीमन्तःकरणस्य विषयाः

१ 'प्रकाशात्मता' क । २ 'शून्येऽनुभूयमानव्यवहारा' क. । ।

सन्तः सामान्यात्मानो मन्दप्रकाशाः; ये तु ईश्वरभुवि, ते इदानीं बहिष्करणगोचराः स्फुटप्रकाशा विशेषात्मानः। **'तदाह'** इति वृत्तिगतं क्रमपदमियता शुद्धमिश्राशुद्धदशाव्याख्यानेन विवृतमिति दर्शयति। **'कर्तृशक्त्या'** इति वृत्तिपदेन सौत्रमिच्छापदं वैचित्र्येण वर्तितम्। आत्मतया देहादेरावेशे सैव इच्छा मायाशक्तिरुच्यते, बाह्यावभासने तु भेदनिर्माणभासनरूपतया अशुद्धकलाविद्याशक्तिरूपेति। ननु मायाशक्त्या यावदनात्मनि आत्मता दत्ता, तावत् कर्तृत्वज्ञत्वे तत्र अविशुद्धे दत्ते एव। तत् किमपरं कलाविद्याभ्यां कृत्यम्। अत्र ब्रूते **'मायाशक्त्या हि'** इति। संकुचिता प्रमातृता मायाशक्त्या कायप्रभृतेः सत्यवेदकतापहरणवेद्यरूपविश्राणनसमय एव यद्यपि विलब्धा, यत् नरेश्वरविवेकः

'तेन मायाभिधा शक्तिः सहैव कुरुते द्वयम्।
वेद्यान्सदसतः सर्वान्कांश्चिद्वेद्यांश्च वेदकान्॥'

इति, तथापि तावता असौ स्वात्मन्येव प्रकाशविमर्शयोगादहमिति जडकुड्यादिविलक्षणतया स्फुरेत्, न पुनरियतैव भिन्नस्य नीलसुखादेः प्रमाता संपद्यते। यदि प्रमातृतामात्रायत्तं नीलाद्यवभासनं भवेत्, तत् सुषुप्ततुर्यादिपदं न प्रकल्पेत प्रमातृतामात्रस्य जडवैलक्षण्येन तत्रापि सद्भावे तदाक्षिप्तनीलादिसंवेदनावैकल्येन जाग्रत्स्वप्नान्यतरतापत्तिप्रसङ्गात्। ततश्च यत्संभवेऽपि यत् न भवति, न तत् तावन्मात्राधीनं बीजमात्रसंभवेऽपि अङ्कुर इव; तथाच प्रमातृतामात्रसंभवेऽपि भिन्नवेद्यसंवेदनमिति व्यापकानुपलब्धिः। तावन्मात्राधीनत्वस्य हि व्यापकं तत्संभवे सति अवश्यम्भावित्वम्, अनवश्यम्भावित्वे निर्विवादस्य तद्व्यापकान्तरस्य अनपेक्षत्वस्य विरुद्धं सापेक्षत्वं प्रसज्यते यतस्तस्मान्मा-

यातिरिक्तेन अपेक्षणीयेन भाव्यमेव। तत् दर्शयति **'कला'** इति आगमसिद्धया भाषया विद्यामपि स्वीकरोति, तथाहि आगमे

'कलोद्दलितचैतन्यो विद्यादर्शितगोचरः।' (स्व०११।९८)

इति पठ्यते, उद्दलितं उद्दलनं बलोत्कर्षं नीतं बाह्यकार्यविषयताभधिगमितं चैतन्यं कर्तृशक्तिरूपं यस्य, विद्यया च दर्शितो विषयो नीलादिर्यस्येति। एवं भिन्ने यत् करणं, तत्र कलायाः सामान्येन व्यापारः पङ्गोरपि गमनोद्यमदर्शनात्, विशेषेण तु तत्परिपूरणे कर्मेन्द्रियाणाम्, यत्तु भिन्ने वेदनं, तत्र सामान्येन विद्याया अन्धस्यापि रसविविक्ततया रूपावगमात्, विशेषेण तु तत्परिपूरणे बुद्धीन्द्रियाणाम्। रागकालनियतयस्तु ज्ञत्वकर्तृत्वयोरुपाधित्वेन स्थिताः, नतु उत्थापकत्वेन स्थिताः,—इति इह प्रसङ्गेन निरूपिताः। ननु सर्गादौ भासनं निर्माणरूपं व्यवहारकाले तु संवेदनरूपं पूर्वमेव निर्मितत्वात्, तत् कथमविशेषेण दर्शितम् **'आदिसर्गे वा व्यवहारकालेऽपिवा भासयति'** इत्याशङ्क्य या वृत्तिः **'तथाभासनमेव उत्पादनम्'** इति, तां विवृणोति **'यदेवच'** इति। एतदेव स्फुटयति आक्षेपप्रतिसमाधानाभ्यां **'ननु'** इत्यादिना। **'भिन्नावभासनम्'** इति प्रतिरूढमिति शेषः। **'परिमितत्वात्'** इति वेद्यत्वेन अन्यतः संकुचितत्वात्। **'द्वैतदर्शनात्'** इति स्वरूपेण अपरिमितत्वेऽपि व्यापारपारिमित्यादणुत्वमेषामिति आशयः। **'तेषामेषाम्'** इति यथायोगमागमतः प्रमाणान्तराच्च सिद्धानां, षष्ठी निर्धारणे। **'नित्यमेव'** इति सर्वदा हि ते पूर्वपूर्वतराश्च प्रमातारः, ततो न तेषां कदाचिदपि अपूर्वभावावभासनम्। ननु मन्त्रेश्वरादीनामपि स्वाधिकारपरिक्षये मोक्षावस्थायां कथं प्रमातृत्वं, ततश्च **'नित्यमेव'** इति असङ्गतम्। एतदाशङ्काशान्तये प्राह **'मुक्ता-**

**णूनां च मोक्षावस्थायामपि परमशिवादनादिशिवतामयात् मलनिर्ह्रासाभिव्यक्तशिवत्वानां भेदः'** इति। अनेन अंशेन द्वैतपक्षे मुक्ताणवो भिन्ना एव, तेषां च शिवत्वेन सार्वज्ञ्यादविच्छिन्नमेव अवभासनं; त्रैकालिकत्वावभासस्तु एषां मायीयप्रमातृनिष्ठितं निर्भासनमपेक्ष्य, तदपि तेषां सार्वज्ञ्यात् न न स्फुरति । चकारेण इदमाह—मन्त्रेश्वराणामधिकारक्षयात् मोक्षेऽपि तत्स्थाने परस्य अणोस्तावत्पदप्राप्तिनिमित्तदीक्षाव्रतजपतपःसमाधानचर्यानुष्ठानमहिम्ना संक्रमणे तस्यापि सर्वज्ञभावात् त्रैयध्विके अर्थसार्थेऽकदर्थित एव प्रमातृभावः,—इति मन्त्रेश्वरापेक्षयापि **'नित्यमेव'** इति युक्तम्। **'पश्वणून्'** इति पश्वणुतामात्रं सामान्येन अपेक्ष्येत्यर्थः । **'तत्त्वभुवनादयः'** इति आदिपदेन भावभूतादीनां कलामन्त्रपदवर्णानां च ग्रहणम् । घटादयोऽपि तज्जातीयतापेक्षया न अत्यन्तापूर्वे केचित्। इतिशब्द उक्तस्य अर्थस्य हेतुतां भाविनि अर्थे—न तदानीमेव सृष्टाश्च संहृताश्च—इत्येतत् द्योतयति । तमेव हेतुं संक्षेपेण आह **'पूर्वसृष्टत्वेन'** इत्यादिना। इयता पूर्वपक्षे यदुक्तं **'कथं व्यवहारकाले निर्माणं स्यादिति'** इति, तत्र युक्तवादितैव पूर्वपक्षवादिनो दर्शिता । कथं तर्हि निर्माणता,—इत्याशङ्कामधिकसंभवविशेषद्योतनोपक्रमे पराकरोति **'किन्तु'** इति । **'तदा'** इति तस्मिन् समये । **'येन'** इति ऐक्यगमनेन । **'तथा सति'** इति प्रतिप्रमातृ यदि भिन्नभिन्नो घटाद्याभासो देहाभासश्च । **'उक्तम्'** इति वासनाप्रबोधसूत्रे (१।५।५)

'चिदात्मैव हि··················।' (१।५।७)

इति सूत्रे च । ननु एवं विघटेतैव प्रमातृभेद इत्यत आह **'ननु'**

१ 'वभासः तेषां मायीय' ग. ।

इति । प्राणपुर्यष्टकादौ तद्दशारसादिभेदन्यवस्थायास्तादवस्थ्या-दिति भावः । नच अत्र विप्रतिपत्तिः कस्यचिदिति दर्शयितुं **'ज्ञानं च'** इति यत् वक्ष्यति तत् प्रकृतेन सगमयितुं स एव अवभासो ज्ञानमुच्यते इत्याचष्टे । ननु अवभासो घटादिरूपो वेद्यस्तत्कथं स ज्ञानं स्यात् । आह **'प्रमातृव्यापाररूपा च'** इति । सैच अस्य कथमिति चेत्, आह **'प्रमातृनिष्ठत्वेन'** इत्यादि । ननु एवं प्रमात्रिच्छया प्रमात्रन्तरसंयोजनयुक्त्या प्रतिक्षणं प्रमेयाणां प्रमातॄणां च निर्माणं संहरणं च, तत् कथं **'महेश्वरो भासयति'** इति उक्तं वृत्तौ,–इति चोद्यं उद्घाटयति **'सा च'** इति । **'एवमर्थमपि'** इति । न केवलं वृत्तिगतस्य क्रमपदस्य शुद्धादिरूपतापरिपाटीमात्रमभिधेयमपितु प्रमात्रन्तर-संयोजनपरम्पराप्रवाहोऽपि । एतद्विक्षिप्तीभूतं संक्षिप्य उपसंहरति **'तदेवम्'** इति । सर्गस्थितिभ्यां पञ्चधापि कृत्यमुपलभ्यते । **'देहादिमाविशन् बहिः'** इति यद्विशेषणद्वयं तद्व्यतिरेकेण योऽर्थः सूत्रात् अवगम्यते, तं प्रकटयितुं या वृत्तिः **'देहादि'** इति, तां व्याचष्टे **'यदा पुनः'** इति । **'सकृदेव'** इति विच्छि-न्नत्वेन अक्रममित्यर्थः, अनेन **'युगपत्'** पदं वृत्तौ कालक्रमा-भावतात्पर्येण व्याख्यातम् । ननु परमशिवदशामस्पृशतैव वृत्ति-कृता केन आशयेन सदाशिवेश्वरदशा इयमुक्ता । उच्यते, इह चिदात्मनि भावराशिरन्तारूपत्वेन अहमित्येव भातीति प्रकृतं प्रमेयम्, तत्र कश्चिदाशङ्कते–अहमितिनिर्भासने भाववर्गो निर्भात इति किमेतत्, सदाशिवेशभुवि भवतु नाम तथा इदन्तोन्मील-नादिति स प्रत्याख्यते, सदाशिवादिभूमावपि कथं भाववर्गो भाति, स हि क्रमिकः प्ररूढेदंभावश्च । अथ उच्यते भावानां तावदिदमितिरूपं, तच अत्रापि अस्ति प्ररोहक्रमिकत्वे तु माया-

कालप्रभृतिशक्त्यन्तरविजृम्भितमिति, तर्हि भावानां प्रकाशतैव पारमार्थिकं वपुरप्ररूढेदन्तोन्मेषस्तु विद्याशक्तिविजृम्भितमिति; ततो यथा सदाशिवादिपदे सामानाधिकरण्यादभेदविश्रान्तेन भेदेन सन्त एव मायायां भेदेन भान्ति, तथा शिवपदेऽत्यन्ताभेदेन सन्त एव **'अत्र'** इति सदाशिवादिभुवि **'एवं'** इति सामानाधिकरण्येन भान्ति,—इत्येतद्वस्तु **'अनेन'** इति ऐश्वर्यदशाभिधायिना वृत्तिग्रन्थेन प्रतिपादितं दृष्टान्तमभिदधता, दार्ष्टान्तिकं तु प्रकरणापन्नत्वादवगम्यते इति दर्शयति **'अवस्थित'** इत्यादिना। **'तथाच'** इति एतेन उक्तेन प्रमेयप्रकारेण वक्ष्यमाणसूत्रार्थोऽप्रयाससिद्धः इति ॥ ७ ॥

अन्तरर्थावभासे स्थिते किं कारणान्तरचिन्तया,—इति प्रकृतं प्रमेयं प्रसक्तानुप्रसक्तेन प्रत्यवमर्शविकल्पादिनिरूपणेन विच्छिन्नकल्पं शिष्यधियि निधातुं निगमयति

एवं स्मृतौ विकल्पे वाप्यपोहनपरायणे।
ज्ञाने वाप्यन्तराभासः स्थित एवेति निश्चितम् ॥ ८ ॥

**'एवं स्मृतौ'** इति सूत्रेण स्मृतिज्ञानापोहननिरूपणानि त्रीणि प्रकरणानि एकीकुर्वता यदुक्तं–प्रभुरेव इदं भासयति, ततो ज्ञानादौ पशुप्रमात्रपेक्षया यद्यपि भिन्ना बाह्याश्च भावाः; तथापि परमार्थप्रमातैव जानाति स्मरति अध्यवस्यति,—इति वस्तुतोऽन्तःस्थिता एव घटाद्याभासाः,—इति अयत्नसिद्धमदः। यदि तु देहादिरेव परमार्थतः प्रमाता, तदा तत्र घटाद्यवभासोऽस्ति,—इति किं केन संगच्छेतेति सूत्रार्थः। विवृतिरत्र स्पष्टप्रायैव। **'प्राक्'** इति ज्ञानस्मृत्यादिसूत्रे (१।३।७)। **'नहि'** इति एको हिशब्दः प्रागेव अस्य अर्थस्य आत्मसंस्थाद्यवभासने सूत्रोक्ते हेतुत्वेन निर्देशः,—इति दर्शयति। प्रकृतप्रमेयसमर्थनहेतुतया

यस्मादुक्तमेतत्, तस्मादन्तःसंनिविष्टा एव तथा स्फुरन्ति,—इति युक्तमेव। '**तथाहि सति**' इति अयं घट इति विमर्शो वेद्यत्वमेव स्फुटं भवेदिति का चिदात्मता भवेत्। इयता आनुरूप्यपदं विवृतम्। ननु इदमितिविमर्शो भावानां स्फुरितं, ननु अहमितिविमर्शः,—इत्याशङ्कामनुवदन् परिहरति '**नच**' इति

'प्राक्.........................।' (१।५।२)

इति

'अहंप्रत्यवमर्शो ..................।' (१।६।१)

इत्यादिसूत्रद्वये। एतत् संवादयति '**सैवच**' इति। चः संवादनद्वारमतान्तरसमुच्चयद्योतकः। तदुक्तं कक्ष्यास्तोत्रे

'सर्वेऽनुभूता यदि नान्तरर्थाः-
स्त्वदात्मसात्कारसुरक्षिताः स्युः।
विज्ञातवस्त्वप्रतिमोपरूपा
काचित्स्मृतिर्नाम न संभवेत्तत्॥'

इत्यादि॥ ८॥

ननु एवं स्मरणविकल्पज्ञानेषु अन्तरवभासस्य परमार्थवृत्तेन बाह्यतावभासस्य च मायाशक्त्यनुसारेण अविशेषः,—इति अस्फुटस्फुटत्वादियो विशेषो निर्भासते, स किंकृतः,—इत्याशङ्कायां सूत्रं

**किन्तु नैसर्गिको ज्ञाने बहिराभासनात्मनि।**
**पूर्वानुभवरूपस्तु स्थितः स स्मरणादिषु॥ ९॥**

यद्यपि अस्ति अयमविशेषः, तथापि विशेषोऽपि अस्ति विशेषहेतोः सद्भावादिति '**किन्तु**' इत्यनेन द्योत्यते। तथाहि पूर्वं बहिराभासनरूपे ज्ञाने घटाभासो निसृष्टः स्वातन्त्र्यादनन्य-

१ 'अवभासन' क।

शरणतयैव आयातो व्यवहारकालप्रथमदर्शनेन प्रथमनिर्माणकाले वा ततोऽपूर्वोन्मेषयोगादिति स्फुटः, आभासनक्रियायां हि आयतमान आभासस्तस्या अपूर्वत्वेन स्फुटतया च अपूर्वश्च स्फुटश्च घट इव निर्माणक्रियायाः, अन्यथा घटोऽपि कथं कदाचिदपूर्वः, कदाचित् नेति भवेत्, तत्क्रियारूपमेव कार्यैरन्वीयते। स्मरणादौ तु न स्वातन्त्र्यायातोऽसौ। अनुभववासनाशरणतया यतो भवति, ततः परिभोगधूसरितप्राय इव असौ निर्माल्यकल्पः परिम्लान एव अवभासः। अनुवर्तमानता हि नाम अनुभवस्य संस्काररूपता, अनुभवश्च नीलाद्याभासमयः,—इति तदनुभवतादात्म्यापत्तिबलायातः स्मरणादौ सोऽर्थाभासो न अव्यवहितत्वेन प्रकाश्यः,—इति अस्फुट एव। संक्षिप्य सूत्रार्थमवतारयन् **'प्रसरति'** इत्यन्तेन प्रथममर्धमवतारयति। **'सर्गद्वयेऽपि'** इति ऐक्यविशिष्टे इदमहंभावसामानाधिकरण्यसारे ऐश्वरे शुद्धे, इतरत्र च अशुद्धे, व्यवहारकालेऽपि यः साक्षात्काररूपाणां संविदां क्रमोऽनुभवपरम्परा तत्रापि,—इत्येवं बहिराभासनात्म ज्ञानं त्रिधा निरूपितम्। **'सहज'** इति भगवत एव स्वातन्त्र्यादुल्लसित इति यावत्। द्वितीयमर्धमवतारयति **'स्मृति'** इति। ननु परमेश्वरस्य अविच्छिन्नप्रकाशविमर्शस्वातन्त्र्यपरमार्थस्य न स्मरणादिकमुपपद्यते इत्याशङ्कां तस्यैव परिगृहीतक्षेत्रज्ञभावस्य 'स एव हि तत्र तत्र शरीरादौ स्मरति अवस्यति उत्प्रेक्षते अपोहति' इति कथितनीत्या युज्यते,—इति निरूपयन् निर्मूलयति **'क्षेत्रज्ञानाम्'** इति। ननु वृत्तौ **'ज्ञाने बहिरवभासनरूपे'** इत्यनेन ऐश्वरसर्गो न स्पृष्ट एव, तत्र कोऽभिप्रायः,—इति निरूपयति **'ईश्वरदशा'** इति। न असौ काचित्

१ 'पटः' क.। २ 'अर्थावभासः' क.। ३ 'अस्मरणादिकं' ग.।

तृतीया दशा येन पृथक्परिगणनं सहेत। सर्वानुयायिनी हि सा संवित् परमशिवसंविदिव, तेन तत्र कथमाभासचिन्ता पृथक् भवेदिति तात्पर्यम्। **'तस्य'** इति प्रमात्रन्तरैकीभावस्य। **'उक्तम्'** इति **'चित्तत्त्वस्य अन्तः'** इति वृत्तिग्रन्थेन। एतदेव संवादयति **'अत एव'** इति। यदेतदुक्तं **'प्रमात्रन्तरैकीभावः क्रमेण सृज्यते भगवता'** इति, तत एतदुपपन्नम्। यदुच्यते सर्वत्र आगमे

'प्रवृत्तिर्जन्तूनामैश्वरी'

इति। एतदेव स्पष्टयति **'तथाहि'** इति। **'कलाशक्त्या'** इति किंचित्कर्तृत्वोपोद्बलनसामर्थ्यादिच्छाविषयीकृते इष्यमाणे मामावार्थे कायस्पन्दगमनादिकमीश्वर एव आभासयंस्तथा भासते इति। **'सा तावत्'** इति एकव्यवहारमात्ररूपा अपि ऐश्वरी इति यावत्। **'परतोऽपि'** इति उक्तैवरूपगमनादिप्रवृत्तिमध्ये एव निर्भासमानेत्यर्थः। इयं तु व्यवहारकालेऽपि स्पष्टैव ऐश्वरी प्रवृत्तिरिति दर्शयति **'द्विचन्द्रादि'** इति। बहुव्रीहिगर्भो द्वन्द्वः। तत्र प्रथमेन पदेन ऐन्द्रियिको विभ्रमोऽपरेण मानसः सगृहीतः। एवं ज्ञानरूपे व्यवहारे नवां सृष्टिं प्रमात्रन्तरमेलनेन कायप्रवृत्त्या भ्रमद्वयेन च चतुर्विधामुपपाद्य क्रियारूपे व्यवहारे व्यवस्थामाह **'घट'** इति। **'तत्त्वेष्विव'** इति **'तदनन्तरं नोत्पादनम्'** इति एतदपेक्षया साधर्म्यदृष्टान्तः। साधर्म्यसमर्थनाय तु हेतुः **'आदिसर्गसृष्टत्वात्'** इति। **'धूममदृष्ट्वापि'** इति अनुमानाशङ्का निराकुरुते। प्रसिद्धस्मृतिवैलक्षण्यं समर्थयते **'नन्वभूत्'** इति। **'अवस्यति'** इति पूर्वेण संबन्धः। ननु किमर्थमादिपदमियति नीयते प्रत्यक्षसमनन्तरभाविविकल्पपरिग्राहकं

---

१ 'मध्येव' क.।

किमिति न व्याख्यायते। अत्र आह '**दृश्यमान**' इति। ननु एवमचिरवृत्तप्रत्यक्षप्रभवोऽपि विकल्पो दृश्यमानविकल्पवदेव पूर्वकालत्वापरिस्फुरणादसंस्कारज एव युक्त इति न असावादिग्रहणेन संग्राह्य इत्याशयेन पक्षान्तरमाह '**अथवा**' इति '**स नैसर्गिक एव**' इति वक्ष्यमाणसूत्रयोः स्वतन्त्रविकल्पेषु विकल्पनीयार्थानां योजनांशे पशोः स्वातन्त्र्यं वक्ष्यते, ननु योज्यमानांशे, नहि अननुभूतं जलं ज्वलनं च योजयेत् कश्चिदिति। '**तेऽर्था**' इति तद्विकल्प्यमानार्थविषयतया योज्यमानांशविषया विकल्पा निर्दिष्टा आदिग्रहणेनेति संबन्धः। विषयविषयिणोरत्र न वास्तवो भेदः,–इति निरूपयितुमुपचारेण '**तेऽर्था**' इति तदर्थविषया विकल्पा मन्तव्याः, संस्कारसंज्ञोऽन्तस्तमोवरणप्रच्छन्नाभासत्वेन संस्कार इति यस्य नाम तादृशोऽर्थावभासस्तस्मादेव आवरणापसरणमहिमप्रबुद्धात् जाता, तस्य अर्थाभासस्य यद्यपि तदानीं न पारमार्थिकं संवेदनेन ऐक्यं सुषुप्ततया शक्तिरूपस्य अवस्थानात् तु तमसा वरणेन पृथगाभासो भवन् न भवेत् दर्शीयो? यतः संपन्नस्तत इदानीं वरणविगमे स एव पृथगाभासोऽधुना समुन्मीलितः,–इति तदपृथक्करणरूपा स्मृतिरित्याह। एतदेव स्पष्टयिष्यति '**अनुभूताभास**' इत्यादिना। '**विशेषानिर्देशात्**' इति। अकर्तृकायाश्च क्रियाया अभावो विशेषानभिधाने सामान्यस्य कर्तृत्वेन प्रतिपत्तिरवश्यं भाविनी,–इति अभिप्रायशेषः॥ ९॥

ननु बहिराभासनात्मनि ज्ञाने नैसर्गिकत्वेन अन्तराभासस्य अव्यवधानेन बहिराभासनमित्याभासगतं स्फुटत्वमित्युक्तं, तदन्यत्र स्मरणादौ अन्यव्यवधिना बहिराभासनात् तात्कालिकत्वा-

१ 'संग्राहः' ग.। २ 'संसारसंतः' ग.। ३ 'व्यवधानात्' क.।

भावादस्फुटत्वमाभासस्य,–इति लभ्यते एव, तत्किमर्थं द्वितीयमर्धम्। सत्यं, एवं तु अनुभववर्जं सर्वसविदामेक एव वृत्तान्तः स्यात्, नच एवमिति दर्शयति सूत्रेण

स नैसर्गिक एवास्ति विकल्पे स्वैरचारिणि।
यथाभिमतसंस्थानाभासनाद् बुद्धिगोचरे ॥ १० ॥

'स्वैरम्' इति परप्रेरणनैरपेक्ष्येण स्वतन्त्रतया यश्चरति उदेति व्येति च तच्छीलश्चेतसो व्याक्षेपसात्मीभावात् मनोराज्यादिविकल्पस्तत्र नीलादेरन्तराभासमयस्य यो बहिराभासः, स नैसर्गिको न न भवति, अपितु अस्ति। ननु न असौ नैसर्गिकः, तत्रापि हि तद्रूपाश्च पूर्वानुभवविषयीकृतमेव विकल्प्यते इति चोद्ये निरूपयति 'यथा' इति, श्वेत दन्तदशकाकीर्णकरत्रयकलितवदनं दन्तिनमन्तः प्रमातृभूमौ स्थित स्वच्छबुद्धिमकुरलक्षणे बाह्यगोचरे विकल्पस्तात्कालिकमाभासयति स्वेच्छानुसारेण,–इति संस्थानयोजनांशेन अस्य अनुभवानुसारित्वमिति अस्ति नैसर्गिकोऽसौ। 'नास्ति' इति योज्यमानोऽपि भागः पूर्वकालपरामर्शादनुभवानुपजीव्येव, अर्थतत्त्वचिन्तया तु प्रागुक्तं 'तथापि तेऽर्था' इति। अनुभवानुसारेण तु गजनिमीलिकया आभासवस्तुवादे यथाभास व्यवस्था,–इति नवत्वमेव युक्तमिति सूत्रार्थः। ननु सौगतवत् किमिह विकल्प एव स्वतन्त्रो येन वृत्तौ तथा उक्तमिति भ्रान्तिं निरस्यति 'क्षेत्रज्ञ' इत्यादिना। उपचारफलमाह 'देशादि' इति। प्राच्यानुभवविषयीकृतवस्तुगतदेशकालप्रमात्रन्तरसाचिव्यादिपारतन्त्र्यपराकरणपरणा इयमुक्तिरिति यावत्। 'तस्मात्' इति आभासमानतैव वस्तुनः परमार्थः, नच असावसंवेद्यमानाङ्गुलिमोटनहठारोप-

१ 'तत्त्वे' ग.।

णार्हो भवति,—इति भावः। '**विभागः**' इति संस्कारजत्व-तदभावयोरनुभवसिद्धोऽयं विषयविभागोऽभ्युपगम्य इत्यर्थः। अनेन विषयविभागेन यावति पूर्वदृष्टतानुसन्धिरुपयोगी, तावति शब्दनगोचरीकरणीयेन। नच तात्त्विकं तन्निर्माणमिति स्फुटयति '**परस्तात्**' इति

'पृथग्दीपप्रकाशानाम्············।' (२।३।७)

इति सूत्रे। ननु स्वालक्षण्यापत्तौ तद्विरुद्धा सामान्यरूपता हीयेत, ततश्च तन्मुखेन शब्दनीयता या समर्थिता, सापि विघटेत। नैवमित्यत्र हेतुमाह '**तथा**' इति। नहि निकुरुम्बरूपत्वे तद्रूपत्वं विरुद्धं योधरूपत्वमिव सेनात्वे इति। '**नित्यं व्यापकं च**' इति सकल[1]कालदेशयोगात्[2]। ततश्च पूर्वदृष्टं च तदा दृष्टं च,—इति एकमेव तत्, नतु अनुसन्धानबलात् यत्नत एकतानेयं, अभिलापसंसर्ग[3]संकेतकरणोपयोगी विकल्पप्रत्ययः, तद्वासनाप्रबोधादवभास ऐन्द्रियिकं विज्ञानं यस्य तादृशं तत् सामान्यं भवतीति संबन्धः। ननु यदि अत्र अंशे पूर्वानुभवसंस्कारजत्वं, किमन्यत् तर्हि नैसर्गिकम्। आह '**स्वलक्षण**' इति। '**प्रागेव**' इति पूर्वसूत्र एव इदं प्रमाणेन उपपादितम्। आभाससारे हि पदार्थवर्गे आभासनक्रियैव प्राधान्येन विजृम्भते, तत एव क्रियाशक्तिविस्फारमात्रं भगवतो जगदिति कृतमतयो मन्यन्ते। आभासनक्रिया च यावद्-पूर्वा नैसर्गिकी व्यवधानवन्ध्या तात्कालिकतालिङ्गितस्फुटभावा वर्तते, तावदाभासोऽपि स्फुटोऽभिनव एव। घटस्यापि इह इत्थमेव नवता, न अन्यथेति दर्शितमेतत्। अत एव पूर्वदृष्टाभासमुखेन न कुत्रचित् परमार्थतो निर्माणसंकथा सावकाशा, प्रकाशरूपतया सर्वस्य सदैव स्वयमेव परमार्थसत्त्वे कस्यचित्

---

१ 'उपचारे' क.। २ 'सकलदेशयोगात्' ग.। ३ 'संसर्गः' ग.।

निर्माणमित्यवकाशाभावात्, आभासनक्रियामुखेन तु अपूर्वत्वं कुलगिरिप्रभृतेरपि

'प्रतिक्षणमविश्रान्त·········।' (त०वि०११२)

इति कथितयुक्त्या भवति,—इति तदपि सृज्यते एवेति सदा-सृष्ट्यादिशक्तियोगोऽपि भगवति न न उपपद्यते इति तात्पर्यम्। यत् यथा प्रकाशते, तत् तथा परमार्थसत् प्रकाश इव, तथाच भावानामपूर्वतया सपूर्वतया च आभासनमिति स्वभावहेतुः। परमार्थसत्ताव्यवहारो हि तथाप्रकाशनमात्रेण व्याप्तो निमित्तान्तरायोगात्। '**इदन्ता**' इति नालिकेरद्वीपवासिनो यदि पृथिव्याद्याभासो न विदितः सत्त्वयस्तुत्वाभासस्तु स्वशरीरदर्शनसमये विदित एवेति मन्यते। ननु यदा गर्भशरीरे प्रथममस्य साहा संवित् देहप्राणविषया अहमिति प्रबुध्यमाना देहादिकमपि विषयीकरोति, तदा अत्यन्तापूर्वत्वेन तस्य देहादिस्वलक्षणस्य सकेतविषयीकृततााभावात् कथं तत्र अभिलापसंस्पृष्टता प्रत्ययस्य भवेत् यतः संस्कारजत्वं स्यात्,—इति शङ्कां निकृन्तति '**तथापि**' इति।

'स्वभानमवभासस्य·············।' (१।५।११)

इति हि अत्र प्रागुपपादितम्। इदन्ताविमर्शे इकारादिसभेदमन्तरेणापि सहजोऽङ्गुलिनिष्क्रमनिर्देशप्रख्यो भगवन्मायाशक्त्युपपादितः समस्तेतरशब्दसंकेते चित्रकर्मकुड्यकल्पः संभवत्येव कृतकः इति। इत्थं विषयविभागमभिधाय प्रकृतमुपसंहरन्ननुवध्नाति '**एवंच**' इति। '**सामान्यरूपतायाम्**' इति अनाद्दृतपरस्परसमेलनाकलितपृथग्भावायामित्यर्थः। '**पूर्वं पूर्वं दृष्टमेव**' इति पूर्वदृष्टतामेव प्राधान्येन समुल्लिखति, यावदर्थस्य स्वत-

१ 'कल्पित' क'।

त्रविकल्पं प्रति कल्पनीयतां गतस्य योऽवभासो, न असौ पूर्वानुभूतः । तत्रैव तु विकल्पे यो योज्यमानरूपः सामान्यांशः, स न अपूर्वो, नहिच विकल्पस्तत्र अंशे स्वतन्त्रोऽनुभववासनोपजीवित्वादिति । **'तत्र'** इति वृत्तौ स्वतन्त्रविकल्पो निर्दिष्टः, तस्य च अधिकरणत्वादौपश्लेषिकादेश्च अधिकरणस्य स्वतन्त्रवस्तुद्वयविषयस्य इह असंभवात्, विषयविषयितात्मनश्च अनुक्तसमत्वप्रसङ्गादन्तर्भावनलक्षणव्याप्यमधिकरणं प्रतीयते,–इति दर्शयति **'स्वतन्त्र'** इति । एवमर्थसामर्थ्यादन्तरर्थलाभं व्याख्याय प्रकरणसामर्थ्यादपि व्याचष्टे पक्षान्तरपरिग्रहद्वारेण **'अथवा'** इति । **'एवं स्मृतौ'** इति हि यदत्र उपसंहृतम् **'अन्तराभासः स्थित एवेति'** तदेव सूत्रद्वयेन अमुना विभागेन प्रकटीकृतमिति तदनुसारेण **'विकल्पे'** इति सौत्री सप्तमी अन्तरर्थं प्रस्तुतमाक्षिप्यैव वर्तते, तदनुसारेण च वृत्तावपि तत्रशब्दः । वृत्तिव्याख्यानद्वारेण च सौत्रमत्र तत्त्वं व्याख्यातं, वृत्तिविकासरूपा विवृतिरिति हि उक्तम्, एवमग्रेऽपि तत्र तत्र अवधातव्यम् ॥ १० ॥

अन्तराभाससंभवोपपादनप्रसङ्गायातादाभासवैचित्र्यविचारात् तदपि अयत्नसिद्धं जातं

'यत्सिद्धावन्यप्रकरणसिद्धिः ।' (न्या० सू० १।१।३०)

इति अधिकरणसिद्धान्तलाभात् यदिह शास्त्रे स्वात्मनि ईश्वररूपताप्रत्यभिज्ञोपायप्रकटीकरणं नाम मुख्यं प्रयोजनमिति निरूपयति सूत्रेण

अत एव यथाभीष्टसमुल्लेखावभासनात् ।
ज्ञानक्रिये स्फुटे एव सिद्धे सर्वस्य जीवतः ॥ ११ ॥

बहिरत्यन्तासत्त्वादननुभूतस्य सम्यगुल्लेखनं निर्माणपूर्वकं यद-

वभासनं प्रसङ्गवशेन दर्शितम्, अस्मादेव हेतोः सर्वस्य ब्रह्मादेरपि कीटपर्यन्तस्य वेद्यरूपदेहाद्यात्ममानितया प्राणधारणवतो जीवतो 'ज्ञानं' अवभासनात्मकं, 'क्रिया' च स्वोल्लेखनिर्माणरूपा स्वातन्त्र्येणेति शक्तियुगलकमपि सिद्धमिति। तदिदानीं सुष्ठुतमां दृढीभूत यदवोचाम–सर्वस्य आत्मा महेश्वरो ज्ञानक्रियायोगात्–इति,–इति सूत्रार्थः। 'सर्वेषाम्' इति बहुवचनोपक्रमम्। 'ऐश्वर्यम्' इति एकवचनं पारमार्थिकमद्वयमेव मायीये सत्यपि द्वयावभासे इति दर्शयति। यतो बहिराभासीक्रियते, ततो बहिष्क्रियेत्यादि,–इति संबन्धः। अत्रैव च मध्ये अस्यैव हेत्वर्थस्य व्यतिरेकद्वारेण स्फुटीकरण 'ननु' इति। वृत्तियोजनं च एतन्मध्य एव, तदाह 'इत्यादि'। 'यथा' इति येन प्रस्तुतप्रसङ्गप्रकारेण इदमायातं–यत् क्षेत्रज्ञो न केवलं स्मृत्यैव बुद्धिभूमौ वेद्यत्वेन बाह्यत्वेन अर्थमाभासयति, यावत् स्वतन्त्रविकल्पनव्यापारेणापि–इति, तेन प्रसङ्गप्रकारेण यदर्थोऽयं शास्त्रारम्भोद्यमः, सोऽपि ईश्वररूपप्रत्यभिज्ञापनोपायनिरूपणक्रमोऽवसितो लब्धः। कथम्। आह 'अनेन' इति स्वतन्त्रविकल्पनात्मकव्यापारप्रकारेण उक्तेनेत्यर्थः। सिद्धेः समुच्चयोऽन्यदपि पूर्वप्रकृतं सिद्धं न केवलमविदूरप्रक्रान्तमिति यः, स चेन वृत्तौ द्योत्यते। 'सूत्रे तु' इति एवकारेण अयं सिद्धिसमुच्चयः कृतोऽतःशब्दसहायेन। अतःशब्देन हि पूर्वसूत्रहेतुता न त्यक्ता,–इति सूचितम्। एवशब्देन तु अत्र हेतुतां गच्छन्नेव अयमर्थः साध्यान्तर प्रसाधयति, नतु तत्र हेत्वन्तरमभिधानीयमिति हेत्वन्तराभिधानावकाशव्यवच्छेदं द्योतयता सिद्धिसमुच्चयः क्रियते इति। सर्वत्र इयम् 'अत एव' इत्यस्य गमनिका मन्तव्या। 'प्रवृत्तिविशेषैः' इति।

१ 'कीटक', ग.। २ 'उल्लेख' क.। ३ 'ननु' क.।

तिर्यञ्चोऽपि हि अकस्मादेव त्रासहर्षयुक्ता इव

'बुद्धिपूर्वां क्रियां दृष्ट्वा...............।'

इति न्यायेन । श्रीमद्रुद्रप्रद्युम्नपादैः संविच्छक्तिप्रसरमात्रतां षट्त्रिंशत्तत्त्व(त्त्व्या)मुपपाद्य यत् वितत्य विकल्पप्रतिभासनस्य स्वातन्त्र्यमुदितं, तत्र एतत्सूत्रार्थ एव सारमिति मन्तव्यम् । तदेवमियता ज्ञानस्मृतिशक्त्योरनुग्राहिका अपोहनशक्तिर्वितत्य समर्थितेति शिवम् ॥ ११ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामपोहनशक्तिविमर्शः षष्ठः ॥ ६ ॥

## अथ सप्तमो विमर्शः ।

स्वप्रसरप्रेङ्खितविलसदूर्मिसंक्षुभितचिद्रसापूरम् ।
अमृतस्यन्दनसारं भैरवसंविन्महार्णवं वन्दे ॥

एवममुना विमर्शत्रयेण ज्ञानस्मरणापोहनशक्तयः प्राधान्येन निर्णीताः, शक्तिमत्स्वरूप तु यदत्र स्पृष्टमिव, तत् तासामेव स्वातन्त्र्यापसारणेन शक्तित्वमेव समर्थयितुम् । इदानीं तु तच्छक्त्याश्रयोऽस्ति, स च तच्छक्तिसंयोजनवियोजनविश्रमणतिरस्करणप्रथनादिस्वाच्छन्द्यसारतया महेश्वररूपो, नतु दहनपचनास्वेदनादिशक्त्याश्रयजडप्रायहुतवहस्थानीयः,–इति यदुभयं

'न चेदन्तःकृता·········· ।' ( १।३।७ )

इत्यत्र सूत्रे सूचितं, तत् निर्णेतव्यम् । तत्र आश्रयमात्रं तावदस्ति,–इति निर्णयाय

'या चैषा प्रतिभा··················।'

इत्यादि

'··················व्यवहारोऽनुभूयते ।'

इत्यन्तं श्लोकचतुर्दशकम् । तत्र एकेन आश्रयस्य स्वरूपमात्रेण अभिधानम् । ततोऽपि द्वयेन सति एकत्र आश्रये व्यवहार उपपद्यते, न असति,–इति क्रमेण अन्वयव्यतिरेकोपपादनम् । व्यवहारश्च प्रमातृनिष्ठोऽपि भवन् भावरूपताविश्रान्तिः कार्यकारणभावात्मा श्लोकेन उक्तः, प्रमातृविश्रान्तिपरमार्थ एव तु यः स्मरणलक्षणः, सोऽपि एकेन, सर्वव्यवहारानुयायी तु सत्यासत्यप्रविभागलक्षणो व्यवहारः श्लोकाष्टकेन, एकेन पिण्डार्थस्य निगमनमिति । अथ प्रतिसूत्रमर्थो निरूप्यते । यदुक्तं–सर्वस्य

---

१ 'मिथ्य' ग.

जीवतो ज्ञानक्रिये सिद्धे इति, तत् कथम्, ज्ञानक्रिययोराश्रयो हि वैशेषिकदर्शने दूषित एव

'ततो भिन्नेषु धर्मेषु ········· ।' ( १।२।६ )

इत्यत्रान्तरेव, तदाशङ्क्य स्वदर्शनानुसारेण तमेकमाश्रयमुपपादयिष्यन् स्वरूपतस्तावदुपक्षिपति

**या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता।**
**अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥ १ ॥**

प्रतिभाति घट इति यद्यपि विषयमुपश्लिष्यन्ती इयं क्रिया लक्ष्यते, तथापि न अस्य तत् स्वज्योतिः; किन्तु संवेदनमेव तत् तथा भाति मां प्रति भातीति प्रमातृनिष्ठतयैव स्फुरणात्। यच्छ्रुतिः

'तमेव भान्तमनुभाति सर्वम्।' ( क० उ० ५।१५)

इत्यादि। तत एव भट्टचन्द्रानन्देन

'पश्यतो रूपमालेखाद्भातो भानानुषङ्गि यत्।
प्रतीपभानं प्रतिभा भावानाम्········ ॥'

इति भावधर्मत्वेन अभिधाय अपि **'आत्मसंश्रया'** इति संविद्विश्रान्ततैव उक्ता, केवलं विषयोल्लेखानुषङ्गात् संवेदनरूपमेव तत्प्रतिभानं बहिः सक्रमत्वादिधर्माधारतां धत्ते। अतश्च स स इति क्रमाक्रमादिचित्ररूपो यः पदार्थानां वस्तूनामैश्वर्यस्वातन्त्र्यरूपदेशकालशक्त्युत्थापितः क्रमो देशकालपरिपाटी, तेन रूषिता उपहिता

'केवलं भिन्नसंवेद्य··············।' ( १।५।२१ )

इति कथितनीत्या **'या प्रतिभा एषा'** इति सर्वस्य सदैव स्वप्रकाशा वस्तुतश्च अन्तर्मुखेन वपुषा देशकालकलनावैकल्यात्

'**अक्रमा स**' एव भगवान् '**अनन्तचिद्रूपः**' देशकालादिपरिच्छेदविरहितसंवित्स्वभावः प्रमाणप्रमितिसमूहस्य यथारुचिसंयोजनादिकरणस्वातन्त्र्ययुक्तः शुद्धाहंप्रत्यवमर्शमयः कल्पितेश्वराणां ब्रह्मविष्ण्वादीनां स्वांशाभिषेकोपकल्पितैश्वर्यो '**महेश्वरः प्रमाता**'। सा च '**प्रतिभा**' अनपह्नवनीया,—इति अन्तर्मुखेन वपुषा आश्रयः सिद्ध एव । न अत्र यत्नान्तरमास्थेयमिति चेन द्योतयति । सूत्रार्थमवतारयति '**यावच**' इति । चार्थो व्याख्यातः । यत् किञ्चिदाभासते, तस्य अन्तर्मुखं यदवभासनं, स आत्मा प्रमाता, स एवच स्वभावः, तदेवच ऐश्वर्यमिति संबन्धः । चार्थमेव पूर्ववस्तुसिद्धावस्य अयत्नसिद्धत्वमित्येवंविधसमुच्चयलक्षणं निरूपयितुं पूर्वोक्तमनुभाषते संक्षेपनिगमनेन '**तदेवम्**' इति । '**तत्र**' इति एवमुपपादिते सति । क्रमपदेनैव बाह्यता आक्षिप्ता । सा च

'उभयेन्द्रियवेद्यत्वं तस्य कस्यापि शक्तितः ।' (२।४।४)

इत्यत्र मायाप्रमातृकरणगोचरत्वाभिमानभूमित्वमेव,—इति वक्ष्यते । तत् दर्शयति '**बुद्ध्यक्ष**' इति । बुद्ध्यक्षशब्देन अन्तःकरणमपि द्रष्टव्य, मनोगोचरोऽपिहि बाह्य एव । '**अत एव**' इति एतदेव बाह्यत्वं प्रतिपाद्यत्वेन अभिसन्धाय आभासशब्देन उक्तम्। कथं तदनुक्तौ तत् प्रतीयते । आह बहीरूपत्वादेव अर्थताप्रधानत्वमेवेत्यतो हेतोराभासताखीकारे तत् प्रतीयते इति युक्तम्। '**या प्रतिभा**' इति उपक्रमे सेति वक्तव्ये पुनर्निर्देशस्य क आशय इति '**बाह्यावभास**' इति । चित्तत्त्वस्य या अन्तरक्रमाभासता, सा लोकस्य मायाशक्तिविमोहबलात् न सिद्धेति विधीयते सिद्धं क्रमिकं बाह्यावभासमनूद्य '**या**'

१ 'लोकेऽस्य' क. ।

इत्यनेन । नच तावत्मात्रतैव विधीयते येन सेति भवेत्, किन्तु **'प्रमाता महेश्वरः सा प्रतिभा'** इति प्रमातृत्वमाहेश्वर्याभ्यामुपचिता लब्धपरिपोषा, तत एव उपचयबलादेव उचितः पुंस्त्वनिर्देशः । **'वृत्तौ तु'** इति फलनिरूपणं वृत्तौ कृतमिति न यच्छब्दो विधास्यमानधर्माधारताद्योतकोऽनुवादकत्वेन उपात्तः, नापि धर्माधारताभिसन्धानपात्रीकृतपूर्वरूपनिष्ठविवक्षितधर्मान्तराधारताद्योतको विधायकत्वेन तच्छब्दः । नच सर्वथा सौत्रौ विध्यनुवादौ स्पष्टावित्याह **'एवकारेण'** इति । स एव आत्मेति हि उक्ते अन्यः कश्चिदात्मेति शङ्का यावत् गलति, तावत् विधानं फलकृतमेव भवतीति । **'आभास एव आत्मा'** इति वृत्तिग्रन्थं संगमयति आशङ्कां शमयन् **'यद्यपि'** इत्यादिना । ननु अन्तर्मुखत्वात् यस्य न कालयोगः, स कथं **'सर्वसंवित्कालव्यापी'** इति उक्तः । अत्र आह **'अथ च'** इति। **'उक्तम्'** इति वृत्तौ सूत्रे च। ननु यदि स एव इत्थं स्फुरति तच्छक्तिविकासो विश्वमिति, तर्हि अलं तत्प्रत्यभिज्ञामुपदिश्य । अत्र आह **'केवलम्'** इति । एवंभूतं यदर्थानां क्रमेण

'किन्तु नैसर्गिकः··················।' ( १।६।९ )

इत्यादिसूत्रद्वयदृष्ट्या अवभासनं, तस्येति समस्तं पदम् ॥ १ ॥

एवं प्रतिज्ञातं शक्तिमत्स्वरूपमुपपत्त्या उपपादयितुमन्वयं तावदाह सूत्रेण

**तत्तद्विभिन्नसंवित्तिमुखैरेकप्रमातरि ।**
**प्रतितिष्ठत्सु भावेषु ज्ञातेयमुपपद्यते ॥ २ ॥**

'संविन्निष्ठा विषयाणां व्यवस्थितयः ।'

---

१ 'सा च' क. । २ 'न स्पष्टौ एव' ग. ।

इति यत् घोष्यते, न तत् भिन्नासु संविद्रूपासु प्रमासु विश्रम-णमात्रं मन्तव्यम्, तावता हि न सिध्यति व्यवहारः, अपितु तास्ता नीलसुखादिविषयेषु विभिन्ना याः संविदो निश्चयान्ताः, तान्येव मुखानि उपायास्तैर्नदीस्रोतःस्थानीयैर्नीयमाना हठवा-हेनैव अहमित्येकमहासंवित्समुद्रे यदा आभिमुख्येन विश्रान्तिं यान्ति, तदा एषा ज्ञातेयं परस्परं स्वस्वामिताकार्यकारणभावादिः समन्वयो व्यवहारात्मा उपपत्त्या घटते । ज्ञातीनां भावो ज्ञातेयम्, कर्म च एषा परस्पर जानीयुरिति, तदेषामन्योन्य-योगक्षेमोद्वहनेन समन्वयो लक्ष्यते, परमार्थतश्चिद्रूपताप्राण एव अयं युक्त इति निरूपयितुं गम्यमानव्यतिरेकमुखेन सूत्र-मवतारयति **'यावत्'** इति । निपातावेतौ यदिति तदिति चार्थे । अथवा कालविशेषावधिनिरूपणाय परिमाणशब्दौ। एवं-विधाभ्युपगमकालावधि न समन्वयव्यवस्थानं समर्थयितुं शक्य-मिति **'ऐकध्यम्'** इति प्रमातृरुचितः कतिपये केचिदेव कदाचिदिति भावः । **'समानजातीयत्वात्'** इति । अने-न सांख्यादीनां भिन्नव्यापकचिन्मात्रपुरुषवादिनां मोक्षाव-स्थायां कथंकारं भिद्येरन् पुरुषाः स्वरूपदेशकालवैचित्र्यासंभवे सति,–इति आवेदितम्। अन्योन्यमेलनं प्रमातॄणां प्रमेयानां च बहुशाखम्। व्यवहारो व्यवहारान्तरानुबन्धी,–इति विशेषाभि-प्रायेण सप्तमीसमासः, सामान्यरूपताश्रयेण अभेदाशयेन कर्म-धारयो विवृतः । नच आभासजीवितभाववादे व्यवहारस्य अवस्तुत्वमाभासमानत्वादेवेति दर्शयति **'ततः'** इति ॥ २ ॥

ननु सर्व एव समन्वयः कार्यकारणभावे विश्रान्तः, स च भिन्नानामेव बीजाङ्कुराग्निधूमादीनामित्याशङ्क्य सूत्रेण प्रागुक्तम-

---

१ 'उन्नीयमाना' क । २ 'तदान्योन्य' ग । ३ 'यदीति' ग. ।

न्वयव्यतिरेकाभिधानद्वारेण प्रसङ्गदिशा प्रसङ्गविपर्ययलाभो भविष्यति,—इति उपोद्गलयति

देशकालक्रमजुषामर्थानां स्वसमापिनाम् ।
सकृदाभाससाध्योऽसावन्यथा कः समन्वयः ॥ ३ ॥

**'अन्यथा'** इति यदि एकप्रमातृविश्रान्तिर्न उपगम्यते, तदा अर्थानां नीलसुखादीनां तज्ज्ञानानां तन्निश्रयानां च देशतः कालतश्च क्रमेण भिन्नानां स्वरूपमात्रपरिनिष्ठितानां च कः समन्वयः । नैव कश्चित् । सहि समन्वयः सकृदाभासेन¹ देशकालस्वरूपाभासयोजनैक्याभासेन साधयितुं संपादयितुं ज्ञापयितुं शक्यः, न अन्यथा । सकृच्छब्दो भेदनिषेधतात्पर्ये प्रयुक्तः । सूत्रार्थं संक्षेपेण उपक्षिपति **'पौर्वापर्यादिना'** इति । कथमिव स्यात् समन्वयः, न कथंचिदिति । अत्र अयं हेतुः—क्रमवत्त्वलक्षणात् पौर्वापर्यपथात् देशकालभेदादादिपदाक्षिप्ताच्च स्वरूपभेदात् । एतच्च न असिद्धमेषामिति व्याकर्तुं सूत्रानुसारं पुनः सामानाधिकरण्येन विवृणोति **'देश'** इत्यादिना । एवं व्याचक्षाणः सूत्रपदानामपि उभयथा योजना कर्तव्येति शिक्षयति । यदिवा पौर्वापर्यं कार्यकारणभावः, आदिशब्दः प्राधान्यवाची । तदयमर्थः—कार्यकारणभावप्राधान्येन यः संबन्धः इति उच्यते, तत्र संगत्या बन्धनमन्योन्यापरित्यागः इत्ययमेव अर्थो न घटते । **'यदि'** इत्यादिना **'न अन्यथा'** इति सौत्रं विवृणोति **'तदा'** इति व्यवहारकाले । आभाससारं यावदाभासं भावानां तत्तद्रूपमिति हि उक्तमसकृत् । **'व्यवहारापेक्षया'** इति यदुक्तम्, तदेव स्फुटयति **'प्रमातृव्यापारत्वेन'** इति । **'भावचाचिन्या'** इति क्रियावा-

१ 'आभासने' ग. ।

चिन्या। भावशब्देन परिस्पन्दमानसाध्यसाधनव्यापाररूपतामपि आह। ननु किमर्थमयं वृत्तौ भेदेन निर्देशः कृतः। आह **'स्वरूप'** इति स्वरूपे आभासने प्रकाशननिश्चयनरूपे यत् भेदप्रतिपादनं, तदाशङ्काशमनाय। ननु एवमपि देशकालभेदात् समन्वयो भविष्यति, किमेकप्रमातृविश्रान्त्या,—इत्याशङ्कायामाह **'अव-भास'** इति। ननु एतावता **'स्वसमापिनाम्'** इति व्याख्यातं वृत्तिकृता, ननु प्रत्ययः ? पादः न न वर्तित इत्याह **'अवभा-सभेदादेवच'** इति। **'वक्ष्यते'** इति

'क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः।' (२।१।४) इत्यत्र। **'अभेदमयः'** इति स्वरूपतः। **'अभेदावभास'** इति संवेदनतः। स्वरूपाभेदप्राणो देशाभेदः इति। एतदेव स्फुट-यति **'स्वरूपमेव हि'** इति। तदवष्टम्भयोगात् तु आधारोऽपि देश इति व्यवह्रियते। भेदाभेदमय एव तर्हि अर्थोऽङ्गीक्रिय-ताम्, नैतदिति ब्रूते **'नच'** इति। **'तत्'** इति पूर्ववाक्यार्थ-रूपं विरोधादयुक्तत्वम्। **'एकप्रमातृमयत्वम्'** इति कर्तृप-दम्। **'अग्रे'** इति कार्यकारणभावस्मरणबाधादिसमर्थनावसरे। **'सोऽभिन्न'** इत्यादिवृत्तिः कं सूत्रांशं वर्तयति,—इति निरूप-यति **'एतच्च'** इति। अन्येन प्रकारेण **'कः समन्वयः'** इति यत् सौत्रं, तत्र अन्यशब्देन यः प्रकृतः प्रकार आक्षिप्तः, सोऽनेन वृत्तिग्रन्थेन वर्तित इत्यर्थः ॥ ३ ॥

कः समन्वय इत्युक्तं, तत्र बहुव्यापी कार्यकारणभाव एव तावत् परीक्ष्यते सूत्रेण

प्रत्यक्षानुपलम्भानां तत्तद्भिन्नांशपातिनाम्।
कार्यकारणतासिद्धिहेतुतैकप्रमातृजा ॥ ४ ॥

इह अग्नेरनुपलम्भे धूमस्य अनुपलम्भः, ततोऽग्नेः प्रत्य-

क्षततया उपलम्भेऽपि तत्काल एव अनुपलब्धस्य धूमस्य अनन्तरक्षणे प्रत्यक्षीभावादुपलम्भ इत्येवं प्रत्यक्षद्वयमनुपलम्भत्रयं च,—इति प्रत्यक्षानुपलम्भपञ्चकं प्रसाध्य अन्वयव्यतिरेकसिद्धिपरमार्थां कार्यकारणभावस्य प्रसिद्धिमभिमन्यन्ते । तच्च एषां मनोरथमात्रम् । तथाच अग्निप्रत्यक्षेण अग्निरस्ति,—इति निश्चीयतां, धूमप्रत्यक्षेण अपि धूमः, अनुपलम्भैरपि द्वयाभावो धूमाभावश्च,—इति व्यवह्रियते । तदेते प्रत्यक्षानुपलम्भा वह्निर्धूमो वह्न्यभावो धूमाभावः इत्येवं प्रातिपदिकार्थमात्रनिश्चयनिष्ठा घटः पटः इति यथा । तदेते तस्मिंस्तस्मिन् भिन्ने अंशे भागे निपतनशीलाः, सति अग्नौ धूमो, वह्न्यभावे धूमाभावः,—इत्येवंभूतसप्तम्यर्थस्वभावमपेक्षालक्षणं कार्यकारणभावमन्वयव्यतिरेकसतत्त्वं कथं निश्चिनुयुः । अस्मद्दर्शने तु उक्तप्रत्यक्षानुपलम्भस्रोतोऽनुसारेण तानि तानि प्रमेयाणि एकचित्सिन्धुसंधुक्षणसंक्षणानि[1] यतस्ततः एकीभूतानि प्रमातृस्वातन्त्र्योत्थापितापेक्षालक्षणस्वरूपवैलक्षण्यानि, नतु द्वन्द्वपदार्थसदृशि प्रमात्रा भास्यन्ते । तथाभास्यमानतैव कार्यता, कारणता च तथाभासनम् । कार्यतां वृत्तौ पूर्वं व्याचष्टे; परतस्तु **'तत्तत्'** इत्यादिसूचितां परदर्शने तदनुपपत्तिम्,—इति तात्पर्यं वृत्तेः । पदार्थं तु विवृतिकृदेव योजनापेक्षे[2] योजयिष्यति बहुतरव्यापित्वं सूचयितुं, अवतारणेऽपि—शब्दो भिन्नग्रहणेन इदमाह—यदेव एकं साधयितुमन्विष्यते प्रमाणं प्रत्यक्षादि, तदेव क्रमिकं स्वयं भिन्नं भवदेकप्रमेयसिद्धिं कथं विदधीत विरुद्धत्वात्,—इति तस्य ऐक्यापादने यतनीयं, प्रमातृतत्त्वमेवच तावतः प्रत्यक्षादेरेकमन्तर्मुखं स्वसंवेदनरूपं भवदुत्सहते विहन्तुमनेकताम् । उत्पत्तिः कार्यता,

---

१ 'लक्षणानि' क. । २ 'पेक्षं' क. ।

उत्पादनं कारणता, तदुभयमपि भावस्य भावरूपतां मुक्त्वा न अभ्यधिकं किंचित् सत्तायां वेति वक्ष्यते

'यदसत् तदसत्··· ················ ।' ( २।४।३ )

इत्यत्र प्रकरणे

'नच युक्तं जडस्यैवम्'·········· ।' ( २।४।१९ )

इत्यन्तेन ग्रन्थेन। **'आपाद्य प्राप्य'** इति प्रत्यक्षादीनामेव कर्तृत्वम्। परपक्षे तु अनुपपत्तिरस्य अर्थस्येत्याह **'यदा तु'** इति। **'स्वविषयाभासम्'** इति। **'स्वं व्यवहारयति'**इति तद्व्यवहारकं विकल्पमुत्थापयतीत्यर्थः। एवकारः **'किं पुनः'** इति वक्ष्यमाणात् दूरापेततां बुद्धावुन्मेषयति, अभ्यभावे हि अस्ति तावत् नामग्रहणमग्नेरित्याशयः। **'तदा'** इति अग्न्यभावव्यवहारकालस्य सूचनं, नतु तत्परामर्शनं, तथाहि सति दाप्रत्ययोगो न युज्येत। अत्र बौद्धीयं सिद्धान्तमाशङ्कते **'अथ'** इत्यादिना **'क्षतिः काचित्'** इत्यन्तेन। न कार्यकारणभावः कश्चिदेकोऽस्ति यं प्रसाधयितुं प्रत्यक्षानुपलम्भा एकप्रमाणीकर्तव्या यत्नेनेति तात्पर्यम्। **'अत एव'** इति यतो यथादृष्टोऽवसीयते, तत इत्यर्थः। **'यथादृष्टः'** इति 'सुप्सुपा' ( २।१।४ ) इति समासः। विकल्पेन अनेकोऽपि अर्थो यत इत्थमवसीयते,—इत्यतो हेतोः, तेन कार्यकारणता अवसितैव भवतीति संबन्धः। ननु एवमवसायादेव कथं सा अवसिता भवेत्,—इति भ्रमं हेतुनिरूपणेन शमयति **'यस्य हि'** इति अग्नेः। **'यदीयसत्ताम्'** इति धूमसत्ताम्। ननु अग्निश्च दृष्टो, धूमश्च, प्रयोज्यप्रयोजकभावस्तु क विश्रान्तः। आह **'एवम्'** इति। **'तस्मात्'** इति यतः पश्चात्तनं न प्रयोजकं, नापि समानकालं, तस्मात्। **'यथादृष्टम्'** इति अन्वयी-

भावोऽत्र दर्शनानतिक्रमेणेत्याह। ननु कृत्तिकोदयः पूर्वं नियमेन, ततोऽपि रोहिण्युदयः इत्यादौ स्यात् कार्यकारणता। अत्र समाधिः **'नोत्पत्तिः'** इति। आगमात् हि नक्षत्रराशिचक्रं ध्रुवनाभिप्रतिबद्धं स्थितमेवेति अवगतं, तदुन्नतपर्वतसद्भावासद्भावयोश्च तिरोधानातिरोधाने च चन्द्रार्कतारादेरुपलभ्यते एव। ननु अनवभातमपि उपपत्त्या साधनीयमिन्द्रियादृष्टादिकमेवेत्यत आह **'उपपद्यते वा'** इति। अनुपपद्यमानमपि उपपत्तेः कंचित्कालमलाभात् ज्ञातबाधितार्थक्रियाकं सत्यमङ्गीक्रियते, इह तु न तथा,—इति ब्रूते **'उपयुज्यते वा'** इति अनालोचितोपपत्तिकमनवलोकितार्थक्रियाकमपि दाक्षिणात्यस्य इव करभचक्रमबाधितानुभवसिद्धिं न न श्रद्धेयम्, अत्रतु नैष विधिरिति दर्शितम्। **'अवभाति'** इति, अवभासमानस्य उपरि बाधकभावलक्षणोपपत्तिः सद्भावस्थैर्यप्रसाधको वा उपयोगोऽभिधानीयः इत्याशयं वक्तुम् **'अवभाति'** इत्यत्र उत्तरसमानकक्ष्यतासंभावनां भङ्क्तुं वाग्रहणं न कृतम्, अन्यथा त्रीणि वा वाग्रहणानि एकमेव वा,—इति युक्तं स्यात्। ननु धूमश्च अग्निश्च भिन्नावेव दृष्टौ, तयोर्विकल्पे[1]ऽपि भिन्नरूपतामेव व्यवहरतु नाम। एकं[2] तु कार्यकारणभावं कथङ्कारं व्यवहरेत् **'विकल्पस्य पुनः'** इति अर्थबलोत्पन्नं दर्शनं काममेव न कुर्यात्,—इति पुनःशब्देन विशेषद्योतकेन स्फुटयति। यदि भविष्यद्वाक्यार्थरूपं विभक्तानां दण्डपुरुषादीनां संश्लेषेण योजनं, अविभक्तानां च गुणगुण्यादीनां विभागेन योजनं परामृशति स्वभाववत्ताविधानाय अयमिति विकल्पः **'एकाभिलाप'** इति कार्यकारणभावोऽनयोः,—इति

१ 'विकल्पोपि' क. ग.। २ 'एवं तु' क.।

सकेतकल्पितेन एकेन अभिलापेन तावेव द्वावर्थौ यतः परामृश्येते, तत एव तथापरामर्शात् भ्रान्तिनिमित्ताद्वदितभ्रमाः संवन्धमेकं वस्तुसन्तमभिमानवलेन कल्पयन्ति । ननु न अत्र वनप्रत्यये गवादय इव अग्नौ धूम इति अग्निधूमादयोऽन्योन्यनिरपेक्षा एव भान्ति, अपितु परस्परमपेक्षमाणत्वमपि तेषामत्र भात्येव, तत एव प्रातिपदिकार्थविलक्षण एव अत्र सप्तम्यर्थरूपः एकोऽर्थो भाति, तत् कथमुक्तम् **'अनेकं दृष्टपूर्वम्'** इति । एतत् निरस्यति **'यापिच'** इति इत्यादिना । **'लक्ष्यते'** इति अनन्तरमिवशब्देन तस्या अपरमार्थसत्त्वमाह अभिमानबलोपकल्पितमेव तल्लक्षणं यतः । यथोक्तं

'…………सोऽसन् कथमपेक्षते ।'

इत्यादि । **'सापि'** इति लक्ष्यमाणाकारेति योज्यम् । **'एते'** इति विकल्पाः । प्रतीतिमात्रं प्रत्ययशून्यसामरस्या बुद्धेः, ततोऽस्याः प्रत्ययः प्रतिभासनकाल एव उत्तिष्ठति, तत एव

'सत्येव प्रतिभासे वस्तुनि भासते परम् ।'

इति प्रतिभासधर्मोऽयम् **'कुतश्चित्'** इति

'भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ।'

इति नीत्या प्रसिद्धशिरोरूपताप्रतिपादनाय राहोः शिर इति एकार्थक्रियाकारित्वप्रतिपादनाय च गौर्गौरिति । ननु यदि विकल्पितात् तथाभूतात् प्रयोजनं किंचित् सिध्यति, तर्हि अर्थ एव असौ । अत्र सिद्धान्तयति **'तथाभूते'** इति । तैमिरिकदृश्यमानोऽरुणोऽपि दीपो निजेनैव वपुषा अर्थक्रियां विधत्ते, नतु भ्रमोत्थापितेन, तद्वदिहापीति । ननु अवसायविश्रान्ताः सर्वे प्रमाणव्यापाराः, अवसायश्च विकल्पनस्वभावोऽर्थनिरपेक्षजन्मा

१ 'शून्यं सामरस्या' ग. ।

न वस्तुतत्त्वस्पृगिति तन्मुखेन अविसंवादकत्वं नाम यन्नैसमर्थितमपि गजस्नानीकृतं स्यादिति पराशङ्कामनेनैव शमयति '**तथाभूत**' इति। प्रापकं हि प्रमाणं, तदपि प्राप्तियोग्यवस्तुविषयप्रवृत्तिसंपत्त्युपयोगिप्रतीतिस्वभावमेव उच्यते। ततश्च अवसायो यद्यपि उपप्लुतः, तथापि प्राप्तियोग्ये वस्त्वंशे अवसिते प्रमाणस्य प्रमेयस्य व्यवहारस्य च विषयविषयिभावस्मरणाद्भिलषितप्रवृत्तेर्वस्तुप्राप्तिपर्यवसायिन्यां प्रवृत्तौ कर्तव्यायां न काचित् खण्डना अन्तरालवर्तिनि प्रवृत्तेः पूर्वभाविनि प्रमाणव्यापारव्यवहारित्वाच्च प्रधानभूते सत्यपि उपप्लुतस्वभावे व्यवसाये। '**अत्र उच्यते**' इति सिद्धान्तः। अत्र च इदं तात्पर्यम्—इह प्रकाशस्य विमर्शावियुक्तस्यैव प्रामाण्यात् विमर्शबलेन सर्वमेव प्रमाणमन्यसंवद्धमेव प्रमेयं परिच्छिनत्ति, न शुद्धमिति संबन्धः। '**न अवभाति**' इति असंबद्धं वचः। तथाहि—क्वचित् प्रमेयं तज्जातीयेन, क्वचित् विजातीयेन प्रमेयान्तरेण संवलितमेव भाति। सर्वत्र च प्रमातृरूपसंवलना निर्भासते एव। नच सा अभेदः, अभेदे हि कः संवलनार्थः; नच भेद एव संविद्भूमावभेदस्मरणात्। एकान्तभेदेऽपिहि कः संवलनार्थः। अतो बाह्याद्रूपादारभ्य प्रमातृविश्रान्तिपर्यन्तं यत् भावस्य वपुः, तत्र अस्य भिन्नता अवभाति, तद्वशादंशेनैवच अभिन्नता, सैवच संबन्धरूपता, तदसौ भात्येव, तथैवच प्रमाणेन आवेदिता अर्थ्यते च प्रमातृभिः। '**एवमेव भावतत्त्वम्**' इति, यत् यथा भासते, तत् तथा परमार्थ इति हि वितत्य आवेदितम्, आवेदयिष्यते च। यावच्छब्दोऽन्यत्र अयत्नसिद्धं साध्यमिति उपक्षिपति। एतदेव निर्व्यूढमिति द्योतयितुं '**यत्र पुनः**'

---

१ 'यत्र' ग.। २ 'तद्वशादंशेनैव च' ग.।

इति। निपातसमुदायेन अमुमेव अर्थं स्पष्टयिष्यति। उक्तेऽस्मिन्प्रमेये बलादेव इदमागच्छतीति। प्रमेयसमुच्चये चः। सकलो य इदंशब्दवाच्यतायोग्यो नियतदेशकालाकाररूपः, तेन सह यदभिन्नत्वं, तदुपलक्षिता एव अवसीयन्ते इदमित्यवसाये घट इत्यवसाये च सकलपृथुबुध्नाद्यभेदेन। यदुक्तं

'नियतेऽप्ययमित्येष परामर्शः पुरःस्थिते।
सर्वभावगतेदन्तासामान्येनैव जायते॥'

इति अपोहतत्त्वविचारे। नहि तदानीं भेद एव भाति। भेदो हि इत्थमाभासेत यदि दृश्याभिमतस्वलक्षणापेक्षया यानि स्वलक्षणान्तराणि, तानि स्वालक्षण्येन तदा भासेरन् यदि वा तिरस्क्रियेरन्, तत्तिरस्कारे दृश्यस्यैव अवभासनात्, नच भान्ति तानि, नापि तिरस्कृतानीति तद्दृश्यसाद्भूतान्येव। अत्रैव उपपत्तिमाह '**अन्यथा**' इति यत्संकेतकरणकाले यत् न आभातं, तत् तच्छब्दात् न अवसीयते[1] गौरिव घटशब्दात्, अवसीयन्ते च इदंशब्दात्सकलाः पुरःस्थितनियतव्यक्तयो घटशब्दाच्च पृथुबुध्नोदराकारव्यक्तयः,—इति तत्संकेतकरणावसरे एव न न भान्ति। तदनवभासनस्य हि विरुद्धं यत् तदवभासनं, तस्य यत् कार्यं पारम्पर्येण ततः शब्दात् तदर्थाध्यवसानं, तदिह उपलभ्यमानं स्वकारणविरुद्धस्य निषेधकमिति स्वभावविरुद्धकार्योपलब्धिः। एवमेकाकिपरामर्शेऽपि सामान्यत इदमिति मध्यमरूपतो घट इति अतिविशेषरूपत ईदृशोऽयं घट इति त्रिधापि स्थिते सबन्यानभासमुपपाद्य प्रकृते तमयत्नसिद्धतयैव दर्शयति, '**यत्र पुनः**' इति उपक्रमेण '**तत्र**' इति पदेन यस्यां तत्त्वचिन्तायां क्रियमाणायामसंभाव्यमपि इदमुपनतं तस्यां सत्यां

---

१ 'अध्यवसाये' ग.। २ 'अनुमीयते' क.।

संकलप्रसिद्धं प्रसिद्धमेव भवतीति योजना। पुनःशब्दोऽसंभावनात्मानमिह विशेषं द्योतयति। **'एकपरामर्श'** इत्यनेन आभासानां च मेलनं, स्वलक्षणान्तराणां चेति बहुशाखोऽयं संबन्ध एव निर्भासते इति स्फुटयति। तत एव आह संबन्धसिद्धौ

'भेदाभेदात्मसंबन्धसहस्रर्वार्थसाधिता।
लोकयात्राकृतिर्यस्य............॥' (श्लो० १)

इति। **'वाद'** इति कथनमात्रमेतत्

'सर्वे भावाः स्वभावेन............।'

इत्यादीति यावत्। एवं सिद्धान्तमुपक्रमे अभिधाय, पूर्वपक्षं **'यद्यपि'** इत्यादिना अनुभाष्य **'तथापि'** इत्यादिना प्रतिक्षिपति[1]। प्रतिभाविकासग्रहणेन आन्तरोऽसावभेदावभासो,मायीयो भेदावभासः इति भिन्नविषयौ भेदाभेदावविरोधिनाविति ब्रूते। **'उभयम्'** इति धूममग्निं च। **'न अन्यथा'** इति संबन्धप्रतिभाविकासेन हि विना तच्च तच्चेति स्यात्, नतु षष्ठ्यर्थः। चार्थोऽपिवा न भवेदेकज्ञानावेशेऽपि पृथगेव अन्योन्यापोहनस्य बहुशाखस्य उन्मीलनेन निश्चयात्। अवभाति चेति, घट इति, भावानामिति, उपपद्यते चेति। समर्थयते **'प्रमातृलीन'** इति प्रमातृलग्नत्वेन यदभिन्नं रूपं, तस्य अप्रकाशे भेद एव न प्रतितिष्ठेत्,—इति न अयमभेदो भेदेन विरुध्यते इति यावत्। एतदेव वस्तुव्यतिरेके प्राधान्येन उपयुज्यते चेत्यत्र हेतूकरोति **'यावद्धि'** इति। पूर्णो भावः प्रथायाः, प्रथमानस्य भावस्य प्रमातृपर्यन्तं रूपं, प्रथायाश्च संवेदनरूपं भावतादात्म्येन वर्तमानं विमर्शस्वातन्त्र्यबृंहितं च पूर्णं रूपम्,

१ 'उपक्षिपति' क.।

अन्यथा केवलादेव प्रकाशात् सति व्यवहारे[1] अलमध्यवसाये-
नेति क्षणिकत्वमपि व्यवह्रियते, अवसायात् व्यवहारे प्रकाश-
रूपत्वाभावात् जडोऽपि व्यवहारहेतुर्भवेदिति अलं संवेदनेन।
द्वाभ्यां व्यवहारः इति चेत्, न द्वयोर्युगपदभावात्। प्रकाश-
च्छायया उपरक्तोऽध्यवसायस्तथेत्यपि असत्,—स हि
प्रकाशकार्यं चेत् कुर्यात्, तर्हि प्रकाश एव असौ, का च्छाया।
प्रकाशरूपतया च तदेव प्रकाशरूपमध्यवसायमयं चेति प्रकाश
एव विमर्शात्मा,—इति आयातम्। प्रकाशोऽध्यवसायेन व्यवहृतो
व्यवहारहेतुरिति चेत् ज्ञानमभिधानं च व्यवहारः। नच प्रथम-
प्रकाशोऽध्यवसायस्य ज्ञेयः। स हि स्वप्रकाश एव परप्रकाशत्वे
अनवस्थादेरुक्तत्वात्। अभिधानमपि विकल्पनम्। तदपि प्रकाश-
नरूपं चेत्, पुनरपि तदेव आवर्त्यम्, अप्रकाशनरूपतायां च
जाड्यमिति उक्तम्, अभिमानोऽपि तथैव विकल्प्यः,—इति
अलमनेन क्षणिकत्वव्यञ्जनमिश्रीकरणकल्पितस्वचर्वणयोग्यताकेन
शुष्कसांख्योच्छिष्टेन। यत् यावता हि युक्तमर्थक्रियाकारि, तत्
तावद्रूपं नीलमिव नीलत्वेन। कार्यत्वकारणताभिमानरूपं[2]
प्रमातृविश्रमपर्यन्तेन वपुषा सर्वमर्थक्रियाकारि। एवमनुपगतौ
न कस्यचित् किंचिद्रूपं स्यात्। एतच्च पदे पदे निरूपितमपि
सक्षेपेण अविस्मरणाय उक्तम्। ननु तदनवधारणे न किंचि-
दिदं प्रकाशेतेति उक्तम्। सत्यम्, न अनवधारितमपितु अवधी-
रितमनादरेण अपहस्तितं भगवन्मायोपकल्पितेनैव। यद्वक्ष्यति

'इत्थं स्वसंवित्तिमपह्नुवानैः……………।'

इति। 'यत्तत्' इति अन्योन्यासंबद्धं[3] विश्वं स्वं च वचनरचनं
यदेवच किंचित् व्याक्षेपसात्मतया स्फुरितं, यदेवच विचार-

१ 'व्याहारे' ग. पाठान्तरम्। २ 'मिरूप' क.। ३ 'संबन्ध' ग.।

मन्तरेण विभ्रमविक्षोभादेर्जिह्वापतितं; तदेवेति। धीरशब्दो वृत्तिविषये भावप्रधानः। धैर्येण एकत्र ग्रहिकत्वादकम्पत्वेन यदवधूतं, यस्य वा धैर्यमवधूतं; अवधीरितमुच्यते तत्। ननु बाधकमत्र अस्ति,—इति परस्य प्रमावकाशं निरवकाशयति **'नच'** इति। **'अग्रे'** इति

'क्रियासंबन्ध..................।' (२।२।१)

इति प्रकरणे। एवं प्रमात्रा सह तावदैक्यं सर्वत्र, धूमाग्न्यादौ तु प्रमेययोरपि अस्ति,—इति उपपाद्य अन्यत्र अपि तदुपपादयति **'परस्पर'** इति। अभिन्नः शब्दो द्वन्द्ववृत्तिमयः। प्रत्ययश्च तदुत्थापिता तदुत्थापिका वा प्रतीतिः। **'ऐक्यमयाः'** ऐक्यं प्रकृतं प्रस्तुतं विश्रान्तिधामत्वेन येषु, तथाभूता एव सन्तः **'तथा'** इति **'भिन्ना'** इति पदान्तरसमर्पणीयेन भेदेन प्रथन्ते। ननु द्वन्द्ववृत्तेरयं प्रभावः....विना भेदेऽभिधित्सिते का भवेद्भेदसंभावना। अत्रापि आह **'यदापि'** इति। पञ्चम्या तावत् संबन्धः सूचित एव। तदभावेऽपि भिद्यमानस्वलक्षणक्रियात्मनि लीनतया स्थितमेव ऐक्यमिति सर्वेऽर्था व्यवह्रियमाणा न संबन्धधुरामनधिरूढा व्यवहारवर्तनीं कामपि निर्वाहयेयुः। ननु एवं भावाः किं कदाचिदपि न असंबद्धा भवन्ति। भवन्ति,—इत्याह **'केवलम्'** इति। उन्मत्तानां ये प्रलापाः शब्दा असंबद्धाः, तथा चेतांसि ज्ञानानि, तत एव व्यवहाराय साधूनि भवन्ति, तेषामभिधेयत्वेन ज्ञेयत्वेन च विपर्यास्ते क्रमेण यतः प्रतिभान्ति, ततः परस्परमननुषक्ताः, ज्ञानेन तु प्रमातृरूपेण अनुषक्ता एव, युगपच्च ज्ञाने तदेकप्रमात्रनुषङ्गमुखेन अन्योन्यमपि अनुषक्ता एवेति भावः। ननु एवम-

१ 'ग्राहकत्वात्' क.।

नुपपत्तत्वं तेषां केन व्यवहरणीयं, यदि तेनैव उन्मत्तेन, तर्हि अननुपन्नात्मनि एकत्र तेऽपि अनुपपन्ना भवेयुः । स च न उन्मत्तः स्यात् । अत्र निरूपयति '**तेऽपि च**' इति उन्मत्तो हि न व्यवहर्तेति भावः । '**नापर**' इति परस्परप्राप्तिरेव व्यवहरणमिति हि उक्तम् । तत्र सम्बन्धस्य रूपश्लेषादि यत् लक्षणं दूषितं परेण

'रूपश्लेषो हि संबन्धो द्वित्वे स च कथं भवेत्' ।

इति ब्रुवता, तत् समर्थितमेव भवतीति दर्शयति '**ततश्च**' इति । यतः परस्परप्राप्तिरेव व्यवहारार्थः, ततः प्रमातरि श्लिष्टरूपाः पदार्था बह्वोऽपि यावदैकध्यमापन्ना भवन्तीति । सर्वो हि प्रमाता अर्थक्रियार्थी स्वयं वर्तमानो निवर्तमानो वा परं प्रवर्तयन् निवर्तयन् वा व्यवहर्ता तावत् भवति, नतु भूताधिष्ठित इव कश्चित् कदाचिदास्ते । तस्य व्यवहरणैकशीलस्य व्यवहर्तुमिच्छा इयमुच्यते या गमनागमनयोर्नानोपायपरिघटनसंपाद्ययोः स्वयं प्रवर्तितुं निवर्तितुं वा, परं प्रवर्तयितुं निवर्तयितुं वा, अर्थिता सुखप्राप्तीच्छया दुःखपरिहारेच्छया वा भवति, लब्धे सुखे रक्षाप्राप्तीच्छैव, एवं दुःखाभावे । या च असौ सुखप्राप्त्यादाविच्छा प्रवृत्तिनिवृत्त्योः स्वपरगतयोर्हेतुभावेन प्रारम्भे वर्तमाना, तस्या स सर्वः पदार्थवर्गो विभागमवधूय अवतिष्ठते, योऽसौ गमनागमनयोः प्रवृत्तौ निवृत्तौ वा उपयुज्यमानो विचित्र विभाग प्रतिपद्यते । सा च सुखप्राप्त्यादीच्छा यावज्जीवं संसारिप्रमातुरनुस्यूतैव आस्ते । ततः प्राप्तेऽपि गमनादिसाध्ये वस्तुनि लब्धेऽपि सुखप्राप्त्यादौ नो विरमत्येव सा । तत एव काममय एव अयं पुरुषो दाता च प्रतिग्रहीता च श्रुत्या निरूपितः । आह च

'श्रद्धामयोऽयं पुरुषः······' ( भ० गी० १७।३)

इति। एष तु विशेषः–प्रथमकोटौ सामान्यतः पूर्णापि केनचित् प्रकारान्तरेण पूरणीयत्वेन आस्ते, इदमिदं मे अमुना उपायतदुपायादिक्रमेण भवतादिति, चरमं तु तावति कियतापि पूर्णत्वेन इयमिच्छा मम अमुना क्रमेण पूर्णेति। सैव तु भावान्तरजन्यसुखादिसंपादनाभिप्रायेण पूरयिष्यमाणत्वादपूर्णापि स्यात्। यदागमः

'लेलिहाना सदा देवी सदापूर्णा च सा विभोः।
ऊर्मिरिच्छात्मिका सा स्यादात्मनः सा तरङ्गिणी॥'

इति। ननु विविधः पदार्थसार्थस्तस्यामविभागेन वर्तते इति कुतः। उच्यते **'सा हि'** इति। यस्मादेवं, तस्मात् युक्ता असौ सर्वस्य अविभागभूमिरिति पूर्वेण संगतिः। सा कामना तावत् प्रमात्रा उन्मेष्यते, सत्येव विषयलालसात्मना अभिव्यज्यते, ततश्च न अन्धपदन्यायेन उत्तरोत्तरं पदमनुसरति, परमपि उत्थाप्यमाना सती दीर्घदृष्टिपुरुषपदबन्धन्यायेन यमभिसन्धाय उत्थापिता, तावन्तं बहुतरमवलिहन्ती आभोगेन सरभसं स्वीकुर्वती प्रथमावस्थायामुत्तिष्ठति स्फुटीभवति, चरमावस्थायां च तादृश्येव सती पूर्णा विश्रान्तरूपा भवति। यथोक्तं

'उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः।' (अज०प्र०२३)

इति। अभिसन्धीयमानमर्थमुपादेयमपेक्षणीयं हेयं च क्रमेण उदाहरति **'वह्नेः'** इत्यादिना। चान्दनादग्नेः सुगन्धिधूमः उत्पद्यताम्,–इति या प्रवृत्तिरभिसंहिता, राजस्वामिकः कः पुरुषः इति निश्चीयतां मयेति या प्रवृत्तिः समीहिता यत्र अवसायमात्रप्रवृत्त्यैव उपेक्षणीयता, कण्टकभुजगादिमान् मा मे भूत् देश इति च या ततो निवृत्तिरभिसंहिता, तया उत्थाप्यमाना सा

१ 'पूरकान्तरेण' क.। २ 'तावितिं' ग.। ३ 'वह्न' ग.।

कामना । यदिवा वाक्यप्रयोगद्वारेण परस्य स्वात्मव्यतिरिक्तस्य विनेयस्य प्रवृत्तिमुपादेये वा, उपेक्षामवसातव्यमात्रे वा, निवृत्तिं वा हेयविषये सपादयितुं योऽभिसन्धिः, तेन सा उत्थाप्यमाना । एवंच तदभिसन्धिसमये यत् यदुन्मिषितं सामान्यतो विशेषतश्च, तत्तत् तस्या कामनायां श्रीसदाशिवेश्वरदशोचितेन अविभागेन स्फुरत्येव । अनभिसंहितं तु पृथगुल्लासकलामरट्-शददमित्येव–शिवतौचित्येन स्फुरति, नच श्रीसदाशिवेश्वर-भूमौ पौर्वापर्यं किंचिदिति उक्तं पूर्वमेव । तत एव पूर्णाकारा सदैव असौ प्रथमा चरमा च कोटिरप्रबुद्धानामपि तथात्वेन निर्भातीति ।

'...........तदाद्यन्ते परस्य तु ।' (स्प० का० १७)

अप्रबुद्धस्येति उक्तम् । सुप्रबुद्धस्य तु प्रथममध्यमचरमात्मनि पद-त्रयेऽपि प्रकाशमात्रमखण्डितमेव स्फुरति–इति श्रीमत्पुराणगुरवो मन्यन्ते । मध्य एव चत्थाप्यमानग्रहणं वाक्यप्रयोगात् 'पर' इत्यत्र पूर्वरूपत्रयोपजीवनार्थम्, अन्यथा समकक्ष्यत्वेन वाशब्द-प्रयोगे पूर्वरूपानुपङ्गो न अत्र प्रतीयेत स्वतन्त्रत्वादर्थान्तरस्य । अवलेहपूर्णशब्दाभ्यामागममनुसरति । एतत् प्रकृते योजयति–राजपुरुपादि धूमाग्न्यादि भुजगकण्टकादि यत् परस्परापेक्षया वि-चित्रं साधनभावस्वभाव(म)वसायमात्रस्य वा, सुखस्य वा दुःखस्य वा, तच सर्वमखिलं तथा व्यक्तिविशेषानादरादनेकराजपुरुषादि-व्यक्तिमयं तत्साध्या तत्सपादनप्रयोजनोद्देशेन प्रवृत्ता या विशिष्टा-कारा प्राप्तव्यवस्त्वौचित्येन विचित्रा प्रवृत्तिरुभयविषया प्र(नि)वृ-त्तिक्रिया च हेयैकविषया स्वसपाद्यतया परसपाद्यत्वेन वा समता तस्या विशिष्टायां क्रियाया या इच्छा तया यावदसौ विचित्रसा-

१ 'त्मा' ग. । २ 'निर्भासवि' ग. ।

धनफलस्वीकारशबला क्रिया विशिष्टा विषयीकृता, तावत् तत्क्रियाविशेषशबलीकारकः कारकप्रयोजनवैश्वरूप्ययोगः स्पृष्ट एव भवति। स च तस्यामिच्छायां रूपेण श्लिष्टो भवन्नपि मनोभूमौ बाह्येन्द्रियभूमौ वा संकुचितमायाप्रमातृप्रकाशापेक्षया बहीरूपायां यो विभागस्तं न उज्झत्येव, तत एव भेदाभेदस्वभावत्वात् संबन्ध उच्यते । ननु एवं विभागावभासनं चेदायातं, तर्हि द्वित्वे सदा कथं भवेदिति । अत्र आह '**विभागेनापि**' इति । चः शङ्काद्योतकः । एवं स्वरूपमात्रापेक्षया रूपश्लेषः, यतस्तु ते अन्योन्यमयःशलाकाकल्पा न इष्यन्ते, अपितु क्रियां प्रति कारकत्वेन विशेषणत्वेन संबन्धितया वा परस्परमपि केवलरूपविलक्षणात्मकं रूपमुत्थापयन्तस्तदा इच्छामजडामनुप्रविश्य तेऽपि अजडायमानाः परस्परमपेक्षन्त इति अपेक्षापि न न उपपन्ना, ततश्च

'............सोऽसन्......... ।'

इति अभ्युपगमनाहतमदः;

'संस्तु सर्वनिराशंस.............. ।'

इति तु शुद्धेबाह्यरूपतायां भवेत्, नतु अन्तश्चित्प्रवेशापेक्षया,— इति अपेक्षालक्षणोऽपि संबन्धः । तथा अत्रैव अपेक्षायां 'भूतभव्यसमुच्चारणे' इति न्यायेन गुणप्रधानभावानुप्रवेशादुपकार्यादुपकारकं प्रधानेन संबध्यते तत्परतन्त्रं भवति,— इति पारतन्त्र्यलक्षणोऽपि न्याय्य एव संबन्धः । ततश्च

'...............सिद्धे का परतन्त्रता ।'

इति यत् संवेदनानपेक्षस्वतन्त्रबाह्यवादधैर्येण उच्यते, तदपहस्तितं भवति । नहि भावस्य तपस्विनः स्वयं काचित्

---

१ 'सर्वस्तस्या' क. । २ 'शुद्धे' ग. । ३ 'प्रवेशादुपकारकं' क. ।

सिद्धिरसिद्धिर्वा प्रकाशाचार्योपदिष्टावभासब्रतचर्यानङ्गीकरणेन,— इति उपकार्योपकारकभावः संबन्धः। स च अवश्योपगम्योऽन्यथा युगपदिष्यमाणताभासनमर्थिता च कथं स्यात्, स च ईश्वर-नियतशक्तिमुखप्रेक्षीति उक्तमेव। ननु बहूना द्विश एव संबन्ध इति सबन्धसिद्धिः, स च संबन्धो द्वयोरेव, न बहूनां, तथाहि यदि एकैकस्य अनेकसंख्यैरेकैकपरामर्शविषयै राज्ञः पुरुषश्च, रथ-श्चाश्वश्च,—इति, तदापि राजादेरश्रुतेन गम्यमानेन वा हस्तिसं-बन्धकारः पुनः परामर्शपदवीं नीयते इति यावन्तो हस्त्यादिषु परामर्शास्तावन्त एव राज्ञोऽपि,—इति एकस्य एकेन सबन्ध इति। तत् कथमिव उक्तं **'सर्वे ते रूपश्लेषेण'** इति **'संबन्धस्तेषां स्यात्'** इति च। सत्यमेतत्, एतदेव तु इह अभिसंहितं, परस्परसबन्धो द्विश एव बहुशाखो भवन् मेलितानुमेलनन्यायेन एकं सहमेलनाख्यं संबन्धमुत्थापयति,—इति सदाशिवेश्वर-भूरहमिदमिति महासंबन्धभूमिः। तस्यां भूमावपहस्तिते विशेषां-शप्रकाशे इदमिति—एकपरामर्शमात्रसारभावसामान्यसामाना-धिकरण्यापन्नाहंभावमात्रमत्र पूर्णत्वपरिस्फुरणमेव हि तदा भवेत्,—इति मायाप्रमातृगतसदाशिवादिपदं तदा तत् भवेत्। तत एव भगवदपेक्षया संबन्ध एव परमार्थतः प्रकाशते। स हि जानाति स्मरति,—इति न्यायेन पशुप्रमातृतापदं स्पृशन्नपि सदाशिवादिपदनिष्ठो भवन्नेव हि भगवानहमिति विश्वावभास-मयः परिस्फुरति। तत्संबन्धापोद्धृतस्तु तन्नियतिशक्त्यैव मित-संबन्धमयो भावराशिः प्रकाशते। एतदुक्तद्वित्वदशास्पर्शसिद्ध्य-र्थमेव साध्यसाधनग्रहणं परस्परग्रहणं च।

'भिन्ना अप्येकतां यान्ति............।'

---

१ 'नवभास' ग.। २ 'एव' क.। ३ 'र्शा' ग.। ४ 'एक' क.।

इति तु फलं प्रति आदरात् बहुवचनप्रयोगः । तदत्र अयं प्रमाणार्थः–भावानां संबन्धो न अवास्तवं रूपं तेन विना कदाचिदपि अप्रकाशनात् । यदि अस्य न अवास्तवं वपुः, तत् तेन विनापि प्रकाशेत शङ्ख इव पीतत्वेन विना,–इति अवास्तवत्वस्य व्यापकं तेन विना प्रकाशमानत्वं, अन्यथा नियतमेव अवास्तवं न भवेदिति, तद्विरुद्धं च इह उपलभ्यते,– इति व्यापकविरुद्धोपलब्धिः । हेतुश्च यत्नेन प्रसाधित एव। सर्वस्य भेदाभेदावभासमन्तरेण प्रकाशनानुपपत्तेरिति हि उक्तम्। स एवच संबन्धः इत्यपि विततमेव । भूयःप्रमेयप्रवाहापवाहितं हृदयं शिष्याणामवलम्बितुं प्रकृतसूत्रार्थोपसंहारमधिकावापसिद्धये दर्शयति **'तदेवम्'** इति । प्रमाणपदेन करणतामेषां सूचयति। **'नहि करणस्य'** इत्यादिवक्ष्यमाणप्रमेयावकाशदर्शनाय बहुवचनं 'बहुभिरनेकविषयैरकप्रमेयसिद्धिः कथं स्यात्' इति ध्वनति । प्रमातुर्यो व्यापारो व्यवस्थाकारित्वं नाम, तदनुजीवितया तद्व्यापारवशीकृतानि,–इति यावत् । **'नहि'** इति तथाहि सति स्वातन्त्र्यात् करणतैव न भवेत् स्वातन्त्र्यपारतन्त्र्ययोर्विरोधात् पारतन्त्र्यप्राणत्वाच्च करणादिकारककलापस्य । खड्गो हि दृढमुष्टिनिपीडनाभिनीतकर्तृव्यायामक्रियावेशश्छिनत्ति । ननु प्रमाणमेव अस्ति, न अन्यः कर्ता नाम कश्चिदित्याशङ्क्य आह **'न च'** इति । प्रमाणमेव प्रमात्रा विना न प्रवर्तकं न प्रापकमिति प्राप्तिपर्यन्तः प्रवृत्त्यङ्गभावोपगमनसर्वःप्रदर्शनमुखः· प्रमाणस्य स्वभावः प्रामाण्यलक्षणोऽस्त्वमियादेव । अत्र हेतुः **'तदुपदर्शिते हि'** इति । प्रमाणैर्नोपदर्शिते हि अर्थे या उपादेयता हेयता च, सा

१ 'च' क. । २ 'साध्यः' क. ।

'स्मरणादभिलापेण··············।'

इतिन्यायेन उद्भवन्ती प्रवृत्तेः कारणं यथा प्रापकत्वं नाम समुचितहेयोपादेयविषयहानादानसंपादनलक्षणं निष्पद्यते, सा च न अक्षविज्ञाने संभवति अविकल्पत्वादेवेति कथं प्रापकं प्रमाणमुच्येत। अथ तदनन्तरभावी विकल्प एव कुर्यादिति उच्यते, तदपि असत्। विकल्पो हि दृष्टमर्थं पश्यामीति परं विकल्पयेत्, ननु इष्टानिष्टविभागमसौ कुर्यात् स्मरणात् पूर्वानुभववासनोत्थापितात्। अभिलापात्मा इच्छालक्षणो विकल्पस्तथाकारीति चेत्, पूर्वानुभवेनापि यदि विषयाकारवासनामात्रसमर्पणं कृतं, तदा सुखदुःखप्रकाशास्मरणे कथमिच्छोदयः। सुखादिवासनापि तत्र अर्पिता, तत्स्मरणादिच्छा,–इति चेत्, ननु नीले दृष्टे तस्याः कथं प्रबोधः, नीलं सुखादीनां कारणं ततस्तद्दर्शनात् तत्कार्यविषयं स्मरणम्। यदाह

'सदृष्टावेव दृष्टेषु स्मरणात्············।'

इति। तर्हि कार्यकारणभावोऽपि एकप्रमातृतत्त्वे विश्रान्तैः प्रत्यक्षानुपलम्भविभावनीय इति कथितमनन्तरमेव। किंच तदेव वस्तु कदाचित् सुखं, कदाचित् दुःखमकार्षीत्, ततश्च अशङ्कितमेव तद्वस्तुदर्शनमात्रात् का वासना प्रबुध्यताम्,–इत्यत्रापि प्रमातुरेव स्वतन्त्रस्य अनन्तपूर्वानुभवविकल्पनादिस्वसंवेदनतादात्म्यमयस्य संबन्धि यत् स्वातन्त्र्यं नियततद्रूपप्रणिधानाभोगभावकं, तदेव विजृम्भते। तदेतदाह '**प्रमात्रधीनैव**' इति। एतच्च सर्वस्य संवित्परीक्षानिपुणस्य संमतमेवेत्याह '**यौद्धैरपि**' इति प्रमातारमपह्नुवानैरपि सोऽवश्यमङ्गीकृत्यः इति भावः, अन्यथा बाह्यार्थाभावे स्वसंवेदनमेव प्रमाणफलमिति युक्तं

१ 'यद्' क.। २ 'न्त' क.।

नाम; सति तु बाह्येऽर्थे बाह्यनिष्ठ एव प्रकाशः प्रमाणफलमिति युक्तं वक्तुम् । यदा तु बाह्यनिष्ठादेव प्रकाशात् स्वतन्त्रां स्वसंवेदनभूमिमनधिरूढात् न इष्टतादिव्यवस्था, तया विना न प्रवृत्तिस्तदभावे न प्राप्तिरिति नयेन प्रापकत्वं प्रामाण्यं स्वसंवेदनायत्तं, तदा स्वसंविदेव प्रमाणफलमुक्तं तैः । ननु अस्तु इत्थं, तथापि प्रमाता तैः कथमियता अङ्गीकृतः । आह **'स्वसंवेदनमेव च'** इति । एवकारेण स्वरूपदेशकालभेदो न संभवति,—इति दर्शितम् । तथाहि देशकालौ बाह्यकक्ष्याधिरोहिणौ न अन्तर्मुखे संवेदने योजयितुं शक्याविति उक्तं प्राक् । सौगतैरपि स्वसंवेद्ये ज्ञानसुखादौ विकल्परूपतापाकृतये

'अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् ।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी ॥'

इत्यत्र भिन्नकक्ष्येण ग्राह्यभावभागिना शब्देन अन्तर्मुखस्य संवेदनसुखादिरूपस्य योजना न संभवति,—इति दर्शितमेव । ततश्च यत् यतो भिन्नकक्ष्यं, तत् तेन न योज्यते संवेदनमिव शब्देन, तथाच देशकालाभ्यां संवेदनमिति । योजनं हि तद्रुपाधितया तदात्मीकरणं, तच्च क्वचिदेव भवन्नियमवत्तया व्याप्तं, यदि च भिन्नकक्ष्येऽपि भवेत्, अनियमस्तर्हि व्यापकविरुद्धः प्रसजति, ततो भिन्नकक्ष्यात् व्यावृत्तं योजनं तदन्येन व्याप्यते, तद्विरुद्धं च भिन्नकक्ष्यत्वम्,—इति व्यापकविरुद्धोपलब्धिः । स्वरूपभेदेऽपि अप्रकाशरूपताप्रसङ्गः इति असकृदुक्तम् । तस्मात् स्वसंवेदनमङ्गीकुर्वद्भिः प्रमातृतत्त्वमङ्गीकृतमेव तस्यैव नित्यव्यापकैकरूपत्वाक्षेपेण सिद्धेरित्यलं बहुना । प्रमाणजातं प्रत्यक्षानुपलम्भादि, प्रमेयजातं कार्यकारणादि; कार्यस्य धूमादेः कारणस्य अग्न्यादेः

१ 'भेदोऽत्र सं' क.।

संबन्धिनो ये भावरूपाः अंशाः सति वह्नावस्ति धूमः इत्याद-योऽभावरूपाश्च असति तस्मिन् नास्ति इत्यादयस्तेषां प्रमेयस्य प्रमाणद्वारेण प्रमातरि विश्रान्तिः, नतु स्वमुखेन,–इति दर्शयितुं व्याख्यान्तरमाह **'अथवा'** इति । नच सर्वथा सा नास्ति येन अवचनार्हा भवेदिति *प्रथयति* **'सूचनाय'** इति वदन् । प्रथम श्लोकार्थं व्याख्यातु या वृत्तिः **'समन्विता'** इत्यादिका, तां विवृणोति **'यदि पुनः'** इत्यादिना । ननु स्वरूपमेव तयोः कार्यकारणभावः इत्याशङ्क्य आह **'नच'** इति । स्वरूपं हि न अन्यनिष्ठं भवितुमर्हतीति उक्तमसकृत् । ननु न धूममर्थयमानो वह्निनिष्ठं धूमरूपमभिमन्य वह्नौ प्रवर्तते येन परनिष्ठता परस्य आपद्येत, अपितु वह्नेरनन्तरभावी यतो नियमेन धूमो दृष्टो-ऽमुना, ततो धूमार्थी वह्नौ प्रवर्तते,–इति को विरोधः । एतदनुभाष्य दूषयति **'वह्नावित्यादिना'** इति । यत् परेण *उच्यते, एतत् तदा स्यात् यदि वह्निर्धूमात् पूर्वभावीति* धूम-ज्ञानेन दृश्येन,–इति सबन्धः । नहि वह्नौ धूमदर्शनेन पूर्व-भाविनि अनिश्चिते वह्न्यनन्तरता नाम धूमरूपतातिरिक्ता धूमस्य काचित् गृहीता भवेत् । एवं वह्नेरपि धूमपूर्वभावित्वं वाच्यम्, ततः कारणता कार्यता च स्वरूपमाहिणैव गृहीतेति अनृत-मदः । स्वरूपस्यैव च तथाभावे द्वितीयमस्पृष्टवतोऽपि एकप्र-त्यये तथाप्रतीतिप्रसङ्गोऽत्यन्तमसंभावनीयसमर्थनस्य परदृशि कार्यकारणभावस्य निरूपयितु पतितपार्ष्णिप्रहार करोति । **'तदापिवा'** इति सितघटपीतपटाभासद्वययुक्तेऽपि ज्ञाने स्वरू-पेण *केवलतद्रूपग्राहिभ्यां ज्ञानाभ्यां* पर वैलक्षण्यमस्तु, नतु तज्ज्ञानाभासयोर्विषययोः काचिदपेक्षा सिध्यति, तद्वत् पूर्वभाविताविशेषणं वह्निं, धूमं च अनन्तरभाविताविशिष्टं सम-

कालमपि गृह्णत् विज्ञानमेकतद्रूपग्राहिभ्यां ज्ञानान्तराभ्यां वाढं विलक्षणं, ननु तदाभासयोर्विषययोः किंचिदन्योन्यापेक्षात्मकं रूपं ततः सिध्यति । एतदपिच असंभावनीयमिति स्वदर्शनच्छायया उपपत्तिमत्ता दर्शयति **'ज्ञानमपिवा'** इति । ततश्च द्वावाभासौ प्रमातरि विश्रान्ताविति ज्ञानद्वयमेव तत् स्यात्, न एकं ज्ञानम् । एवं स्वकञ्चुकप्रवेशितत्वेन दूषितः सौगतः सिद्धान्तवादिना स्वात्मनः प्रज्ञाप्रकर्षं दर्शयितुमेतत् तावयुक्तमुक्तं भवता,—इति निरूपयन्नाशङ्कते **'अथेति'** इति । यदि पर आह—भवतां तावदभिमतसिद्धान्ते न आभासो नाम कश्चित् स्वतन्त्रः, अपितु आभासनक्रियायामसौ आयत्तः । सा च प्रमातृव्यापाररूपा । ततो यदा परस्परविविक्तवस्तुद्वयविषयमाभासनं, तदा वस्तुनी द्वे; आभासनक्रिया च एका,—इति कथं त्वया स्वकञ्चुकप्रवेशनेन आभासद्वययोगि न सह्यते एकं ज्ञानम् । **'ततोऽपि'** इति एवमुच्यमानादपि इदं स्यात् किं तज्ज्ञानविशेषमाभासद्वययुक्तमर्थयमानः प्रयतेत[1] तथा येन एकैकाभासवत् ज्ञानद्वयं परिहृत्य तदेव आसादयेत् । यतो ज्ञानस्यैव स्वरूपभेदः प्रधानीभूतो, न विषययोः कश्चित्, ततो विषयान्तरं धूमं प्रेप्सुः कस्मादकस्मादेव वह्निकाष्ठादिसामग्रीं ढौकयेत् । नहि घटार्थी बीजपटकुविन्दादिसामग्रीं घटेन सह कदाचिदवलोकितामपि संविभर्ति[2],—इति दृष्टम् । तदियता स्थितमेतत्—तथाभासद्वययुक्तं ज्ञानमेव सिध्येत् प्रतिविषयमाभासपर्यवसानादिति । तदपि[3] ज्ञानमत्र उभयाभासं नास्ति वह्निज्ञानेन धूमस्य अनन्तरतया, धूमप्रत्ययेन च वह्नेः पूर्वतया अनवबोधे[4]-

---

१ 'प्रयतेत तेन' क. । २ 'संविभार्न्तीति' ग. । ३ 'तदपि च' क. । ४ 'धात्' ग. ।

नादिति पूर्वोक्तमेव दूषणं प्रपतति—एतत् तदा स्यात्; यदि वह्निः पूर्वभावितया धूमदर्शनकाले निश्चीयेतेति । तत्र एतत्प्रमेयबलप्रतयैव प्रमेयान्तरमाशङ्कते **'अथ तत्संस्कार'** इति । अग्निधूमज्ञानाभ्यामेको विकल्पो यो जातः, तत्र यौगपद्येन ते द्वे विज्ञाने स्फुरन्ती विषययोः कार्यकारणभावं सकृदाभाससाध्यं व्यवस्थापयतः, तदाहि युगपत्सत्तासमाविष्टे जाते ज्ञानद्वये वह्निः पूर्वभावितया धूमदर्शनकाले निश्चित एव भवतीति । एतत् दूषयति **'तदपि'** इति । नहि तदानीं ते ज्ञाने केचित् विकल्पलक्षणे तयोर्नष्टत्वात्, तत् कथं ते व्यवस्थापयतः । ननु तत्संस्कारजन्मना तद्रूपेण विकल्पेन तथा व्यवस्थाप्यते, तद्व्यवस्थापितं च ताभ्यां व्यवस्थापितमुच्यते इत्याशङ्क्य आह **'विकल्पो हि'** इति । यदि तावत् तदीयरूपोपजीवनमाद्रियमाणो विकल्पः प्रमाणयितुमीहते, तर्हि न अनेन पूर्वापरभावस्वद्विज्ञानद्वयस्पृष्टः स्थाप्यते, अथ स्थाप्यते, तर्हि अप्रमाणेन यदमुना स्थापित, तत् परमार्थपदात् दवीयसि अवस्थापितं भवति । **'एवंहि'** इति वयं तु विकल्पस्यापि वस्तुस्पृक्त्वमिच्छामः इत्यन्यदेतत् । यदि तावेव प्रतिभासौ विकल्पीभूतावेवं करिष्यतः इति उच्यते, तर्हि असद्दर्शनानुप्रवेशः इति दर्शयति **'अथ'** इति । यथेवमुच्यते **'साधयिष्यतः'** इत्यन्तम्, **'तत्'** इति तस्मादुच्यमानात् हेतोः । **'एतत्'** इति **'समनन्तरोच्यमानम्'** इत्यन्तं सिद्धम् । कथम् । **'एवम्'** इति वक्ष्यमाणेन **'तत्रापिहि'** इत्यादिना न्यायप्रकारेण इति,—वाक्यसमन्वयः । ननु आभासावेव विकल्पतापन्नावेवं कुरुतः इत्युक्ते अर्थप्रसवमुद्रय एक आत्मा तथाव्यवस्थापक इति कथं सिध्येत्,—इत्याशङ्कां

१ 'वस्त्व' क. ।

शमयन् **'एवम्'** इति पूर्वसूचितां युक्तिमाह **'तत्रापि हि'** इति। विकल्पावस्थायां हि यदि तादृशावेव तौ, तर्हि पूर्वमकृतमिदानीं कुरुतः इति कः प्रतीयात्। अन्योन्यापेक्षया हि प्राग्भावस्य पश्चाद्भावस्य च यत् व्यवस्थापनं, तत् न उपपद्यते, ततस्तौ द्वावपि स्वविषयमात्रं स्पृशतः। इत्थंतु एतदुपपद्यते इत्याह **'एकस्मिंस्तु'** इति। प्रत्यक्षानुपलम्भप्रवाहपञ्चकेन हि पञ्च तानि प्रमेयाणि एकस्मिन् संवित्समुद्रे पात्यमानानि तत्स्वातन्त्र्यतरङ्गबलादन्योन्यापेक्षामयानि घटः–पटः–इतिवत् विविक्ताभासविमर्शवैलक्षण्येन भास्यन्ते विमृश्यन्ते च। तत्र योऽसावाभासनव्यापारकृतः पञ्चानामेकाभासः, स कार्यकारणभावाभासः; तथाविमर्शश्च प्रमातृव्यापारः। इयमेवच सा प्रमाणयोजनात्मिका समस्तव्यवहारोपयोगिनी युक्तिरुच्यते, तद्व्यापारविरहे प्रमाणान्यपि अकिंचित्कराण्येव। ततश्च उक्तं परमेश्वरेणैव श्रीमुकुटसंहितायां

> 'संविद्व्यापार एवैका युक्तिः सर्वत्र साधनी।
> भोगे वाप्यथवा मोक्षे तेनास्यामादृतो भवेत्॥'

इत्यादि। स च योजक एवेति सर्वमिष्टं सिद्धम्॥ ४॥

ननु प्रत्यक्षानुपलम्भैर्यदकारि, तच्चेदेकीकर्तव्यमिति इयता प्रमातुरङ्गीकरणं, तत् किमनेन, तदेकीकरणे हि स्मृतिरेव उद्युङ्क्ते इत्याशङ्क्य सूत्रं

> स्मृतौ यैव स्वसंवित्तिः प्रमाणं स्वात्मसंभवे।
> पूर्वानुभवसद्भावे साधनं सैव नापरम्॥ ५॥

प्रत्यक्षानुपलम्भरूपाणि संवेदनानि यद्यत् निजं संवेद्यमगृह्णन्, तस्य तावत् स्मरणे यत् प्रकाशनं, तत् न स्मरणकालोपनतमपूर्वं

१ 'विभक्ता' क.। २ 'प्रमाणप्रयोजनात्मिका' क.।

गृहीतग्रहणस्वभावत्वात्, अपितु पूर्वानुभव एव सत्। स च इदानीं पृथक् वेद्यत्वेन न निर्भासते अभावात् तस्य, भावेऽपि वेद्यत्वेन भासने ज्ञातज्ञानं स्यात्, तत् न स्मरणं, नचापि ज्ञानं ज्ञानान्तरवेद्यमिति दर्शितं बहुशः। तदस्य सतोऽपि पृथक् स्वप्रकाशतायामन्योन्याननुषक्तं संवेदनद्वयमेव स्यात्, न स्मरणम्। तदियदङ्गीकर्तव्यं—यत् स्मरणकालेऽपि अनुभवः प्राच्योऽन्तःस्वसंवेदनात्मा सन्नेव स्मृतिस्वरूपसद्भावावेदकस्वसंवेदनादभिन्नः प्रकाशते इति। नहि अत्र प्रत्यक्षानुमानादि तत्स्वसंवेदनात् परं व्यतिरिक्तं प्रमाणं क्रमते। तावत्कालव्यापकं च यदविच्छिन्नं संवेदनं, तदेव प्रमातृतत्त्वमिति स्मरणबलादेकीकारः प्रत्यक्षादीनामित्युक्तिः प्रमातृबलादेकीकारस्सद्रुपगतमुपोद्बलयति। स्मरणलक्षणश्च आन्तरो व्यवहारः

'स्मरणादभिलापेन·... .. .... ......।'

इतिन्यायेन अशेषव्यवहारव्यापको यः, सोऽपि एकप्रमातृतत्त्वविश्रमाधीनः इति सूत्रार्थः। एवं संक्षेपेण आह **'पूर्वम्'** इत्यादि। **'साधनम्'** इति सिद्धरूपं संवेदनम्। तस्य आकारं दर्शयति **'पूर्वम्'** इत्यादिना। स्मृतिप्रकरणोक्तप्रमेयेण पुनरुक्ततापरिहाराय आह **'पूर्वम्'** इति। स्मृतिविमर्शप्रकरणे हि एवमुक्तं—अन्यश्चेदनुभविता, तदन्यः स्मर्ता कथमिति प्रमात्रा विना स्मरणं न उपपद्यते,—इति व्यतिरेकोपक्रमेण अनुमानेन प्रमात्रैक्यमर्थापत्त्या—इति, अस्मिंस्तु श्लोके अनुभवस्मरणे स्वसंवेदनेन एकतया गृहीते यदिदमेव तदेकस्य प्रमातुर्ग्रहणमिति **'साक्षादेव'** इति सर्वप्रकाराबाधितसंवी-

---

१ प्रत्यक्षद्वयस्य अनुपलम्भद्वयस्य ग पुस्तके अधिकमस्ति'। २ 'अन्यश्च' क.।

नपह्नवनीयस्वसंवेदनप्रत्यक्षेणैव प्रमात्रैक्यमुक्तमिति का पुनरुक्तता। पूर्वानुभवस्य स्वमेव संवेदनं प्रमाणं भविष्यति,—इति शङ्कां शमयितुं या वृत्तिः **'अभावात्'** इत्यन्ता, तां व्याख्यातुमाह **'ज्ञानं तावत्'** इति। तदभिन्नस्य बहिर्मुखदर्शनरूपादभिन्नस्य, अपिशब्देन प्रमाणस्यैव प्रमेयाभिमतस्यापि दर्शनभागस्य अभावः इति सूचयति। अभावं व्याख्याय पञ्चमीं व्याचष्टे **'तत्'** इति तस्मादभावात् हेतोः। **'येन'** इति स्मृतिकालातीतघटदर्शनसिद्धिलक्षणेन वाक्यार्थरूपेण वस्तुना स्त्रीलिङ्गोपक्रमेऽपि येनेति निर्देशो वाक्यार्थतासंपादनाय[1], अन्यथा पदार्थमात्रं परामृष्टं भवेत्। एवमनुभवस्वसंवेदनं पूर्वानुभवे न प्रमाणम्,—इत्युक्त्वा, स्मरणमपि तत्र न प्रमाणं परदर्शनेन युक्तमिति निरूपयति **'स्मृतिरेवच'** इति। स्मृतिरेव प्रमाणं तत्र यस्या विद्यमानत्वं निर्विवादमित्यपि न। सा हि स्वसंवेदनत्वेन वा तत्र प्रमाणं स्यात्, नच एतत् युज्यते, तदाह **'तस्या'** इति; व्यतिरिक्तविषयत्वेन वा, एतदपि नेत्याह **'नचापि'** इति। **'तत्'** इति विषयत्वम्। ननु योगिज्ञानं प्रति नष्टमपि विषयः, तथा इहापि स्यात्। नैतदित्याह **'नचापि'** इति। चः शङ्काम्, अपिशब्दो विषयत्वनिराकरणयुक्तिसमुच्चयं द्योतयति। ननु इयति अनर्वाग्दर्शनः सर्वोऽस्तु नहि दृष्टेऽनुपपन्नता। अत्रापि ब्रूते **'भावे वा'** इति। ननु यावत् दृष्टं, तावदेव अस्तु, अधिकासञ्जनं[2] तु निष्प्रमाणकं; तर्हि पूर्वत्रैव दोषापादनमस्तु,—इति दर्शयति **'तच्च'** इति इदन्तया भवत्। एवं स्मरणमपि पूर्वानुभवे प्रमाणं न भवति,—इति आवेदिते गत्यन्तराभावात् पूर्वदूषितमपि पक्षं परोऽवलम्बे(म्बे)त अनुभव-

१ 'संभावनाय' क.। २ 'संजनयतु' ग.।

सिद्धस्तावत् स पक्षो भवति,—इति प्रत्याशामात्रेण दूषणानि अनाद्रियमाण इति हृदये गृहीत्वा सिद्धान्ती तत्पक्षमाशङ्कते **'पूर्वस्वसंवेदन'** इति। पूर्वं यत् स्वसंवेदनं तन्निष्ठमिति तिष्ठतु तावत्, किन्तु स्मृतिकाले तत् केन प्रमाणेन अवगतं तदाहि स्वप्रकाशत्वेन स्मृतिसंवित्तिर्वर्तते, ततो न शक्यमेवमभिधातुं—तत् तदा स्वप्रकाशम्—इति। नच इन्द्रियज्ञानादेरयं विषय इति बलादागतं—स्वसंवेदनान्तरेणैव तत् स्वसंवेदनं पूर्वानुभवप्रमाणभूत प्रकाश्यते इति। तच स्वसंवेदनान्तरं तदा न स्वप्रकाशं स्मृतिस्वसंवेदनस्य तदा स्वप्रकाशत्वादिति तस्यापि आवेदकं स्वसंवेदनान्तरमित्येवं न्यायोपनता इयमनंशो एव पूर्वानुभवे पर्यनुयोगपरम्परायाता अंशकल्पनेन स्वसंवेदनानामनवस्था एकस्यापि पूर्वानुभवस्य विशसनेन स्वसंवेदनभागकल्पनायाम्। सा च मूलमेव प्राच्यानुभवप्रकाशं विहन्ति। अथ प्रक्षीणसकलदुर्मार्गावगाहनावकाशो बलादेव सन्मार्गमाजिगमिषति परः, तर्हि एवं प्रतिबोधयितव्य इति कथयति **'अद्यापि'** इति स्मृतिकाले। **'अतः'** इति इदानीं निर्भासमानतया अनपह्नवनीयात्। ननु इयत्यपि सिद्धे प्रकृते किम्। आह **'स एव च'** इति। **'अत्र'** इत्यस्य व्याख्यानं **'पूर्वानुभवे'** इति। अत्रैवच च्छेदः। ननु च स्मृतिरनुभवकार्या, नच इदमद्धुतधाम यत् किल कारणं गमयति,—इति सिद्धः पूर्वानुभवः, तत् कोऽयमस्थानसम्भ्रम इत्याशङ्का चशब्देन द्योतयन् प्रतिकुरुते **'पूर्वानुभवसिद्धौ च'** इति। इत्थमत्र योजना ग्रन्थस्य—पूर्वानुभवकाल एव समनन्तरक्षणे स्मृतेरुद्भवो नास्ति, स्मृतिसमये तु पूर्वक्षणे यदि अनुभवः प्रकाशेत वह्निधूमयोरिव, गृह्येतापि

१ 'तदिहापि' क।

कार्यकारणभावः, स्मृतिपूर्वक्षणे तु न कथंचिदनुभवस्य प्रकाशः, ननु अत्र स्मृतिकाल एवेति मन्तव्यं सहभावेन प्रकाशे कार्यकारणत्वासिद्धेः। एतदर्थमपिच वृत्तौ पूर्वग्रहणम्। स्मृतेर्न कार्यलिङ्गता, यतः पूर्वस्य अनुभवस्य अतीतस्मरणाच्च पूर्वत्वेन अनुभवस्य आभासो नास्ति येन तस्य स्मृतिं प्रति कारणभावः सिद्ध्येदिति वृत्तिसङ्गतिः। ननु प्रत्यक्षानुपलम्भाभ्यां मा भूदत्र कार्यकारणभावनिश्चयः, कार्यव्यतिरेकेणैव तु स भविष्यति अदृष्टेन्द्रियादिवदित्याकूतं परस्य आशङ्कते **'अथ'** इति। **'ज्ञानम्'** इति स्मृतिरूपम्। **'अनुरूपः'** इति घटोऽनुभूत इत्ययं विशेषांशो यतोऽस्य समुन्मिषति, स पूर्वानुभवरूप एव औचित्यात् परं कल्प्यते अनुमानविकल्पेन अप्रकाशमानोऽपि,—इत्याशयः। यदाह भट्टः

'कार्यौचित्यात्प्राक्स्वसंविदसंवित्स्मरणान्तरे।'

इति। एतत् न सहते **'तदेतत्'** इति। न धूमादौ कार्यव्यतिरेकमात्रशरणकः कार्यतानिश्चयः; अपितु प्रत्यक्षं प्रभवत्येव अत्र, तत्कोऽयमतिप्रसङ्गः इति चेत्, अयं तर्हि दोषः इति दर्शयति **'इन्द्रियमपि'** इति ज्ञानरूपम्। कुत्र कारणता स्यादित्याशङ्क्य आह **'नीलादि'** इति असंवेद्यमाननीलप्रायमिति यावत्। ततश्च क्षणे क्षणेऽन्यदिन्द्रियं, तत्र च तज्जातीयमेव करणमित्यादिबहुतरकल्पनाप्रसङ्गः, संस्कारप्रत्ययश्च अनुभवः स्मृतेः। ननु (तु) उपादानसदृशस्य च कारणतायामुपादानमेव सदृशतरं युक्तं, नच एवं कार्यहेतुभूतया च स्मृत्या उपादानभूतः समनन्तरप्रत्यय एव कल्प्यते। यस्तु अतिशयाधायीति कृत्वा संस्कारप्रत्ययताकारणत्वेन अनुभवः कल्पितः, तस्य कारणतैव दुर्ज्ञाना,—इत्याशयेन आह **'स्मृतिज्ञानस्य च'** इति। ननु एव-

मनुभूतो मया घट इति अनुभवस्य यत् संवेदनं, तत् कथं निह्नोतव्यम् । अत्र आह '**एतावत्तु**' इति अनिह्नव एव अयमस्माभिर्मूर्धाभिषिक्तीकृत इति यावत् । '**ततः**' इति हि यदुक्तं, तत् कतमदचलम्वतां प्रमाणरूपं प्रत्यक्षरूपं व्यतिरिक्तं, स्मृतिस्वसंवेदनाव्यतिरिक्तं वा, अनुमानरूपं वा । तत्र आद्यचरमपक्षौ प्रतिक्षिप्ताविति मध्यम एव पक्षोऽमुना प्रकारेण प्रतिष्ठितः । एवदुपसंहरति '**तस्मात्**' इति । स्वसंवेदनपृष्ठे च अनुमानत्वमपि शक्ययोजनमिति दर्शयति '**स्वसंवेदनेन**' इति । '**तस्मिन्**' इति पूर्वानुभवे । '**स्मृतेरपि**' इति अन्यत्र । '**स्वसंविदिता**' इत्यस्य हेतुता '**जायते**' इति विस्मयसूचकोऽपिरुत्तरेणापि चपदेन सम्बन्धनीयः समुच्चयद्योतनाय । एकत्र हि स्वसंवेदनरूपे प्रमातरि अनुभवसंवेदनमविच्छिन्नमेव आस्ते, ततश्च आभोगवत्यनुभवे स्मृतिरुद्भवन्ती प्राच्ये पदे अनुभवमेव अपेक्षमाणं समाक्षिपति,—इति । '**न त्वसौ**' इति न्यासमात्रघटनमेतत्, न तु अनुमानस्य अत्र कश्चिदुपयोगः । व्यवहारसाधनमपि अत्र न सम्भाव्यते मोहाभावात्, मोहे वा कार्यताया अपि दुर्ज्ञानत्वात् । ननु एवं स्मरणे पूर्वानुभव एव प्रतपति,—इति पूर्ववदेव अस्य प्रामाण्यं स्यात् । सत्यमेतदित्याह '**स्मृति**' इत्यादि । यथा तस्य अनुभवरूपता प्राच्या, तथैव प्रमाणता, इदानीं तु यथा अस्य स्मृतिरूपतापत्तिर्वेद्यगतातीतकालोपरागरूपितानुभवभागतया, तथा गृहीतग्राहित्वादप्रामाण्यमपि । प्राकाशिष्ट घटो, न तु प्रकाशते,—इति हि स्मृतावनुभवः । ननु एवं स्वसंवेदनमपि स्यादप्रमाणम् । स्यात् कामं, यदि गृहीतमात्मानं गृह्णाति,—इति स्वात्मांशे ग्राह्यत्वमुन्मिषेत् । न च एवं, तथाहि सति भूतवर्तमानविभागो भवेत्, न तु असावस्ति अन्तर्मुखे

कालावच्छेदविरहादिति हि बहुकृत्वः कृतनिर्णयमेव। तदेतदाह **'स्वसंवेदने तु'** इति। सत्यां ग्राह्यतायामवश्यंभाविनः कालभेदस्य अभावात् ग्राह्यत्वाभावोऽपि उक्तः॥ ५॥

ननु कार्यकारणभावादिव्यावहारिकरूपनिश्चयेऽनुभवमात्राद्प्रसिद्धेऽपि विकल्पा एव सन्तु प्रमाणं यथा नैयायिकप्रभृतयो मन्यन्ते। बाधाभावे हि किंकृतमप्रामाण्यं, बाधयोगे तु द्विचन्द्रालातचक्राद्यनुभवस्य अपि अप्रामाण्यम्; ततश्च बाधसत्तासत्त्वयोरेव अवधातव्यं, ननु एकप्रसादृतत्त्वेन समर्थितेन किंचित् तत्फलस्य विकल्पबलादेव सिद्धेः। अस्त्वेवं तावत्; ननु अत्र विकल्पतत्त्वमनुभवैक्यमयप्रमात्रात्मकं ब्रूमहे, तथापितु समस्तान्तर्बहिर्व्यवहारव्यापकसत्यासत्यप्रविभागनिश्चयनिबन्धनभूतोऽपि अयं बाधव्यवहारो न कथंचित् परदर्शने घटते, अस्मद्दर्शने तु उपपद्यते एव। तत्र स्वपक्षे तावदुपपद्यमानतां दर्शयितुं सूत्रं—

बाध्यबाधकभावोऽपि स्वात्मनिष्ठाविरोधिनाम्।
ज्ञानानामुदियादेकप्रमातृपरिनिष्ठितेः॥ ६॥

यः समस्तव्यवहारसिद्धये सर्वेण अङ्गीकृतः, सोऽपि न उपपद्यते। तथाहि न असौ विषयाणां, असन्निहितस्य अपि नतराम्; तदसौ *ज्ञानानामेव वक्तव्यः।* तानि च स्वस्मिन्विषये आत्मनि च स्वसंवेदने नियतस्थितिकानि अत्यन्तसन्तोषभाञ्जि मुनिमनांसि इव इतरेतरं न विरुध्यन्ते। परस्परपरिहारेण वा सहेतुकविनाशोपगमे

'..................बुद्धिर्बुद्ध्यन्तरविरोधिनी।'

इति नाश्यनाशकभावेन वा स्वसमये अन्यावकाशविरोधेन वा स्वसमये परकीयप्रमाणभावविरोधेन वा विरोधे ज्ञानं न किंचि

१ 'कला' क. ग.। २ 'ननु' ग.।

दविरुद्धमस्ति,–इति तादृग्विरोधोऽपि अविरोध एव मित्र-द्वयस्य इव । परस्परेण विरोधाभिधाननिबन्धनवन्ध्यतायां तु वाधस्य नियतविषयत्वं न भवेत्,–इति विरोधोत्थापननिमित्तमनयोश्चिन्त्यम् । तच्च एकं विश्रान्तिस्थानं प्रमातृतत्त्वं नाम । तत्र हि विश्राम्यतां ज्ञानानां न एकरसैव सर्वत्र विश्रान्तिः । तथा हि घट इति पट इति ज्ञाने परस्पराभासानाश्लेषेणैव विश्राम्यतः, नीलमिति उत्पलमिति परस्पराभासोपरागप्राधण्येन, अग्नेर्धूम इति प्रयोज्यप्रयोजकसत्ताकत्वाभासनपुरःसरीक्रियया । एवमन्यदपि ऊह्यम् । तत एव वाह्याभिमतप्रमेयांशासभवि तत् स्वा...न्त्र्येण उत्थाप्यमानरूपमयं कुर्वन् प्रमायां स्वतन्त्रः प्रमाता भण्यते । तत्र एकत्र प्रमातरि शुक्तिका इयमिति, न इदं रजतमिति च ज्ञानं विश्राम्यदेव पूर्वविश्रान्तरजतज्ञानसर्वस्वभूतानुविधृत्तिसितरजतमिदं सत्यमर्थक्रियाक्षमं मे भातमिति–विमर्शात्मकप्रमाणफलानुवृत्तिं विध्वंसयति, विध्वंसयच्च विश्राम्यतीति । एवं प्रमातरि या अन्यपरिवर्जनेन ज्ञानान्तरस्य नियता स्थितिः, ततो हेतोर्वाध्यता परिवर्जनीयस्य, परिवर्जकस्य च वाधकता सिध्यति । यत् यस्य फलानुवृत्तिभङ्गं करोति, तत् तस्य वाधकं सार्वभौम इव अपरभूभुजाम् । तथाच न इदं रजतमिति, शुक्तिका इयमिति वा ज्ञानं रजतज्ञानस्य । वाधो हि नियतविषयो भवन् नियतनिमित्ततया व्याप्तः, ततो विपक्षे तद्व्यापकाभावात् साध्येन हेतोर्व्याप्तिः सिद्धेति स्वभावहेतुः । ज्ञानद्वयमेकपतितं वाध्यवाधकभावायन्योन्यापेक्षरूपयोगित्यादित्यपि स्वभाव एव, एकपदपतितत्वाभावे हि नियमाभाव इति व्याप्तिरिति सूत्रार्थः । वृत्तौ विवृतौ च '**स्वश्च आभासश्च**' इति '**स्वश्च विषयश्च**' इति योज्यम् । अथवा स्वसंवेदनभागे वाधा-

संभवादाभासमात्रमेव संभवद्बाधमिह निर्दिष्टं, तदाच सूत्रेऽपि स्वात्मग्रहणमाभासतात्पर्येण योज्यम्। एको यः संनिवेशः इदमित्यङ्गुलीनिर्देशास्पदतया जिघृक्षास्थानं, तदवष्टम्भेन यद्यपि वस्तुस्थितिरुत्पद्यते; तथापि प्रमात्रैक्यमन्तरेण तदेकावष्टम्भ एव दुर्ज्ञान इति वदन् भाट्टमपि मतमवमन्यते। सहि आह—शुक्त्यवष्टम्भेनैव रूप्यसंवित् भवन्ती शुक्तिसंविज्ञान्येति। स्वरूपस्य प्रामाण्यस्य तदनुवृत्तेर्वा निर्वर्तनं[1] बाधा यथा न उपपद्यते इति दर्शयति **'बाधः क्रियेत'** इत्यन्तेन। स्वावसरे ज्ञानान्तरमेकसन्तानगतं न सहते इति बाधा सति प्रमातरि,—इत्याह **'सोऽपि'** इति। अपर्याप्तकारणस्य भवतोऽन्यभावेऽभावादिति यः सहानवस्थानविरोधः उच्यते तत्संनिधावसमर्थक्षणोत्पत्तिद्वारेण, स सन्तानापेक्षया समकाले संभविनैव[2] बलवता उष्णेन शीतस्य देशमाक्रमता, ननु ज्ञानयोः समकालं तथा अस्ति संनिधानं देशाक्रमणं वा। ननु शुक्तिसंवेदनं शुक्तावेव प्रवृत्तपूर्वं रजतसंविदं न सहेत। तथाहि तत् चेत् न भवेत्, सा प्रबन्धेन तत्र प्रवर्तेतैव, एतावदेव दुरधिगमम्। **'हि'** इति यस्मात् ज्ञानं सर्वं ज्ञेयमाभासयदेव ज्ञानं, तत एव ज्ञेयस्य अनुवृत्त्या धारावाहितां श्रयते, तन्निवृत्त्या अन्यकारणनिवृत्त्या वा तां जहाति, न पुनर्ज्ञानान्तरसन्यैाभासमस्ति,[3]—इत्येव कृत्वा निवर्तते धारावाहितायाः, तत्कथं तत् तस्य विरुद्धम्। यत एवं, तस्मात् सोऽपि नास्ति,—इति पूर्वेण संबन्धः। एतदुक्तं भवति—पूर्वाभासजनकसामग्रीसंनिधौ ज्ञानान्तरमेव कथमन्याभासमुत्पद्यते शुक्ताविव प्रबन्धप्रवर्तनस्वभावं रजतज्ञानम्,—इति शुक्तिकाज्ञानेन शीतमिव उष्णेन अपसारितम्,—इति च कः प्रयतेत

---

१ 'निर्वर्तनं' ग.। २ 'संभाविना' क.। ३ 'अन्याभासं' क. ग.।

ज्ञानद्वयान्यतरस्य एवंविधं प्रत्येतुमसामर्थ्यात् स्वविषयमात्रनिष्ठत्वेन । एवमयं विरोधः सहानवस्थानरूप एव शङ्कमानश्च निषिध्यमानश्च मन्तव्यः । अथ द्वितीयं पक्षं दूषयितुमाशङ्कते '**अथ**' इति । प्रामाण्यस्य स्वरूपं निर्दिशति '**अर्थप्रकाशत्वम्**' इति । '**विरोधः**' इति बाध इत्यर्थः । '**अर्थप्रकाशत्वम्**' इत्यत्र अर्थशब्दं व्याचष्टे आभासमानपदेन । '**अन्यथा**' इति तदाभासतां विना यदि तत्प्रकाशत्वं स्यात् । किमतो यदि आभासमानप्रकाशत्वं प्रमाणमित्यत आह '**नच**' इति । '**तदपि**' इति । अपरस्मिन्नर्थे सैव वृत्तिरावृत्त्या योजनीया,--इति अपिशब्दः । तृतीयमपि पक्षं दूषयति '**नच**' इति '**अनुवर्तमानासंभवहेतुपदं व्यतिरेकि**' इत्यन्तम् । अथ तुर्यपक्षं स्वमते उपपद्यमानं दर्शयिष्यन् क्रमेण परिशोधयति '**अथापि**' इति । '**निवर्त्यते**' इति । तस्य तत्र अवकाशो न सह्यते,--इत्येतावदेव इह निवर्तनमभिप्रेतं, तथाच दूषणं सगच्छते, घटेऽपि घटाज्ञानमिति प्रवृत्तपूर्वस्य तत्र अवकाश न मृष्यते,--इत्येवमपि विशेषमाशङ्कते दूषणाय '**अथच**' इति । एतत् सिद्धान्तिमत एव उपपद्यते,--इत्यभिप्रायेण ब्रूते '**एतदपि**' इति । '**अन्यथा**' इति यदि पूर्वप्रवृत्तताया ज्ञानं न सप्रयुक्तम् । '**घटेऽपि वा**' इति पूर्वोक्तमपि दूषणमत्र पक्षे अनेन प्रत्युज्जीवयति । प्रत्युज्जीवने हेतुमाह '**केनैतत्**' इति अवश्यंभावनीयैव तत्प्रवृत्तिरिति भावः । ननु एकप्रमातृगतत्वं नाम वस्तुवृत्ततो यदस्मि, तदेव विशेषकृत् भविष्यति । नेत्याह '**क्व**' इति सर्वथा यत् न प्रकाशते, तत् वस्तुवृत्ततोऽस्मि,--इति कोशपानस्यापि नायं विषय इत्याशयः । ननु प्रकाशतां तत् कथं, न

---

१ 'मानोऽसमव' ग । २ 'वस्तुतो' ग ।

तावत् ज्ञानद्वयेन,नापि विकल्पेन,–इति दर्शयति **'नच'** इति। नच इदं प्रमाणं दृष्टम्,–इति कथयति **'नच अन्तरेण'** इति। ज्ञानान्तरवेद्यताभ्युपगमेऽपि दुःसमर्थोऽयमर्थ इति दर्शयति **'अनेनैव'** इति। एवंकारोऽभ्युपगमद्योतकः। उभयत्रापि हेतुः **'परापेक्षत्वात्'** इति। ततः किमित्याह **'सर्वं'** इति। स्वातन्त्र्ये विकल्पस्य अभ्युपगतेऽपि स्वकृतमेतत् न निर्वहतीत्याह **'विकल्पेनापि'** इति। विकल्पेनापि स्वातन्त्र्यात् पौर्वापर्यव्यवस्थापनं तद्विकल्पस्वात्मव्यतिरिक्तत्वेन अभिमते ज्ञानद्वये न युक्तं, ज्ञानयोस्तयोरन्येन अप्रकाश्यत्वादध्यवसीयते परम्। तेन अयमर्थः–विकल्पः स्वतन्त्रोऽङ्गीक्रियमाणो यत्र प्रकाशरूपोऽङ्गीक्रियते, तत्रैव स्वतन्त्रो युक्तः। नहि अन्या अस्य काचित् स्वतन्त्रता। तन्म(द)यमर्थविषये भवतु स्वतन्त्रः, नतु ज्ञानविषये। नहि ज्ञानस्य स्वप्रकाशस्य व्यतिरिक्तस्य विकल्पः प्रकाशनरूपः। ततो यत्र न प्रकाशनस्वभावः, तत्र अयमभिमानसारावास्तवप्रकाशनव्यापारयोगित्वादध्यवसायरूपः, ततश्च अवसितमपि पौर्वापर्यं न प्रकाशितमेव,–इति ज्ञानद्वये वस्तुभूते कथं तत् विदितं भवेत्। ननु अव्यतिरिक्तमेव तत् ज्ञानद्वयं विकल्पात्, ततः स्वप्रकाशत्वेनैव तत् विकल्पतापन्नं ज्ञानद्वयं स्वात्मनः पौर्वापर्यं स्थापयति, ततः एकप्रमातृगतत्वे सति पूर्वप्रवृत्तज्ञानानुवृत्तिनिरवकाशीकरणं नाम बाधनं न युक्तम्। तत्रापि उच्यते **'अव्यतिरेके वा'** इति। **'पूर्ववत्'** इति

'प्रत्यक्षा················।' (१।७।४)

इत्यादिसूत्रद्वयोक्तेन तुल्यन्यायमेतत्। **'ज्ञानयोरपि'** इति न केवलं विकल्पेन साकं तयोरैक्यं, यावदन्योन्यमपि। तदभावे

१ 'चकारः' ग.। २ 'त्वाभ्युप' ग. ३ 'पनत' क.। ४ 'द्वये' क.।

तदैक्यसाध्यो यः पौर्वापर्यलक्षणोऽपेक्षात्मकसंबन्धप्राणितोऽर्थो, न स शक्यः कर्तुमिति । तस्मात् **'अर्थे निवर्तनात्'** इति फलानुवृत्त्युन्मूलनादिति मन्तव्यम् । तथाच प्रमाणलक्षणे

'सोऽन्तस्तथाविमर्शात्मा …………………… ।
…. ……मितिर्वस्तुन्यबाधिता ॥' ( २।३।२ )

इति वक्ष्यते । अभितः समन्तादाभिमुख्येन च प्रमातरि यत् मनन बहीरूपानादरेण, तदेव विमर्शनमभिमननं प्रमातृविश्रान्तिसारम्,–इति दर्शयति **'व्यवह्रियते'** इत्यनेन ॥६॥

'नैवम्……………………।' (१।७।८)

इति प्रकृत्य

'एवं रूप्यविदा……………………।' (१।७।१२)

इत्यन्तसूत्रान्तरवक्ष्यमाणदूषणविषयदानाय बाधवृत्तान्तं धर्मोत्तरोपाध्यायादिदर्शितं शङ्क्यमानतया सूत्रेण आह

**विविक्तभूतलज्ञानं घटाभावमतिर्यथा ।**
**तथा चेच्छुक्तिकाज्ञानं रूप्यज्ञानाप्रमात्ववित् ॥ ७ ॥**

शुद्धं भूतलं घटाभावस्तन्निबन्धनत्वात् घटाभावव्यवहारस्य, ततः शुद्धभूतलज्ञानमेव यथा घटाभावज्ञानं, तथैव शुक्तिज्ञानगतयथार्थप्रकाशनलक्षणप्रामाण्यसंवेदनमेव शुक्तिकाज्ञानस्वसंवेदनानतिरिक्तं यत् प्रकाशते, तदेव उच्यते शुक्तिविपरीतरजतज्ञानगतायथार्थत्वस्वभावाप्रामाण्यसंवेदनं, स एवच बाधः,–इति किं तत्र प्रमात्रैक्येनेति यदि परो ब्रूयादिति सूत्रार्थः । तमवतारयति संक्षेपव्याख्यया[1] **'वस्तूनाम्'** इति हेतुपदमेतत् । **'मा भूत्'** इति बौद्धादिमते । ननु घटस्य यो भावः, स पटः कथं, नहि घटस्य यत् लौहित्यं, स पट इति श्रद्धेयम् ।

---

1 'ख्यया' ग ।

अत्र आह '**नहि**' इति। नहि लौहित्यमिव घटस्य तत् किंचित् येन परस्य रूपं परोऽनुभवेत्, अपितु घट एव न, एतच्च घटस्य समस्तप्रख्योपाख्याविरहमात्रं, नतु नेति किंचित् प्रख्योपाख्यायोग्यं वस्तु। ननु एवं न किंचिद्भावो नामेति किमवलम्बनी इयं चिन्ता। आह '**तस्य तु**' इति वैकल्पिकज्ञानाभिधानात्मकव्यवहारमात्रसारममुष्य वपुः, नियतश्च विकल्पोऽनुभवमुपजीव्य वर्तते। ततो यदनुभवमुपजीवन् नियमेन अभावं विकल्प्य उदेति, तदनुभवविषयस्यैव विकल्प्यतां व्यवस्थापयति नीलविकल्प इव नीलस्य, अभावविकल्पश्च शुद्धवस्त्वन्तरानुभवोपजीवी नियमेन,—इति विपक्षे नियमस्य व्यापकस्य अनुपलम्भेन सिद्धिप्रतिबन्धात् स्वभावहेतोर्निश्चितात् शुद्धवस्त्वन्तरस्यैव अभावत्वेन विकल्प्यता, ततस्तदेव अभाव इति व्यवस्थाप्यते, तद्विकल्प्यानतुरूपत्वाच्च अभाव इत्युच्यते। दृश्यं हि भूतलं विधिरूपं, तत् घटाभाव इति अमुना रूपेण अनुचितमेव। दृष्टान्तं व्याख्याय दार्ष्टान्तिकं व्याचष्टे '**तद्वत्**' इत्यादिना। शुक्तिज्ञानं रजतज्ञानस्य अप्रामाण्यज्ञानं कथं भवति। भवत्येव। अत्र हेतुः '**प्रवृत्त**' इत्यादि। अत्रापि हेतुः स्वविषये रजते प्रमाणत्वं प्राप्तं रजतज्ञानं, तस्य निषेधनात् न प्रमाणभूतं रजतज्ञानम्,—इति हि शुक्तिकाज्ञानस्य रूपं यत-स्तद्रजतज्ञानाभावरूपमिति वाक्यसङ्गतिः। व्यवहारैकसारतामभावस्य घटयति '**घटाभावस्य**' इति। '**घटायत्तम्**' इति। घटाभावेन जनितं तदर्पिताकारं च न भवति निःस्वभावस्य जननमरणाद्यसंभवात्। नच कुम्भकारोत्थापितकुम्भसंभारतुल्योऽसौ,—इति कल्पनामात्रपदेन आह। किमर्थ-

१ 'चिता' क.।

मित्थमुत्थापयति,—इति चेत्, व्यवहारस्तद्विषयप्रवृत्त्यभावमात्रं वा तद्विपरीतशुद्धवस्तुनियतं हानादानसंपादकं प्रवृत्त्यादि वा प्रयोजनमस्य उत्थापनस्य। भूतले हि दृष्टे न अत्र पिशाच इति यावत् न विकल्पयति, तावत् पिशाचसंनिधानकृतं भयत्रासादि आविशेदेव,—इति अदृश्यानुपलब्ध्या न तदाश्रया व्यवहारा भवन्ति। तेन असव्यवहाराभावोऽत्र। न अत्र घट इति च यावत् न व्यवहरति, तावत् तत्र भूतले निःशङ्कं न पदानि निक्षिपेदिति दृश्यानुपलब्ध्या सद्व्यवहारः सिध्यति। अध्यवसायमुखप्रेक्षिणो हि व्यवहारा यथाध्यवसायं भवन्ति, न तु यथावस्तु। ननु भूतलजनितं भूतलाकारं ज्ञानमुक्तं, घटाभावज्ञानं तु न भूतलाकारं, ततो न भूतलजनितम्। अत्र आह—सत्यमेवं न भूतलजनितं, मानसं हि व्यवहारात्मकं विकल्परूपं तत्। कथं तर्हि उच्यते भूतलज्ञानमेतदिति। आह **'अस्य तु'** इति। यद्यपि एतत् वाचिककायीयव्यवहारद्वयपूर्वभावित्वेन स्थितं मानसव्यवहारात्मकं, तथापि अन्यविकल्पेभ्यो नीलादिविषयेभ्यो नीलाद्यनुभवानुसारिभ्योऽस्ति अस्य विशेषः। तथाहि विकल्पस्तावत् नियतः, स च अनुभवमेव नियामकमपेक्षते। अस्य च अभावविकल्पस्य अभावानुभवः समुत्थापको नास्ति,—इति भूतलस्य उपलम्भादेव अयमुदेति, ततस्तदेव अनेन इत्थं व्यवह्रियते। अपिच घटाभावाध्यवसायरूपस्य ज्ञानस्य विषयो यदा प्रेप्स्यते प्राप्यते च निःशङ्कगमनागमनादेर्भूतलैकविषयत्वात् ततस्तदनुभवमूलत्वात् तत्प्राप्तिफलत्वाच्च भूतलज्ञानमेव घटाभावज्ञानं **'तथाभूतम्'** इति अर्थक्रियोपयोगि। ननु किमत्र अर्थक्रियया। उच्यते। तामेव अभिसन्धाय नात्र घटः इति

---

१ 'सर्वोनुभव' क. ग.।

व्यवहरति प्रमाता, न तु सुखप्रकाशमात्रेण यथा कृतकृत्यः, तद्वत् तद्व्यवहरणमात्रेण। 'तत्' इति तस्मात्। भूतलमेव यदर्थक्रियोपयोगि, स एव अभावव्यवहारस्य विषयः। यो यत्प्राप्तये व्यवहारः, स ततो न अन्यविषयो नीलमिव पीतविषयो, यथा भूतलप्राप्तये च नात्र घटः इति व्यवहारः। अन्यविषयत्वस्य हि व्यापकमन्यप्राप्त्यर्थत्वं व्यवहारस्य, तद्विविरुद्धमिदमिति व्यापकविरुद्धोपलब्धिः। एष च भूतलमात्रघटाभावन्यायः सूत्रान्तराभिधायिष्यमाणो व्यतिरिक्ताभावव्यवहारविरुद्धसमर्थनकारिणो भूतलावृतालोकरूपस्पर्शमात्रघटाभावव्यवहारे योजनीयः। एवं दृष्टान्तं व्याख्याय एतमेव न्यायं प्रकृते योजयति **'एष एव'** इति। शुक्तिप्रत्यक्षेण अस्यापि अभावव्यवहारः आक्षिप्तः। ततस्तावत् स्वभावव्यवहारेषु मूलभूतं यत् शुक्तिप्रत्यक्षं, तदेव प्रमाणं तद्व्यवहारैः सर्वैरेव तद्विषयीकृतायाः शुक्तेरेव प्राप्यत्वात्। **'यदि'** इति सौत्रस्य चेच्छब्दस्य आशङ्काद्योतकत्वं व्याख्यातम्। एवं सूत्रार्थं विवृत्य विवृतिकारः

'एवं रूप्यविदाभाव……………।' (१।७।१२)

इति यत्सूत्रं भविष्यति, तदर्थानुसारेण परस्य मतं शङ्कितं परिहरति शिष्यबुद्धिसमाधानार्थम्, अन्यथा दृष्टान्तदूषणतत्समर्थनादिप्रमेयान्तराभिधायकमध्यवर्तिसूत्रचतुष्टयव्याख्योपनतप्रमेयान्तरावभासव्यवहितः पूर्वपक्षः शिष्यस्य दुरनुसन्धानत्वात् न बुद्धौ पुनरुन्मीलेत्, चेच्छब्दार्थश्च सिद्धान्तोन्मीलनेन सुव्याख्यातो भवति, अन्यथाहि वस्त्वेव एतदस्तु शङ्क्यमानत्वेन, कस्मादेतदुक्तमिति स्यात् वचनावकाशः; तं परिहारप्रकारमाह **'तेषां च'** इति। उपमानेन साधर्म्येण निश्चयार्थमस्यते क्षिप्यते अग्रतो व्युत्पाद्यस्य व्याप्तिपरिघटनाय, तथा उप समीपं प्राप्ते व्याप्तिनिश्चये अस्यते क्षिप्यते न

आद्रियते सर्वकोडीकारेण अन्तर्व्याप्तिसिद्धटनाय,—इति उपन्यासो दृष्टान्तः। स विषमो, न तुल्यः। अत्र हेतुः 'नहि' इति। भूतलज्ञानेन तुल्यं शुक्तिज्ञानं घटाभावज्ञानेन च तुल्यं रजताभावज्ञानशब्देन तन्मूलतया व्यपदिष्टं रजतज्ञानप्रामाण्याभावज्ञानं यदि भवेत्, भवेत् साम्यं, नत्वेवं; तस्मात् वैषम्यम्। 'नत्वेवं' इति। अत्र हेतुः 'तथाहि' इति। रूप्यज्ञानस्य हि अप्रामाण्यं, स्वसमयभाविमिथ्याज्ञानत्वं नाम धर्मान्तरमावेदयितव्यं वर्तते, प्रामाण्यात्मकधर्माभावो वा, नतु तस्य अभाव एव रूप्यज्ञानस्य अप्रामाण्यं, एवंहि सति स्वसमये सर्वं विज्ञानं प्रमाणं, ज्ञानान्तरसमये तु सर्वमप्रमाणम्,—इति पुनरपि नियमो विलुप्यते। अथ उच्यते रजतज्ञाननिष्ठं यदप्रमाणत्वं, तत् शुक्तिज्ञानमेव, न अन्यदिति। तत्रापि उत्तरं 'नच' इति। अत्र हेतुः—रूप्यज्ञानात्मकं विपयान्तरं धर्मिरूपं यतोऽनेन प्रामाण्येन लब्धं, तद्विपर्ययं हि तदप्रामाण्यम्। यदिवा रजतज्ञानस्य यत् लक्षणमुपाधिरूपमप्रामाण्ये प्रामाण्याभावो वा, तदनेन अप्रमाणमिदमितिविज्ञानेन विपयान्तरं व्यवहर्तव्यान्तरं रजतज्ञानादिकं लब्धम्। ततो यथा पटस्य शुक्लधर्मज्ञानं पीतधर्माभावज्ञानं वा न घटज्ञानमेवेति शक्यं वक्तुम्, तथा प्रकृतेऽपि अन्यज्ञानमन्यस्य यदि धर्मज्ञानं धर्माभावज्ञानं वा भवेत्, तत् नियमहेतोरभावादतिप्रसजति। तदियमन्यज्ञानता तद्धर्मज्ञानताविरुद्धेन तद्धर्मज्ञानरूपत्वेन व्याप्तेति विरुद्धव्याप्तोपलब्धिः। वैपम्यमेव द्रढयति प्रकृतवैलक्षण्येन दृष्टान्तस्य 'घटाभाव' इति। 'विषय एव' इति। घटाभावो हि न किंचिदिति उक्तमेव। 'उक्ता' इति युक्तेति आकूतशेषः। एवं

१ 'वर्ति' ग,।

शुक्तिप्रत्यक्षमेव प्रत्यक्षप्रमाणं भवदेव रूप्यज्ञानप्रामाण्याभावव्यवहारकारणमिति तावत् न संगतम् । एतावत्तु भवेत्, यदि रजतज्ञानं प्रमाणं भवेत् । तत् तदावेदितं रजतमेव इदं भवेत्; न शुक्तिरिति कारणानुपलब्ध्या शुक्तिज्ञानं संवादकं न भवेत्, अस्ति च तत्, ततो रजतज्ञानं(अ)प्रमाणं संवादिशुक्तिकाज्ञानोपलब्धेरिति । ततश्च कारणविरुद्धकार्योपलब्ध्या प्रामाण्यनिषेधे रजतज्ञानस्य शुक्तिज्ञानं प्रमाणतामुपगतं हेतुभूतं, न प्रत्यक्षभूतम् । एतदाह '**इह**' इति प्रकृते । पुनःशब्दः उक्तसंभावनाद्योतकः । '**पारम्पर्येण**' इति न साक्षाद्विरुद्धं तत् तत्प्रामाण्यस्य निषेध्यस्य, अपितु कारणव्यवधानेनेत्यर्थः । ननु तथापि सिद्धं साध्यं विनापि प्रमात्रा एकेन । अत्र आह '**तच्च**' इति प्रत्यक्षमेव बाधकमिति हि ते वदन्ति । ननु इतः प्रभृति इत्थमेषिष्यते । सत्यं, तथापितु व्रतत्यागमात्रमेतत्, ननु कामपरिपूरणमेषां ततः इत्याह '**दूषयिष्यते च**' इति । अनेन परिहारान्तरमपि सूचयति । यत् भणिष्यते

'धर्म्यसिद्धेरपि··················।' (१।७।१३)

इत्यत्र सूत्रे ॥ ७ ॥

एतत् निराकरोति

नैवं शुद्धस्थलज्ञानात् सिध्येत् तस्याघटात्मता ।
नतूपलब्धियोग्यस्याप्यत्राभावो घटात्मनः ॥ ८ ॥
विविक्तं भूतलं शश्वद्भावानां स्वात्मनिष्ठितेः ।
तत्कथं जातु तज्ज्ञानं भिन्नस्याभावसाधनम् ॥ ९ ॥

अभावव्यवहारे तादात्म्येन साध्ये भवति अयं न्यायो भूतलं घटो न, पिशाचो न, शब्दो न,—इति । तत्र हि दृश्यत्वे स्वभाव-

१ 'एषा तु' ग. । २ 'सिद्धे' ग. ।

विशेषसामग्र्यभावादिना असंभवत्यपि संभवत्येव अभावसिद्धिः। व्यतिरेकेण तु उपलब्धिलक्षणं उपलम्भयोग्यताधायि समस्तं कारणं प्राप्तस्य दृश्यस्य यदा अभावः साधयितुमिष्टो भवति–इह भूतले घटो नेति, तदा न उक्तन्यायेन अभावसिद्धिः। एवं हि पिशाचस्य अपि व्यतिरेकेण अभावः सिध्येदपिशाचतया भूतलस्य सिद्धेः। नैवम्, तदेव तत्रेति व्यवहर्तुमुचितम्, सर्वदा वा तथा व्यवह्रियतां विशेषाभावादिति दृष्टान्त एव अयं न सङ्गत इति सूत्रार्थः। विवृतिकारः स्वोक्ते दृष्टान्तवैषम्यदूषणे सूत्रग्रन्थसङ्गतिमपश्यन्नभ्युपगम्यवादेन ग्रन्थसङ्गतिं करोति '**अभ्युपगम्य**' इत्यन्तेन सूत्रकृतश्च प्रौढवादितां प्रसङ्गतोऽभावव्यवहारतत्त्वपरिघटनाय दर्शयति। इद तावत् झटिति वक्तव्यं न ब्रूते, सन्यासिकत्वेन तावदभ्युपगच्छति एतत्, दृष्टान्त एवं तु अयं कथं भवता कृत इति। '**तत्**' इति भूतलम्। '**न स्यात्**' इति। तादात्म्येन अभावः संभाव्यते नाम। एप तु वाक्यार्थो न स्यात् न संभाव्यते–यत् किल तत्र आधारे घटो न। एकस्यैव हि कथमाधाराधेयता, काल्पनिकत्वे तु सदा स्यात्,–इत्यनया भङ्ग्या दृष्टान्तं प्रत्यक्षसिद्धे बाधे निराकर्तुमाहेति योजना। ननु भूतलतैव त्वया शुद्धता अभिधित्सिता, तत् किं तद्विशेषणोपादानेनेत्याशङ्क्य ब्रूते '**अत्र सूत्र**' इति। क्रमेण परस्तावदेवमाह,–अस्माभिरपि तथाविधमेव रूपं यदिष्यते इति युक्तं विशेषणम्। '**वक्ष्यमाण**' इति '**विविक्तं**' इति सूत्रे '**यादृशी**' इति स्वात्मनिष्ठतारूपा। '**असौ**' इति घटादेरभावः। '**तस्याः**' इति विविक्ततायाः। '**सदा**' इति पर बोध-

---

१ 'व्यवह्रियते' क. । २ 'एव' ग । ३ 'अस्या' क ।

यितुं **'शश्वत्'** इत्यस्य व्याख्यानम् । स्वात्मनिष्ठतैव परमार्थतो विविक्तत्वं, तच्च परं ज्ञापयितुं विविक्तत्वशुद्धत्वादिव्यवहारे साध्ये हेतुतया उपात्तं सूत्रं, विवृतं तु सिद्धवदेव सामानाधिकरण्येन । **'अत्र'** इति व्यतिरेकेण अभावव्यवहारे साध्ये । वस्तुतत्त्वमवलम्ब्य दूषयति **'तथापि'** इति । **'सापि'** इति घटे नाम द्वितीयता । अनेन तज्ज्ञानं भूतलज्ञानं जातु कथं भिन्नाभावसाधनम्, अपितु सदैव स्यात् तादात्म्याभावसाधनवदिति सूत्रार्थो दर्शितः । परकीयं प्रसिद्धिलक्षणमभिप्रायं स्फुटयितुमाशङ्कते **'अर्थ'**[१] इति । **'भिन्न'** इति व्यतिरेकप्रसिध्या प्रकृतं घटयति । **'यदातु'** इति सिद्धान्ती तत्त्वमुद्घाटयन् **'नच'** इति दूषणस्य अवकाशाय अनुवदति **'एवम्'** इति घटसाहित्यविशेत्यर्थः । सहितता नाम घटेन या, सा न काचिदधिका भूतलात् भाति प्रमेयतः प्रमाणतश्चेति दर्शयति **'स्वाकाराधिकः स्वज्ञान'** इति । ननु दशाद्वयेऽपि किं प्रमेयस्य तावत्तैव, ज्ञानस्य वा,—इत्याशङ्क्य आह **'योऽपिवा'** इति । ननु न घटो भूतलस्य स्वभावः, अपितु तेन सहितता । सा च भूतलमित्याभासे पृथगनाभाता अपि अस्ति वस्तुता इव । एतत् दूषयति **'नचापि'** इति । **'सर्वदा'** इति असत्यपि घटे । ननु घटेन सा तस्य क्रियते सहितता मृत्पिण्डस्य चक्रेण इव घटता । अत्र आह **'नापि'** इति । एवंहि सति कारणस्य पूर्वभावित्वात् घटकाले सा न भवेदित्यर्थः । भवतु वा घटस्य तत्र कारणत्वं, तथापि भूतलविश्रान्तं तद्रूपं[२] घटं न अपेक्षते घटेन सहिततेति । ननु चक्षुर्जनितेऽपि आलोकैकविशेषे विरेकक्षणारम्भक्रमेण[३] चक्षुषि अस्तमिते नास्ति ज्ञानसन्तानः, नापि

१ 'अथ भिन्न' ग. । २ 'न्तिं' ग. । ३ 'आलोकस्य विशेषः विवरेकक्षणा'।

दृगादौ, तद्वदत्र भविष्यति । एतदपि न मृष्यते **'घटादर्शनेऽपि'** इति । चक्षुराद्यदर्शन इति चेति मन्यते । अनाभातश्च न कश्चन कस्यचित् स्वभावो भवति,—इत्याह **'वस्तुत्वस्य'** इति । **'वक्ष्यते'** इति

'तथैव सत्.............................. ।' (२।३।५)

इति सूत्रे । नच इदं परस्य मतं कार्यानुपलम्भव्यवहारमकुर्वतः, स्वभावानुपलम्भो हि अयम् । **'यत्र'** इति यस्यां तत्त्वचिन्तायां क्रियमाणायाम् । अनेन प्रमाणतः प्रमेयतश्चेति उभयमुखमपि प्रकृतमुपदर्शितमन्वयव्यतिरेकयोगेन । **'तत्'** इति प्रदेशज्ञानं सदैव निर्विशेषत्वादिति तात्पर्यम् । यदितु एवं स्यात् यथा संयोगाभावेऽपि संयुक्तं तथावस्तु घटेन जनितं तत्सन्निधान एव च तथा गृह्यते तथा सहितत्वमपीति, तदभावे घटसहितं भूतलमिति, तदपि असत् । **'घटो हि'** इति यावच्च किमस्य ग्रहणेन । धूमवत् चेदिदमनुमानमेतत् । तच्च प्रतिबन्धं विना कुतः । नच तज्ज्ञानमेव तत्संवेदनं भेदात् । ननु साहित्याभासनं तर्हि किम् । विकल्पनमात्रमेवतदिति ब्रूते **'केवलम्'** इति इयदेव इदमधिकमत्रेत्यर्थः । **'एतदेव युक्तम्'** इति वार्तिकग्रन्थेन संवादयितुमुपक्रमते **'अत एव'** इति प्रतिविषयं पर्यवस्यत् विज्ञानमेकमभागमपि सत् यत आभासान्तरवृत्तान्तमाभासान्तरे न योजयति, ततो हेतोर्घटपटविज्ञानं घटे व्यवस्था पटानपेक्षत्वेन, पटेऽपि घटानपेक्षत्वेन विधत्ते,—इति मत्वा एवमुक्तवान् । ग्रन्थं तदीयं पठति **'अतः'** इति । अतोऽपि हेतोः सा इन्द्रियमतिरविकल्पा सिद्धा । **'सापि'** इति या बौद्धान्तरैरेवमात्मतया साध्या,

---

१ 'चेदनुमान' ग । २ 'ल्प्या' ग ।

यस्मादेकमर्थं मनोभूमौ विकल्पयन्नपि तदैव अन्यं पश्यति, तौ च व्य''''परस्परविविक्तात्मकावेव विमृशति—इदमुत्प्रेक्षे, इदं तु पश्यामीति । यदिहि परस्परवृत्तान्तनिवेशनेन ज्ञानविषयौ व्यवस्थापयेत्, तदत्र दृश्यत्वविकल्प्यत्वे संकीर्येयातां, नच एवमनुभव इति दर्शयति **'सिध्येत्'** इति तथैव तत्सिद्धिमर्हति । प्रकृते एतत् योजयति **'एवंच'** इति ज्ञानमुभयाभासमपि न अन्योन्यापेक्षं व्यवस्थापकं व्यवस्थापकत्वात् । व्यवस्थापनं हि असंकीर्णनिश्चयोत्थापनम् । यदिच अन्योन्यापेक्षया व्यवस्थापयेत्, संकीर्णनिश्चयोत्थापनं भवेत् । तदेषा विरुद्धव्याप्तोपलब्धिः । व्यवस्थापनानुसारेणैवच प्रामाण्यं परेण उपगतमिति स्मारयति **'बौद्धस्यैव'** इति । य एव इत्थमभावे सिद्धिं व्यवातिष्ठिपत् स एव तथा अभ्युपगतवान् यथा एतत् प्रकृतमस्य विघटेत, नतु अन्यदीयदूषणोद्घोषणदौर्जन्यमस्माकमारोपणीयमिति एवकारेण 'यत्तद्वद्भिः' इति सूचितम् । ननु एवं घटभूतलज्ञाने घटमात्रज्ञाने भूतलमात्रज्ञाने च किमविशेषः । अविशेष एव विषयतः, स्वरूपतस्तु अस्त्येव विशेषः । एतदाह **'ज्ञानं च'** इति । चः शङ्काद्वारेण प्रमेयान्तरसमुच्चायकः । प्रक्रान्ते ज्ञाने कर्तरि **'वस्तु'** इत्यादि कर्मपदम् । प्रकृतं सूत्रार्थमुन्मीलयति **'एवंच'** इति **'तद्दर्शनम्'** इति प्रदेशदर्शनं कर्तृ । **'असत्यपि'** इति घटे । अत्र कार्यानुपलब्ध्या घटाभावसिद्धिर्भविष्यति,—इति परकीयमनुभाषते **'घटे सति'** इति । **'नोभयाभासम्'** इति 'अन्यत् व्यवच्छिनत्ति' इति न्यायेन स्वसंवेदनादेव एवं व्यवस्थापितं तस्य घटस्य दृश्यत्वात् यदव्यभिचरणीयं कार्यं निजाभासभागभाजनीभूतं संवे-

१ 'निवेशेन न ज्ञान' ग. । २ 'एषा' ग. ।

दनं तस्य अभावात् । एतदनुभाष्य दूषयति 'अत्र च' इति । प्रतीतिबाधादेव हि त्रस्तः प्रत्यक्षविकल्पशरणतामभावसिद्धेरभ्यमंस्त परः, स च न उपपद्यत एवेति दर्शितमेव ॥९॥

ननु व्यतिरिक्ताभावप्रतीतिः सर्वलोकप्रसिद्धा, सा च न सर्वदा, किन्तु घटासन्निधिदशायामेव । तत् किमत्र शरणम् । इह यत् यतो न भिन्नं, तत् ततो व्यतिरेकेण न व्यवहार्यं भूतलमिव भूतलात्, तथाच घटाभावः । विपक्षे हि निर्निमित्तता तथाव्यवहारस्य प्रसजेत्,-इति कारणानुपलम्भनं, ततश्च भिन्न एव भूतलात् य आलोकः, स एव घटाभावो भूतलाधेयतया व्यवहरणीयः,-इत्येतदेव अत्र शरणम् । एतदुच्यते सूत्रेण

किन्त्वालोकचयोऽन्धस्य स्पर्शो वोष्णादिको मृदुः ।
तत्रास्ति साधयेत्तस्य स्वज्ञानमघटात्मताम् ॥ १० ॥

किन्त्विति व्यतिरिक्तवस्त्वभावसिद्धावस्ति चिरन्तनापरिदृष्टः प्रश्नयोग्यो विशेषः । स च उच्यते-इह रश्मिपुञ्जतत्प्रभादिरूप आलोको वा आतपचन्द्रिकादिस्पर्शो वा कठिनघटस्पर्शविलक्षणो मृदुर्भूतले[1] तावदायातः कार्यकारणतैकसामग्रीकत्वादिना ज्ञातेयेन व्यवह्रियते इति न अपूर्वम् । स च घटात्मकप्रसिद्धरूपस्पर्शविलक्षणस्तदभावरूपस्तत्र भूतले स्वज्ञानेन आलोकादिरूपस्पर्शज्ञानेन गृहीतः । स यदा विकल्प्यते पूर्वोक्तयुक्त्या, तदा अत्र भूतले घटरूपविलक्षणो यदालोकरूपपुञ्जः इति यत् विज्ञानं, चक्षुरव्यापृतौ वा कर्कशकलशस्पर्शविलक्षणोऽयं शीतोष्णान्यतरमृदुस्वभावस्पर्शराशिरिति यत् विज्ञानं, तत् तस्य भास्वररूपस्य मृदुस्पर्शस्य च 'अन्यत् व्यवच्छिनत्ति' इति दृशा

[1] 'मृदुभूतला' ग.।

घटरूपस्पर्शाभावतां निश्चिनोति,—इति स एव तत्र भूतले घटाभावो व्यवह्रियते य आलोकस्तत्स्पर्शो वा,—इति इयत्येव न्यायायाता गतिर्व्यतिरिक्ताभावसिद्धौ निर्वहति लोकस्य, सर्वज्ञस्य तु ज्ञाननिर्वृत्तिरेव अन्यरूपा, ततो महाप्रलयेऽपि स्वसंवेदनज्ञानमात्रात्मा अभावनिर्वृत्तिः, तस्य हि ज्ञेयव्यापि ज्ञानं भवतीति सूत्रार्थः । आलोकस्य एवंरूपतां स्थूलदृष्टान्तेन साधयति **'कचित्'** इति केवलभूतलसंवित् घटाभावनिश्चयनाङ्गं न भवतीति यावत् । **'निरन्तर'** इति शिलोपरि संनिहितेऽपि घटे भूभागे तदभाव इति या प्रतीतिः, सा शिलाप्रतीतिरेव । **'तद्भाव'** इति शिलाया भवनं, आदिग्रहणात् वाय्वादिः, तैर्भोऽपि केषांचिद्रूपमेव । तथाहि आभिधर्मिकाः

'रूपं तदा विंशतिधा··············।' (अ०को० १।१०)

इति । **'यत्रापि'** इत्यादि **'तत्रापि'** इत्युत्तरेण संबध्यते । अवान्तरे तु वृत्तिग्रन्थः पठितो व्याख्यातश्च । एवमुत्तरत्र । तस्य यत् स्पर्शज्ञानं, तत् घटाभावं व्यवहारयति,—इति संबन्धः । **'अन्धस्य'** इति अनुपलभ्य इति पूर्वेण संबन्धः । कर्तरि षष्ठी, **'अप्रतिघाति'** इति कुड्यभित्त्यादेः, प्रतिघो नाम योऽसौ स्पर्शधर्मो निःसरणनिषेधकृत् यस्य नास्ति । **'नियत'** इति वयं तु आभासवस्तुवादिनोऽभावं विविक्तमेव भावाद्युपगच्छामः । यदुक्तं

'अभावोऽपि बुध्यमानो बोधात्मभूत ईश्वर एव ।'

इति । **'युक्त'** इति व्यतिरिक्ताभावसिद्धये इति भावः । **'उपयुज्यते'** इति व्यवहाराय । **'संप्रति'** इति, अन्यदा पटोपयो-

---

१ 'तस्य' ख. ।  २ 'तु न ज्ञाननिवृत्तिः' ग. ।  ३ 'भावनिर्वृत्ति' ग. ।
४ 'भावं' ख. ग. ।  ५ 'न सोऽपि' ग. ।

गादौ स एव आलोक उच्यते—घटो नास्ति—इत्यादिना व्यवहार्येण रूपान्तरेण। नच न्यायमात्रमेतत्, अपितु प्रतीतिरपि अत्र साक्षिणीत्याह 'वस्तुस्थिति' इति। 'आविर्भावयति' इति निश्चाययति, भूतलमेवं हि न अपेक्षते तदा, अपितु तदुपरिवर्तिनं पटाकाशमयं देशम् ॥ १० ॥

ननु अस्मिन् पक्षे तादात्म्याभाव एव एको व्यवहार्यः, न व्यतिरिक्ताभावः, ततश्च आलोको घटाभाव इति कृत्वा प्रदेशे तन्निश्चयाक्षिप्तो यथा घटाभावव्यवहारः, तद्वत् पिशाचाभावव्यवहारोऽपि भवेदालोकस्यैव पिशाचाभावरूपत्वात्,—इत्याशङ्क्य सूत्रं

पिशाचः स्यादनालोकोऽप्यालोकाभ्यन्तरे यथा।
अदृश्यो भूतलस्यान्तरनिषेध्यः स सर्वथा ॥ ११ ॥

आलोकव्यतिरिक्तो यद्यपि पिशाचोऽनालोकात्मको हि असौ, तथापि भूतलस्य इव आलोकस्य अभ्यन्तरे सोऽपि न संभाव्यते। ततश्च अपिशाचो यद्यपि आलोकोऽस्ति,—इत्यत आलोको भवन् पिशाचो नास्तीति व्यवह्रियेत, तथापि न सर्वात्मना तदभावसिद्धिः। 'सर्वथा' इति नियमेन भूतलालोकापेक्षया यावद्वृत्ति च विचारणा,—इति त्रिधा योज्यम्। पिशाचाभावमात्रं हि न साध्यम्, अपितु नियमेन[3]। भूतलान्तरेऽपि च, संभाव्य एव असौ यावद्वृत्ति च विचारयिष्यते। तदेवमालोकान्तर्वर्ती स स्यादेवेति शङ्कायामयंनीयो नियमगर्भतया तावति विवक्षिते[4] देशे स तादृशो न तदभावनिश्चय इति परदर्शन इव स्वकदर्शनेऽपि न कश्चित् दोष इति सूत्रार्थः। तं संक्षिप्य व्याचष्टे 'नच' इति। 'एवम्' इति व्यतिरेकेण,

---

१ 'इह न' ख.। २ 'पटावकाश' ग.। ३ 'नियमेन' ख. ग.। ४ 'विवक्षति' ख. विवक्षिति' ग.।

अभावव्यवहारप्रसङ्गो यः शङ्क्यते पिशाचस्य, सोऽस्सत्पक्षेऽपि न अवतरतीति। चः प्रसङ्गशङ्कायां हेतुः। **'अनालोकरूपस्य'** इति पिशाचस्वभावत्वादालोकस्य शङ्क्यतेऽयं प्रसङ्गः इति तात्पर्यम्। शङ्कानिषेधे तु हेतुः **'अन्तर्लीनस्य'** इत्यादि। **'तच्च'** इति अन्यत्वं सप्तम्यन्तं यत् वृत्तावुक्तं अन्तर्लीनतापक्षे। **'तत्र'** इति व्याख्याते आलोके अन्तर्लीनपिशाचो न निषेद्धुं शक्योऽदृश्यत्वादिति उक्तम्। तच्च अचोदितसमानम्। एवंहि प्रसङ्गश्चोदितः प्रदेशे आलोकोऽस्ति,–इति यदिदमेव पिशाचो नास्ति,–इति प्रसज्येतेति। अनेन आशयेन अन्यथा उपक्रमते स्थूलदृष्टिप्रत्यायनाय **'अथवा'** इति। सूक्ष्मदृष्ट्या तु आलोके प्रसङ्गतत्प्रतिषेधौ कृतौ पर्यवस्यत एव **'प्रदेश'** इत्याद्यं व्याख्यानं न असङ्गतम्। अथवा यद्यपि भूतले आलोको गृहीत इति पिशाचाभावो गृहीत एव, तथापि गृहैकदेशे स्फीतालोके घटाभावो गृहीतोऽपि यथा न समस्तगृहान्तरालशङ्कितघटाभावव्यवहारे कर्तव्येऽङ्गतामुपैति गृहैकदेशान्तरे सन्तमसाक्रान्ते तत्संभावनात्, तथा प्रदेशव्यवस्थितालोकमध्यवर्तित्वेन पिशाचस्य संभावनात् तथा तावदाकाशदेशगतपिशाचाभावनिबन्धनव्यवहाराङ्गभावं न उपैति,–इति तत्रापि तदभावनिश्चयः कर्तव्य एव। स च न सिध्यति पिशाचाक्रमणीये आलोकमध्यभागे तदालोकानपसारिणः पिशाचतुल्यस्यैव अन्यस्य कस्यचिदस्मादृशैरनुपलम्भादित्याशया भङ्ग्या व्याख्यान्तरं करोति **'यदिवा'** इति। आलोकप्रदेशयोराधारत्वमाधारतानान्तरीयकव्यतिरेकतात्पर्यं च,–इति त्रिधा तत्रशब्दो व्याख्यातः। ननु प्रदेशे यदि व्यतिरेकेण निषेद्धुं शक्यः, तर्हि

१ 'समाधानं' ग.। २ 'ङ्गाचो' ग.। ३ 'पिशाचो' ग.।

आलोकेऽपि किं तथा न शक्यः। आह **'प्रदेशात्'** इति आलोकवादात्म्येन हि प्रदेशो निषिध्येत। किं संभाव्यते तावत् सर्वात्मना हि तत्रापि तस्य निषेधः शक्यः, इयत् तु उच्येतापि प्रदेशे आलोकोऽस्ति यत्, तदेव पिशाचो नास्ति,—इति। आलोके तु किमन्यदस्ति यत् पिशाचोऽपि नास्ति,—इति स्यात्। तेन अत्र वचनावकाशमात्रमपि नास्ति,—इति मन्यते। एतदेव घटयति **'तदाहि'** इति। **'प्रदेशे वा'** इति अनेन प्रदेशात्मकपरमाणुसान्तरवर्तमानस्वपरमाणुकतद्रूपसंभावनानिवृत्तिरुक्ता पारमार्थिकी सौत्रं **'यथादृश्यो भूतलस्यान्तर्'** इति व्याख्यातुम्। **'अदृश्यत्वमपि'** इति नैव केवलमन्यत्वं पिशाचनिषेधायोगे हेतुः, अपितु अदृश्यतासहितम्। एतदेव व्यतिरेकेण स्फुटयति **'तस्य हि'** इति। **'यत्'** इति यस्य आलोकानपसारकस्य दिक्कालात्मपरमाण्वादेर्दर्शनात्। **'क्वचित्'** इति आलोके प्रदेशे वा असावतीन्द्रियदर्शी पिशाचं निषेधेत्। **'स हि'** इति पिशाचादेरतीन्द्रियदर्शी। पिशाचस्य योऽवकाशः संभाव्यते भूतलालोकान्तरालप्रायस्तद्व्यतिरिक्तैरात्मदिक्कालादिभिः पिशाचरूपत्वासहिष्णुभिरालोकविशेषरूपैरेववा परमाणुभिर्व्याप्तं पश्यंस्तानात्मादीन् पिशाचाभावतया व्यवहरन् पिशाचं निषेद्धुं शक्नोति,—इति संभाव्यते अर्हति, ततो न अतीन्द्रियादर्शिनोऽत्र शक्तादि अस्ति। प्रकृतमेव स्पष्टयति **'नहि'** इति। आदिग्रहणात् दिगात्मादि। **'अत एव'** इति। यतः पिशाचः सर्वज्ञस्य अपि भासमान आलोकावयवानामालोकपरमाणूनां यद्रूपं तदेव अवकाशो देशस्तमुत्सृज्य परिहृत्य भासते इतरेतरानामिश्ररूपत्वात् भावानां, ततो हेतोरिदमपि न आशङ्कनीयम्। तदेव परा-

---

१ 'रमक' ख.। २ 'भावनां' ग.।

मृशति '**यथा**' इति '**इति**' इत्यन्तम् । समानन्यायतां योजयति '**नहि**' इति । पिशाचेऽपि यत्र एषा गतिरालोकानपसारकाभिमते, तत्र तद्विपरीते घटे का इयमाशङ्कैव । आलोकापसारक एव तर्हि घटो निषेध्यो, न पिशाचः इत्याशयेन आह '**अथापि**' इति । '**अनालोक**' इति अन्यसान्तरतारहितैकघनालोकरूपोपलब्ध्येति यावत् । अत्र उक्तमेव समाधिं स्मारयति स्फुटीकर्तुं '**तदत्रापि**' इति । यदेतद्वचनमाशङ्क्यते, ततो वचनात् हेतोरिदं स्मार्यते इति सम्बन्धः । ननु अन्योन्यात्मत्वे कथम् '**एकदेशावस्थानेऽपि**' इत्युक्तिः । आह '**ततश्च**' इति । आलोकांशस्य यत्र भागे पिशाचसन्निकर्षेण अवश्यभाव्यं, तत्र योऽन्यो दृश्यते, सोऽपिशाचः । ननु स्वरूपं मुक्त्वा कोऽन्यो देशः । अत्र आह '**भूतमयानाम्**' इति । शब्दादिपञ्चकरूपाणां बाह्यानां पृथिव्यादीनां ज्ञानव्यतिरिक्तानां रूपात्मना देशेन यत् सम्बद्धमेकसामग्र्यधीनत्वात् वा कार्यकारणभावात् वा बाह्यं भूतलादि, तदपि देश इति प्रतिभासत एव । ततः सन्निकृष्टदेशतैव अभिन्नदेशता, आत्मकालादयस्तु अभूतमया इति एकदेशा भवन्तु नाम । यत्र हि दर्शने ते सन्ति, तत्र सर्वैः संयुक्ता सर्व एव ते विभुत्वात्, परस्परं तु असंयुक्ता इति अन्यत् । न चापि ते केचित्सन्ति । शब्दाद्या विज्ञानं चेति षट्पदार्थमात्रं हि विश्वम् । तत्र शब्दाद्या भूतमया एवेति भूतमयग्रहणम् । '**ज्ञानानाम्**' इति '**वा**' इति वैधर्म्येण ज्ञानस्य हि स्वरूपव्यतिरेकेण न देशोऽन्यो भाति एकसामग्र्यधीनः कारणं वा विषयोऽपि अनाधारत्वेन भासते यतः समकक्ष्यत्वाभावेन तद्योजनाभावादिति दर्शितं बहुशश्चेत्थधर्मदेशकालसमर्थनप्रस्तावे । देशान्तरं स्वरूपदेशादन्यो देशस्तेन योऽवच्छेदस्तदाधेयतायोगः, तेन च शून्यता यदि स्यादिति

अन्यथाशब्दस्य अर्थः । '**तथाच**' इति । यतो व्यतिरिक्तोऽपि देशः, तेन प्रकारेण इदं प्रमेयान्तरमिति चः । आलोकविशेष उष्णस्पर्शविशेषश्च कश्चिदेव पिशाचवदेव अस्य स्वभावः । अर्वाग्दृशां यः पिशाचस्य देश आधारः संभाव्यते, स एव पिशाचासन्निधौ दृश्यमानः—पिशाचो नास्ति—इति सर्वज्ञेन व्यवह्रियते । ननु च यत्र मध्ये न कश्चित् दृश्यते, तत्र रूपादयः सन्ति,—इति कुतः, तत् कथमुक्तं स एव आलोकरूपविशेषात्मा देशः पिशाचाभाव इति । अत्र आह '**रूपादयो हि**' इति मध्यवर्तिनः कस्यचिददृश्यत्वेऽपि, यद्यपि मध्ये न किञ्चिदालोक्यते, तथापि रूपादयस्तथा तत्र परमाणुतया स्थिता यथा त एव अस्मदादिभिर्न दृश्यन्ते, सर्वज्ञेन तु दृश्यन्त एव । परमाणूनां च न वैचित्र्यमपूर्वमिति दर्शयति '**ततश्च**' इति । '**न तथा**' इति प्रतिघातिनोऽपि न अत्यन्तं तथेत्यर्थः । '**दूरतरम्**' इति यथा तत्र च्छाया दृश्यते तमसा कृतेन सान्तरत्वेन व्यवहितत्वेन विभिन्नं सजातीयतावन्ध्यमन्तरं येषां तानि सान्तरव्यन्तराणि, मध्ये वा तमसा सान्तराणि व्यन्तराणि, मध्ये तमःशून्यतया सान्तरत्वेन वा व्यन्तरत्वेन वा विचित्रीकृतमध्यानि । '**सहैव**' इति स्वे स्वे स्थाने निवर्तयन्ति स्वदेशादपसारयन्ति असमर्थनक्षणोत्पादनक्रमेण निवर्त्यन्ते, स्वदेशादपसार्यन्ते तथैव । '**एवम्**' इति अस्मद्दृश्यतमःप्रभृतिभावान्तरपरमाणुतुल्या एव पिशाचपरमाणवः सर्वज्ञस्येत्यर्थः । पिशाचाभावे तु पिशाचेन यत् पूर्वमाक्रान्तमन्तरालं, तत्र आलोकपरमाणव एव दृश्यमानाः सर्वज्ञस्य पिशाचाभावव्यवहारविषयीभवन्ति । ननु तत्तदात्मादि पदार्थान्तरमपि पश्यन् सर्वज्ञो व्यतिरिक्तं पिशाचं कथं निषेधेत् सति असति वा पिशाचे तेषां स्वरूपनिष्ठत्वानपायात् । व्यतिरिक्त-

पिशाचाभावोऽनया भङ्ग्या सर्वज्ञेनापि दुःसाध एव। एवं तर्हि किमनेन प्रयासेनेति दर्शयति **'अथवा'** इति यत् किञ्चित् यद्यस्ति, तत् तेन द्रष्टव्यं; ततस्तत्र चेत् न पश्यति पिशाचं नास्त्येव असौ तत्र च सर्वमेव तत्रस्थं वस्तु पिशाचसहितं तद्भावविविक्तेन ज्ञानान्तरेण वेद्यम्, यदिवा तदेव ज्ञानं तस्य पिशाचाभावव्यवहारविषयः इति न अन्तरालवर्तिपरमाण्वन्तरानुसरणेन किञ्चित्। ननु अस्मदादेरपि एवं कस्मात् न भवति। उच्यते **'अर्वाक्'** इति। परिमितं यः पश्यति, तस्य न ज्ञेयमस्ति,—इत्येवं ज्ञानमुत्पद्यते येन ज्ञानमेव सहितज्ञानलक्षणमभावव्यवहृतेर्हेतुः। यत्र तु उत्पद्यते इति निश्चयो जिघ्रत इव रसयत इव अवदधत इव स्पृशत इव गन्धादिज्ञानावश्यकसंभावनात्, तत्र गन्धादिज्ञाननिवृत्तिरेव श्वासप्रवेशनज्ञानादिरूपाव्यतिरिक्तगन्धरसशब्दस्पर्शाभावव्यवहारहेतुरेव। ततो यद्यपि अमुना आलोकं प्रदेशमेव वा गृह्णता पिशाचाभावो गृहीतः पिशाचान्यत्वात् तयोः, तथापि प्रादेशिकोऽसौ गृहीतोऽपि अगृहीतकल्पः प्रदेशे आलोके वा भिन्नस्य अस्य संभावनानिवृत्तिकारणाभावादेतावर्ति बहुभिः प्रकारैरपि उक्ते वस्तुनि। ननु यदि पिशाचस्य अनिषेध्यतायामदृश्यता हेतुः, तर्हि घटादेर्निषेध्यतायां

'............स्वज्ञानमघटात्मताम्।' (१।७।१०)

इत्याद्युद्देशेषु दृश्यता हेतुत्वेन निर्देश्या। न,—इत्याह **'सिद्धम्'** इति। य इदानीं सर्वो निषेधस्तादात्म्यनिषेधपर्यवसित एव, तत्रच अव्यभिचरितं दृश्यत्वम्। तथाहि हेतुबिन्दुः? विशेषणं वाच्यमिति। एवं प्रसङ्गादभिधाय प्रकृतमेव अर्वाग्दर्शनेऽपि पिशाचस्य अनिषेध्यत्वमनुबध्नाति **'अदृश्यत्वेऽपि'** इति।

---

१ 'वर्ती' ग.।

यदि आलोकः परमाणुशो दृश्यो भवेत्, तदा परमाणुं परमाणुं गणयतो निरन्तरत्वेन भवेत् बुद्धिरत्र स्थाने यः पिशाचपरमाणुः संभाव्यते, तद्विलक्षणोऽयमालोकपरमाणुरेव पिशाचपरमाण्वभावस्वभावः, परमाण्वन्तरेऽपि एवमिति पिशाचपरमाणवः शक्येरन् प्रदेशे घटवत् निराकर्तुमालोकपरमाणूनामेव तत्र पिशाचपरमाण्वभावत्वात्, नतु परमाणुशो दर्शनमस्ति स्थूलैकघनविततप्रतिभासात् तन्मध्ये च परिमिततिमिरादिपरमाणुवत् पिशाचपरमाणूनामपि शङ्कनीयत्वात्। एवमालोकस्य परमाणुशो दृश्यत्वे स्यात् पिशाचाभावसिद्धिरर्वाग्दर्शनस्यापि,— इत्युक्तमपि यावद्वृत्ति विचार्यम्[3], नतु एतत् स्थितमर्थरूपमित्याह '**अथवा**' इति। परमाणुशोऽदृश्यत्वेऽपि यदि नैरन्तर्यप्रतिघातकाः पिशाचपरमाणवः संभाव्येरन्, तत् सान्तरत्वाभावे भवेत् तन्निषेधो, नतु एवम्। रसगन्धस्पर्शपरमाणवो हि यथैव अदृश्यत्वेन सन्तोऽपि न एकघनरूपप्रत्ययं निघ्नन्ति, तथा पैशाचाः परमाणवो रूपमया अपि अस्मदादिचक्षुरगोचरा एव। अतस्तेषामन्तरालरूपाणामग्रहणेनैव असत्तत्त्वं गृह्यते यथा, तथा प्रदर्शितं वितत्य बाह्यार्थसिद्धावुपाध्यायधर्मोत्तरेण। प्रदेशमध्येऽपि पिशाचनिषेधस्य अशक्यता इत्यमेव अनुसरणीया। ततश्च '**यथा भूतलस्य अन्तर**' इत्यपि सौत्रमनुसृतं भवति '**सर्वथा**' इत्यपि व्याख्यात भवति। इयतापिच यावद्वृत्तिविचारेण सर्वथाशब्दः सौत्रो व्याख्यातः इति उपसहरति '**ततश्च**' इति। प्रासङ्गिकदोषप्रशमनपरमिदं सूत्रं पूर्वसूत्रार्थस्य अविचलतामाधातुमिति तदेव अनुसन्धत्ते '**अवश्यं च**' इति। '**अयमेव**' इति

'.... 'आलोकचयोऽन्धस्य स्पर्शो वा'......।'(१।७।१०)

---

१ णुभाव' ग। २ 'परमाणुवरपिशाच' ख.। ३ 'विचारमात्र' ख.।

इतिप्रस्तावेन तादात्म्याभावो य उक्तः। **'यत्संवेदनम्'** इति यस्य ज्ञानस्य संवेदनं भूतलसंवेदनस्थानीयम्। **'तस्य'** इति ज्ञानस्य भूतलस्य इव ग्राहकं प्रत्यक्षं भवेत् येन रूपज्ञानाभावः प्रत्यक्षतः सिध्येदिति व्यवह्रियते, तत् तादृशं विज्ञानं न किञ्चिदस्ति,—इति यावत्। ननु स्पर्शज्ञानस्य यत् प्रत्यक्षं स्वसंवेदनं, तेन यत एकमेव स्पर्शज्ञानं गृहीतं, न रूपज्ञानं; ततः केवलभूतलज्ञानतुल्यादेकज्ञानसंसर्गयोग्यज्ञानान्तरनिषेधः स्यात्। स्यात् सत्यं, यदि रूपज्ञाने भवत्यपि तदेव स्पर्शज्ञानस्वसंवेदनं रूपज्ञानस्वसंवेदनाकारान्तरं विभृयात्; नतु एवं स्वप्नेऽपि,—इति निरूप्यते **'नहि'** इति घटेत्यादिवैधर्म्याशयेन। अत्र हेतुमाह **'ज्ञानद्वित्व'** इति तस्य संवेदनस्य ज्ञानस्वरूपग्राहकस्य एकत्वं न उपपद्यते। ननु वेद्यभूते चेत् द्वे ज्ञाने घटभूतलतुल्ये, तत् किमायातं तत्संवेदनस्य। आह—ज्ञानस्वरूपात् विज्ञेयलक्षणात् तस्य अभेदः। अत्रापि हेतुः स्वसंवेदनत्वमेव। एवमेकज्ञानसंसर्गस्य समस्ताभावव्यवहारव्याप्यभावं प्रदर्श्य अर्थस्य न्यायस्य व्यापकत्वं दर्शयति **'उक्त'** इति। तुर्विशेषद्योतकः। **'तत्सत्तैव'** इति नियमवती रूपज्ञानसत्ता व्यवच्छिन्ने स्वसंवेदने निर्भासमाना रूपज्ञानाभावव्यवहारास्पदम्। ननु इयता स्पर्शज्ञानतादात्म्यापन्नं रूपज्ञानं कामं निषिद्धं, तत्समये तु द्वितीयस्य व्यतिरिक्तस्यैव रूपज्ञानस्य कथमभावः सिध्यति। उच्यते **'कार्याभावात्'** इति। रूपज्ञानं यदि भवेत् स्पर्शज्ञानावसरे, तत् स्पर्शज्ञानात् यो जायते विकल्पः, स रूपज्ञानादपि जातः इति रूपस्पर्शोभयविकल्पनव्यापारं विकल्पज्ञानं स्वसंवेद्यं भवेत्, नच तत् तथाभूतमस्तीति। अत्रैव दृष्टान्तमाह **'प्रदीपेऽपि'** इति यथा पूर्वं रूपद-

---

१ 'द्वैतज्ञाने ग.'।

र्शनात् प्रतिघातकारणानापाताच्च निश्चितस्वनेत्रसद्भावोऽन्धकारे प्रदीपाभावं रूपज्ञानस्य कार्यस्य अभावात् निश्चिनोति, तथा विशिष्टविकल्पात्मककार्याभावात् रूपज्ञानस्य अभावादमुनैव न्यायेन सहितत्वरहितत्वाभावस्वरूपत्वादेऽपि रहितात् प्रदेशात् कारणस्य घटस्य अभाव इति अनुमानतैव भवेत्, नतु स एव स इत्यलं बहुना । 'एतावत्' इति ननु एषामन्या गतिर्वहतीति यावच्छक्ति विमृष्टं परदर्शनमिति वदन् विकल्पोऽपि पृथगेव अस्तु स्वसंविदितः इत्यादिदूषणान्तरसंभावनमत्रापि स्यात्,—इति दर्शयन् एकसंवेदनाभ्युपगमेन इदमपि न किञ्चित्,—इति सूचयति । तत एव आह 'युक्तं तु' इत्यादिना । अनेन शब्दरसगन्धानामभावोऽपि समग्रसामग्रीकत्वेऽपि सिद्धे ज्ञानात्मककार्याभावेन समर्थितः, तज्ज्ञानाभावश्च तत्स्वसंवेदनाभावेन, अन्तर्नादकायस्पर्शदन्तोदकरसत्रिपुटिकागन्धसंवेदनेन तु कामं बाह्यशब्दादिनिरासो भवेत्, आकाशधारणासमापन्नस्य तु समस्ततदभाववेदनं कथं समस्तशब्दाद्यभावे योगिनस्तत्र निश्चेतव्ये नास्ति अवकाशः एकज्ञानसंसर्गयोग्यवस्तुद्वयान्यतरनियतविज्ञानावसेयतासमर्थनस्य,—इत्यलं बहुना ॥ ११ ॥

ननु एवं भवत्प्रसाधितेनैव न्यायेन प्रमाणभूतशुक्तिकारजताभावान्यतरज्ञानप्रामाण्यसंवेदनमेव तदन्यरजतज्ञानप्रामाण्याभावज्ञानं सिद्धमेव । सत्यं सिद्धं, तथापितु साध्यं न सिद्धमिति दर्शयति सूत्रेण

एवं रूप्यविदाभावरूपा शुक्तिमतिर्भवेत् ।
न त्वाद्यरजतज्ञप्तेः स्यादप्रामाण्यवेदिका ॥ १२ ॥

अनेन हि शुक्तिकाज्ञानस्य न इदं रजतमितिज्ञानस्य वा

स्वरूपचिन्ता कृता भवति, ननु ततो व्यतिरिक्तस्य आद्यरजतज्ञानस्य किञ्चित् खण्डितं मण्डितं वा । घटज्ञानप्रामाण्ये हि प्राच्यपटवोधाप्रामाण्यरूपे संविदितेऽपि प्राच्यस्य पटवोधस्य न किञ्चित् कृतं भवतीति सूत्रार्थः । **'असद्विषयताम्'** इति अप्रामाण्यम् । **'इष्यते'** इति सौगतैः । **'तच्च'** इति पूर्वस्य अप्रामाण्यम् । **'एतावत्तु'** इति अयं भावः–अस्ति तावदेषा प्रतिपत्तिर्लोके, सा तु किंप्रमाणरूपा,–इति चिन्त्यम् । यदि प्रत्यक्षात्मिका, तदसद्दर्शनमेव विजयि; अथ अनुमानात्मिका, तत् न उपपद्यते,–इति समनन्तरमेव सूत्रेण वक्ष्यते ॥ १२ ॥

ननु इदमित्यनेन तदेव अवमृश्यते यत्र रजतज्ञानमभूत्, तत्रैव च न इदं रजतमिति शुक्तिका वेति ज्ञानमुदितमिदानीम्, नच एकमेकदा रूपद्वययोगि,–इति न ज्ञानद्वयं प्रमाणं भवितुमर्हतीति आनुमानिको बाधो भविष्यति । तत्रै एतदेव तावत् न सिद्धमिदमित्यनेन तदेवेति अनुमानं च न उपपद्यते । अस्ति च बाधव्यवहारः, सोऽसन्नय एव उपपन्नः,–इति सूत्रं

धर्म्यसिद्धेरपि भवेद्बाधा नैवानुमानतः ।
स्वसंवेदनसिद्धा तु युक्ता सैकप्रमातृजा ॥ १३ ॥

अपिशब्दो वहुमुखं योज्यः । अनुमानतोऽपि नैव बाधा धर्मिणोऽपि हेतोरपिच असिद्धेः । नच दूरानुसरणेन इयं बाधप्रतीतिः, अपितु स्वसंवेदनेनैव ततश्च अवश्यसमर्थनीया अपि एकस्मिंस्तु प्रमातरि सति तस्मात् स्वतन्त्रात् सा जायते,–इति सूत्रार्थः । तमवतारयति **'अनुमानमपि'** इति इयतोऽधिकप्रमेयत्वादियदेव अवतारितम्, शिष्टं तु प्राक्तनार्थनिगमनमेव । **'शुक्तिज्ञान'** इति हेतोरसिद्धिं व्याचक्षाणो धर्म्यसिद्धिं तदुपयो-

१ 'अत्र' ख. ।

गिर्नीं करोति पक्षधर्मत्वाभिधानप्रथमरूपप्रसाधको हेतोर्धर्म्युपयोगः इत्याशयेन । अन्यथा हेतोः साध्यं सिध्यति, किं तत्र धर्मिणा,–इति शङ्केत कश्चित् । 'हेतुः' इति अप्रामाण्ये रजतज्ञानस्य साध्ये । ननु स्वरूपासिद्ध एव कस्मात् न अयमुच्यते यत्र धर्म्यसिद्धिमुत्प्रेक्षिता न आलम्बनीया,–इत्याशङ्क्य न्यायं व्युत्पादयति 'स्वरूप' इति । इह हेतुस्वरूपमेव स्वरूपं, न वस्तुस्वरूपं येन शशविषाण स्वरूपासिद्धं भवेत्, हेतोश्च नियतदेशकालायोगव्यवच्छेदेन साध्यसाधकत्वं नाम स्वरूपमाश्रयायत्तम्। ततश्च यस्य आश्रयो न कश्चित् वाक्यात् प्रतीयते–अनित्यः शब्दश्चाक्षुषत्वादिति, स स्वरूपेणैव निरधिष्ठानो भवन् न किञ्चिदिव सम्पन्नः शब्दगतस्य तस्य अभावात् अन्यरूपादिनिष्ठतायाश्च प्रतीत्यसंस्पर्शात् । ततोऽयं स्वरूपासिद्ध उच्यते । शुक्तिज्ञानसत्यत्वं तु यद्यपि अन्यत्र न सिद्धं, तथापि स्वरूपेण भात्येव अन्यनिरपेक्षस्य तस्य प्रतीतिविश्रान्तिपदत्वात् । ननु एवमपि शुक्तिकाया ज्ञानसत्यत्वे शुक्तिकाज्ञानेन अधिकरणे सत्यत्वं सिद्धमपि अधिकरणान्तरे प्रकृतरजतज्ञाने न सिद्धमिति विभिन्नाधिकरणत्वेन असिद्धमेतत् । अस्तु एवं, को दोष इत्याह 'व्यधिकरण' इति काकस्येत्यनुपात्ते तु स्वरूपासिद्ध एव वा अयमिति मन्तव्यम् । ननु एवमाश्रयासिद्धत्व कस्मादभ्यधायि । उच्यते, स व्यधिकरणासिद्धस्य अपि अधिकरणान्तरसंबन्धो न दोषाय, अपितु तद्द्वारेण आश्रयेण यः सबन्धः, स एव । ननु काक एव आश्रयोऽस्तु । न,–इत्याह 'प्रकृत' इति । 'स्वरूपेण' इति । धर्मस्य अन्यधर्म्याश्रयत्वेन धर्मतया, धर्मिणश्च अन्यधर्माधारत्वेन धर्मितया सिद्धावपि सत्यां तेन धर्मिणा आश्रयेण धर्मता, तेन च धर्मेण आश्रितेन तस्य धर्मिता,–इत्येवं

या संयोजना, तस्या असिद्धिर्या, सा आश्रयासिद्धिर्वा व्यधिकरणासिद्धिर्वा व्यपदिश्यते। एवमसिद्धस्य प्रकारे वैचित्र्यमुक्त्वा प्रकृते विशिष्टमसिद्धप्रकारं दर्शयति **'इह तु'** इति। **'पुरा'** इति बाधककाले। बाध्यरजतज्ञानात् पूर्वमेव शुक्तिज्ञानं, तदेव हि रजतज्ञानस्य स्मारकं विरोधेन संबन्धेनेति तदेव रजतज्ञानमप्रामाण्ये साध्ये धर्मीचिकीर्षितम् **'तदा'** इति हेत्वभिमतशुक्तिकाज्ञानसत्यतासंवेदनकाले नैव सिद्धम्। ननु न रजतज्ञानं धर्मीकरिष्यते, अपितु शुक्तिकैव। एतदपि न सहते तस्य···ति तदानीमित्याशयः। एतदेव सिद्धसाध्यत्वं घटयति **'नहि'** इति। शुक्तिकाज्ञानस्य योऽधुना वर्तते विषयः, स रजतज्ञानस्य प्राक्प्रवृत्तस्य अपि अधुना न विषयः इति हि दैवरक्ताः किंशुकाः। ननु सिद्धसाधनं किंनाम दूषणं, साध्यं हि तावत् सिद्धम्, अनुमानस्य पुनरस्तु वैयर्थ्यं न किञ्चित् सिद्धमिति दर्शयति **'नच'** इति। ननु यथा पर्वतं तद्गतं च धूमं दृष्ट्वा कार्यान्तरत्वरया अननुमितवह्निरेव अपक्रम्य प्रस्थितः सन् स्मृते अद्रौ धर्मिणि वह्निमत्तां प्राच्यसमयभाविनीमधुनैव अपूर्वतया साधयति, तथा स्मृते रजते तज्ज्ञाने वा अधुनैव असत्तां वहिरप्रमाणतां वा साधयेत्। साधयेत् यदि धूममिव हेतुं स्मरेत्, स्मरेच्च, यदि अनुभवेत्, नच अनुभवोऽस्ति,—इत्याचष्टे **'नच'** इति। स्यादेतत्, यथा अधुना दृश्यमानात् भित्तिमालिन्यादिविशेषात् पूर्ववृत्तं धूममनु सा वह्न्यनुमा, तथैव सत्यतया मूलसाध्यया व्याप्तस्तद्रूपको यो धर्मो हेतूचिकीर्षितः स इदानीं हेत्वन्तरादनुमायिष्यते, ततश्च असत्यतानुमानं भविष्यति। अत्र उच्यते **'शुक्तिका'** इति। नहि तथाभूतसाधनं धर्मसाधकहेत्वन्तरमस्ति। अस्ति हि तदा शुक्तिः, तज्ज्ञानं,

तत्प्रामाण्यं, तत्स्वसंवेदनं च। सर्वं च एतत् अन्यत्र स्वे स्वे आश्रये वर्तते इति व्यधिकरणमेव। एवं स्मर्यमाणस्य धर्मितामभ्युपगम्य दूषणमुक्तं, अधुना तामेव न सहते **'रजते च'** इति। पर्वते हि स्मर्यमाणे वस्तुता अस्ति, न तु रजते, रजतज्ञानं तु केवलमध्यवसीयते इति अध्यवसिते यत् साधकं, तत् वस्तुभूत ज्ञानेन किञ्चित् साधितं भवति। बाह्यं हि द्वयं विकल्प्यतया अध्यवसितमिति अभेदाध्यवसायात् भेदानध्यवसायात् वा विकल्पेन स्पृष्टमुच्यताम्, अस्ति च

'शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः।'

इत्यादिवाह्याभिमतप्रधानादिविषयमनुमानं तद्धर्मीकर्तुं शक्यं, न तु एवं स्वसंवेदनमविकल्प्यत्वात् तस्य। एतच्च भवद्भिरेव स्वसंवेदनस्य अविकल्पतामुपपादयद्भिः

'अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक्।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी॥' (प्र०वा० ३।२४९)

इति वदद्भिः प्रसाधितमेव। ननु अस्ति एषा प्रतिपत्तिः—तत् रजतज्ञानं तदेव प्रमाणं न अभूदिति अधुनैव मया ज्ञायते शुक्तिज्ञानानुभवात् हेतोरिति। बाढमस्ति, सा तु भवन्मते न कथञ्चित् युज्यते, अस्मन्मते एव तु युज्यते। तदाह **'अस्माकं तु'** इति। तुशब्देन यद्यपि विपर्योपरागकृतं कालभेदं संवेदनेऽभिमन्यन्ते मायाप्रमातारो वेद्याशप्रवणीभूतहृदयतया तत एव भिन्नानि ज्ञानानि,—इति व्यवह्रियते, तथापि तेषां पारमार्थिकं रूपमभिन्नमेव,—इति शुक्तिज्ञानस्वसंवेदनावधौ रजतज्ञानस्वसंवेदनता अपि मायोपरागयोगापगमात् स्थितैव। मायाविद्योभयसारो हि अयं

१ 'अस्तु' ख। २ 'कर्तुं नतु' ख.। ३ 'विरूपकता' ख।

व्यवहारो न एकपरिनिष्ठया निर्वहति। ततस्तस्य रजतज्ञानस्य धर्मिणः साध्यमप्रमाणात्मकमननुवृत्तिधर्मविमर्शकत्वं नाम यत्, तत् शुक्तिकाज्ञानसत्यतया साध्यते। एवं पर्वतज्ञानधूमज्ञानयोः स्मृतिस्वसंवेदने अद्यापि भावात् तत्प्रकाश्यत्वेन स्थितस्य पर्वतस्य धर्मिणोऽवस्थितधूमज्ञानप्रकाश्यात् पूर्वस्मादेव पूर्वमेव अग्निमत्त्वसिद्धिः शक्यसमर्थना। अन्यथाहि कः पर्वतः, कश्च धूमः। नहि स्मृतौ तयोः प्रकाशनमस्ति। निर्विषया हि सा, ततश्च सर्वात्मना अप्रकाशमानस्य धर्मिता, हेतुता च,—इति गगनस्य शशविषाणतूलिकाचित्रोल्लेखा। तत् तदपरं पूर्वसिद्धं संवेदनीयमप्रामाण्यलक्षणं धर्मान्तरं यस्य, तस्य भावस्तेन अप्रामाण्येन धर्मान्तरेण संबन्धः, स एव विशेषस्तस्य ज्ञानाभिधानात्मा यो व्यवहारस्तत् रजतज्ञानमप्रमाणमिति तत्साधनकाले धर्मित्वमुपपन्नं कालभेदेनापि स्थितानां रजतादिज्ञानानामिति सङ्गतिः। एवमस्माकमेव इदमुपपन्नं, नतु भवतां कथञ्चिदिति तुशब्दद्योतितमुपपाद्य प्रकृतमेव परपराकरणमनुसरति **'नच'** इति। **'एवम्'** इति अनुमानानुसरणेन। अत्र हेतुः **'झगिति'** इति। अनुमाने हि दृष्टान्तान्वेषणानवस्थेति पर्यन्तेऽपि एतत् स्वसंवेदनसिद्धत्वमङ्गीकार्यमिति भावः। एतदुपसंहरति **'एवम्'** इति। न प्रत्यक्षतया, न अनुमानतया शुक्तिज्ञानं रूप्यज्ञानाप्रमाणत्ववेदनं; तत् न रूप्यज्ञानस्य बाध्यता, नापि शुक्तिज्ञानस्य बाधकता सिद्ध्यति, स्वदर्शने तु उपपद्यते इति दर्शयन्नवान्तरं सौत्रं व्याचष्टे **'यावत्'** इति। एक आश्रय इदमिति पुरोवर्ती, तदवष्टम्भिनौ तदपरित्यागेन स्फुरन्तौ संवेद्यौ यस्मिंस्तादृगवभासनं प्रकाशनव्यापारो यावदेव विकल्पबुद्धेस्ता-

१ 'निर्विमर्शा' २ 'अपूर्वं' ख.।

वत् तदिति अन्योन्यविपरीतसंवेद्यद्वयं बहिर्विरुद्धे परस्परतः इति कृत्वा बाधकमवस्थाप्यते; द्वितीयं च बाध्यमिति अर्थात् । अद्यापितु बाधकत्वा न नियतीकृतेति '**बाध्यम्**' इति न साक्षादुक्तम् । सर्वत्र च अयमेव व्यापको विधिरिति कथयति '**भावाभावादेः**' इति । ननु बहिरिति किमाशयेन उक्तम्। आह '**विकल्पस्तु**' इति । नीलमेव तदैव तस्यैव अनीलमित्यपि हि भवति विकल्पावभासो, ननु तत्र बाधोऽस्ति, तत्कारणमेव तत्र विरोधलक्षणं नास्ति, तत् का अत्र बाधसंभावना,—इति वा-शब्दः । ननु सत्यविकल्पितम्, असत्यविकल्पितमिति भेदेन व्यवहारोऽस्ति, तत्कथमुक्तं नात्र बाधः इत्यादि । तत्र उच्यते— प्रत्यक्षमवभासं दृश्यमेव बाह्यरूपमपेक्ष्य विकल्पेन मिश्रीकृत्य स इति बाधो विरोधो वा, यदि वा सेति संभाव्यते चेत् तत् स्यात् सम्भवेदपीत्यर्थः, र्बाहिं विकल्पमहिमैव बाधे प्रतपति, विकल्पश्च अनुभवात् यदि उत्तिष्ठति, तत् किं प्रमात्रा कल्पितेन,—इति बौद्धमुद्घाटयति '**विकल्प**' इति । ननु अनुभवोऽपि कारणमिष्यते विकल्पस्य अस्माभिः, प्रमातृस्वातन्त्र्यं च तत्र अधिकमुपयुज्यते इति दर्शयितुं मात्रपदम् । '**तत्र**' इति यथास्थितकालभेदेन भिन्नाभासद्वयमात्रव्यवहारिणि विकल्पे । '**यदा पुनः**' इति स्वदर्शने । '**स्वतन्त्रे**' इति । नैयायिकोऽपि हि कालभिन्नज्ञानगुणद्वयसमवायिनमङ्गीकुर्वन् अपि तदाश्रयमेकं न समर्थयितुं शक्यात्, तस्मिन्नेव हि आकाशे यदि पूर्वं समुद्रघोषः, ततोऽपि पटहध्वनिः, तावता किं कस्य विरुद्धं, विपर्येक्यमपि तयोः केन ज्ञानेन गृहेत, विकल्पज्ञाने प्रमाणभूतमपि स्वविषयमात्रे व्यवस्थापयेत्, न ज्ञानान्तरविषयम्, ज्ञानस्य ज्ञानान्तरवेद्यत्वेऽपि

१ 'अन' ख । २ 'यदा वा' ख ।

ज्ञानज्ञानमस्तु अपरं ज्ञानविषयमेव,—इति स्वसंवेदनात्मकस्वत-न्त्रप्रमातृतत्त्वाभ्युपगम एव समस्तेष्टसिद्धिः, प्रमाता च शङ्खवस्तु विकल्पज्ञाने विरुद्धमवभासयति। केन प्रकारेण विरुद्धम्। आह '……' शुक्लतया। स तां कथं जानाति। उच्यते '**शुक्ल**' इत्यादि। तत् शङ्खवस्तु कदा अस्य प्रकाशितम्। आह '**तदाभास**' इति। ननु कालभेदेन तथाभातं, तत् केन अनयोर्विरोधः, सकृदाभा-सहेतुकस्तु विरोधः। हेतौ शता। ननु कालभेदेन अनुभवो वृत्तः, तत् सकृदाभासत्वमधुना कुतस्त्यम्। आह—यत् तद्वारभू-तमाभासद्वयं, तदन्योन्यापेक्षं प्रकाशते। कुतः इति चेत्, वस्तुत ऐक्यात्। यदेव पीतमिति प्रकाशेत, तदेव शुक्लमिति प्रकाशते यतः। ननु इयता अपि कथं विरोध इत्याशङ्क्य तत्समर्थनाय हेतुमाह '**यत्रैव**' इत्यादि '**विरोधात्**' इत्यन्तम्। ननु एतावता विरोधो वाधे…(?) विरोधे च एकाश्रयत्वमिदमित्यवष्टम्भेन द्वयोरु-त्पत्तौ विरोधोन्मीलनात्, तत् पुनरपि न एकप्रमातृकत्वं किञ्चित् प्रदर्शितमित्याशङ्क्य आह '**एष**' इति। विरोधस्य कारणं यदे-काश्रयत्वं, तत् सति एकस्मिन् प्रमातरि ज्ञेयं, नतु असति। अत्रैव दृष्टान्तद्वयमाह '**यथा**' इति। घटपटयोरेको देशो गृहादिः, तेन प्रातिपदिकार्था एव शुद्धाः सहसंवेदनेऽपि गृहीता इति विभक्त्यन्तरार्थप्राणे ज्ञातेये प्रमातुरेव प्रभावः,—इति आलो-केऽपि घटाभावे अत्र भूतले इत्यंशे प्रमातृप्रभावं विना नास्ति गत्यन्तरम्। ननु इयता विरोधः समर्थितः, तथापितु किञ्चिदेव बाधकमिति किंकृतो नियमः। तत्र आह '**एवंच**' इति शुक्तिका-ज्ञानं स्वसंवेदनपतितं, शुक्तिकया अर्थक्रिया कृता,—इति ज्ञानं यतः उपचीयते, ततः शुक्तिकाज्ञानं बलवत् भूतमर्थक्रियाज्ञानानु-प्रवेशशून्याभावपरिदुर्बलं तत् स्वसंवेदनपतितमेव रजतबोधं

धावते तद्विमर्शमुन्मूलयत्। ननु किमत्र संवादबलेन। आह 'नहि' इति। 'शबलस्य' इति हिमरजतप्रकोलत्रपुशकलकादिसंविदान्दोलनचित्रस्य। 'अत एव' इति यतः परतः संवादो, ननु तदैव, तस्मात् सोऽपि एकप्रमातृतत्त्वाधीनः। 'तत्र' इति प्रमातरि भावाभासौ शुक्तिकालक्षणौ न विरुध्येते यतः। एवंहि तत्र तौ विश्राम्यतः—या शुक्तिका मया दृष्टा सैव इयं अधुना अर्थक्रियायां प्रवृत्ता—इति। तेन विरोधमुपक्रमे, संवादं निष्ठायां यावदेव बाध्यबाधकभावोऽपेक्षते तावत विरोधसंवादो यः प्रमात्रैक्यनिबन्धनत्वात्, सोऽपि प्रमात्रायत्तः एवेति स्थितम्। यदधीनभावाधीनं यत् भावान्तर, तत् तत्सन्निधावेव भवति धूम इव काष्ठादिसामग्र्यधीनवह्न्यायत्तः, तथाच प्रमात्रेकाधीनविरोधसंवादबोधाधीनो बाधव्यवहारः इति[1] स्वभावः, विपक्षे[2] च आकस्मिकत्वप्रसङ्गतो व्याप्तिः ॥ १३ ॥

एतदुपसंहरन् व्यवहारान्तरमपि समन्वयरूपत्वात् सत्येव प्रमातरि भवति, न अन्यथा,—इति दर्शयति सूत्रेण

इत्थमत्यर्थभिन्नार्थावभासखचिते विभौ।
समलो विमलो वापि व्यवहारोऽनुभूयते ॥ १४ ॥

'तत्तद्विभिन्न ...... .......... ।' ( १।७।२ )

इत्यादिसूत्रद्वयदर्शितान्वयव्यतिरेकरूपेण उपपत्तिप्रकारेण सूत्रान्तरनिरूपितकार्यकारणभावाद्युदाहरणप्रकारेण च इदमायातम्—यः किल विभो देशकालानवच्छिन्नसंवेदनसारे भगवति स्वतन्त्रे मायाशक्त्युपकल्पितचिदभेदाख्यातिसारभेदमात्रपरमार्थैः प्रतिबिम्बकल्पतया अनतिरिक्तैरपि अतिरिक्ताभासैर्यैर्नीलसुखादिभिः खचिते स्वरूपानन्यथाभावेन उपरक्ते विश्रान्तः सर्वो

१ 'इति भाव' ख। २ 'विक्षेपे च' ग।

व्यवहारो दृढेन अनुभवप्रमाणेन निश्चीयते; स द्विधा–समलो मायान्धानां क्रयविक्रयविवादादिः, निर्मलः प्रत्यभिज्ञातात्मपरमार्थानां पारमेशरूपावेशलाभात् विशेषदृशि वीरेशव्यपदेशानां, नतु लाकुलादिपशूनां; विद्येश्वरप्रभृतीनां दीक्षितपर्यन्तानां शुद्धात्मनामुपदेशदीक्षानित्यनैमित्तिकाद्यनुष्ठानध्यानसमाधानादिव्यवहारः, यद्यपि तत्रापि यावन्मलशेषावस्थानं मायाव्यापाराविगलनादतश्च तथा येन व्यवहाररूपता सा हि भेदाभेदप्राणितसमन्वयात्मा सर्वथा भेदतिरोधौ तिरोधीयते एव, तथापि प्रत्यभिज्ञातयावत्परमात्मनां स व्यवहारः स्वपरात्मनि मलशोधनबोधनैकधनत्वात् विमल एव युक्तः। **'तथा ज्ञानिनाम्'** इति वृत्तौ समस्तं पदम्। **'संभाव्यते'** इति वृत्तावुक्तं मूढानां झटिति तथाभिमानाभावेऽपि उक्तोपदेशपरिशीलनदिशा प्रकाशते एव अयमर्थः इति दर्शयितुम्। तदुक्तं शिवविज्ञानोपनिषदि

'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम्।
योगिनां तु विशेषोऽयं संबन्धे सावधानता॥'

(वि० भै० १०६)

इति। **'केवलम्'** इति सत्यपि सार्वत्रिके मायाव्यापारे इदमधिकमित्यर्थः। सिद्धाः समय्यादिगुर्वन्ताः, शुद्धात्मानो निष्कलाः, विद्येश्वराः अनन्तभट्टारकाद्या मन्त्रमहेश्वराः, मन्त्रेश्वराः अङ्गुष्ठमात्रप्रभृतयः, आदिग्रहणात् मन्त्राः, ते च परमेश्वरोपदेशलाभे सति ज्ञातपरमात्मस्वरूपा इति मन्तव्याः, यदुक्तम्

'…………अघोरात्परमात्मनः।'

इति, नतु लाकुलादिदृशि इव पशुरूपाः। तदर्थमेव सिद्धशब्द एषां विशेषणम्, सदाच आदिशब्देनैव निष्कलात्मनो ग्रहणम्, शिवभट्टारकस्य तु न अन्या पृथक् व्यवहर्तृता, सर्वव्यवहाराणां

स विश्रान्तिपदमिति निरूप्यते। मायान्धास्तु सकलप्रलयाकलवि-ज्ञानाकलाः, तेषां समलो व्यवहारः । यदागमः

'अवस्थात्रितयेऽप्यस्मिंस्तिरोभावनशीलया ।
शिवशक्त्या समाक्रान्ताः प्रकुर्वन्ति विचेष्टितम् ॥

( मा० वि० १।३६ )

इति । केवलमित्यादिना संभाव्यते इति वृत्तिगतं विवृणोति । इति शिवम् ॥ १४ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचिता-यामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां शक्ति-वर्गैकाश्रयविमर्शः सप्तमः ॥ ७ ॥



## अथ अष्टमो विमर्शः।

पूर्वं यदनुत्तरसमृतभूमिमासाद्य सप्तमीं कलनाम्।
विश्राम्यति तत्प्रणमाम्यमृताङ्घ्रिदं परानन्दि॥

एवं ज्ञानस्मृत्यपोहनशक्तिमानेकोऽन्तःकृतानन्तविश्वरूपः,—इ-तीयत् वितत्य उपपादितम्। अधुना महेश्वर इति निर्णेतव्यम्। तत्र माहेश्वर्यं ज्ञानविषयं क्रियाविषयं च, आद्यमत्रैव ज्ञानाधिकारे निर्णीयते। एवं ज्ञाता प्रकृतितः प्रत्ययतश्च निर्णीतो भवति। तत्र ज्ञानं नाम संवेदनमहमिति यत्, तदेव स्वयंभेदिताभासो-परागरूपणासङ्कुचितमुच्यते। ततश्च आभासवर्गे यत् स्वातन्त्र्यं, तदेव ज्ञानविषयं माहेश्वरं निर्णेतुं

'तात्कालिकाक्ष.....................।'

इत्यादिना

'.............शुद्धे ज्ञानक्रिये यतः।'

इत्यन्तेन श्लोकैकादशकेन विमर्शान्तरमारभ्यते। तत्र आभासा-न्तरमाभासोऽपेक्षते कश्चित्, कश्चित् न तथा,—इति श्लोकेन उक्त्वा, तथापि स एक एव आभास इति श्लोकान्तरेण उच्यते, अर्थक्रियाभासोऽपि तथैव आभासनियत इति द्वयेन, कुत्र आभासे सा अर्थक्रियेति द्वयेन, आभासान्तरवैचित्र्ये भित्तिकल्पमान्तर-त्वमिति श्लोकेन, बाह्यत्वं स्वरूपतो विभागतश्च द्वयेन, ज्ञाना-दिशक्त्याश्रयस्य उपसंहारः एकेन, महेश्वरत्वमुपसंहरता भावि-क्रियाधिकारोपक्षेप एकेन,—इति तात्पर्यम्। अथ प्रतिसूत्रमर्थ-निरूपणम्। उक्तमिदं परमेश्वरनिष्ठ एव सर्वो व्यवहार इति। तत्र स्यादाशङ्का—व्यवहारस्य अनुप्राणक एक एव, नहि तद-तिरिक्तं व्यवहारस्य किमपि निजं तत्त्वमस्ति, ततश्च स्फुटत्वा-

स्फुटत्वप्रायप्रचुरवैचित्र्यचर्चाविचारे निमित्तं न लभ्यते—इति। तामपासितुमुच्यते

तात्कालिकाक्षसामक्ष्यसापेक्षाः केवलं क्वचित्।
आभासा अन्यथान्यत्र त्वन्धान्धतमसादिषु ॥ १ ॥

व्यवहारो भगवति सर्व इति सत्यमिदम्, तत्र वक्रन्यान्तरमुच्यते,—इति केवलपदम्। तत्कालभवं निकटवर्ति यदक्षसामक्ष्यमैन्द्रियकादि प्रत्यक्षं, तदपेक्षमाणास्तत्संस्कारबलोत्थिता घटोऽयमित्याद्या आभासाः प्रत्यक्षसमनन्तरभाविनि विकल्पव्यवहारे 'अन्यत्र तु' अन्धादिव्यवहारे 'अन्यथा' इति न तात्कालिकमक्षसामक्ष्यमपेक्षन्ते चिरवृत्तसंस्कारोत्थापितास्तदा ते आभासा इत्यर्थः। जातिनयनहीनस्य अपि रूपमित्याभासो जन्मान्तरप्रत्यक्षसंस्कारज एव तत्र चिरवृत्तत्वेन तथास्मरणात्, अणूनामुच्यतां नाम स्वतन्त्रता निजाभासबहिष्करणविषया 'तेषाम्' इति विकल्पनात्मकव्यवहारविषयाणाम्। 'त एव च' इति ये प्रत्यभिज्ञातात्मनां महामन्त्रेश्वरप्रभृतीनां सदैवाहमितिभासनविषयाः, नतु 'अन्ये केऽपि' इति ये नियतिशक्त्या तद्विषयतया नियमिताः, ते च अहन्तापदे प्रमातृभुवि विश्रान्ता व्यवहाराय भवन्ति,—इति शेषः। व्यवहारशब्देनेति वृत्तिगतेन। 'प्राधान्येन' इति। तदायत्तो हि अभिधानात्मा परो व्यवहारः ॥ १ ॥

अतश्च इदं जातमित्याह

विशेषोऽर्थावभासस्य सत्तायां न पुनः क्वचित्।
विकल्पेषु भवेद्भाविभवद्भूतार्थगामिषु ॥ २ ॥

इयत्यपि वैचित्र्ये अर्थावभासस्य त्रैकालिकवस्तुविषयविकल्पगोचरपतितस्य अपि सत्ताया प्रकाशमानतैकसारे विद्यमानत्वे नैव

कश्चित् विशेषोऽहमित्यामर्शेन सदातनप्रकाशत्वात्। ततश्च नीलं पश्यामि उत्प्रेक्षे स्मरामीति एक एव नीलाभासो दर्शनादौ। एवं दर्शनाभासोऽपि एक एव पीतादौ। तथा उत्प्रेक्षाद्याभासाः, तेषां संयोजनवियोजनवैचित्र्यात् मायाप्रमातृषु भगवच्छक्त्युपकल्पितसस्फुटास्फुटादिव्यवहारवैचित्र्यसिद्धिरिति **'उक्तम्'** इति

'केवलं भिन्नसंवेद्य.................।' (१।५।२१)

इत्यादौ। **'एषाम्'** इति विकल्प्यानामर्थानां संस्कारलक्षणः संस्कारनामा प्रतिभास आभासोऽस्त्येव। संस्कारता च यद्यपि न अत्यन्तमहन्तापदं, वरणमयता हि सा; तथापिहि संसारिणां तन्मुखेन आभासानामहन्ता स्फुटोपदेशा,—इत्येवमुक्तम्। ननु कस्मादसौ न भाति। भात्येवेत्याह **'तस्य च'** इति। **'प्राक्'** इति

'स्वामिनश्च.................।' (१।५।८०)

इत्याद्युद्देशेषु। **'बहिष्कार्यः'** इति अहन्तैकात्मनस्तथावरणकारिणः पदादिदमितिभासनीय इत्यर्थः॥ २॥

ननु सुखादिषु का वार्ता तेषु बाह्यप्रत्यक्षाभावात्, तदा च सुखतत्साधनाद्याभासे स्थिते सर्वो निःसमीह एव स्यादित्याशङ्क्य आह

सुखादिषु च सौख्यादिहेतुष्वपि च वस्तुषु।
अवभासस्य सद्भावेऽप्यतीतत्वात् तथा स्थितिः॥३॥

ननु ते आभासाः सुखादिरूपाः सन्ति अहन्तया, तत्कथमतीताः। सत्यं, वर्तमाना अपितु ते तस्यां न भवन्ति। तदाह **'कालानवच्छिन्न'** इति। ननु एवमिदन्तापेक्षायां भाविनोऽपि कस्मात् न उच्यते। आह **'पूर्वम्'** इति। नहि कश्चित् सुखाद्याभासोऽस्ति यः पूर्वं न अभवदन्ततो जन्मान्तरेऽपि वृत्तत्वादस्येति वस्तुचिन्तायामतीतत्वमेव अस्य उचितम्। ननु

अहन्ताभुवि यः सद्भावः, इयं किं न वर्तमानता। सत्यमेवम्। अत्र हेतुः '**बाह्यानामेव**' इति। यदेतदुक्तं पूर्वमुदितापि वृत्तौ '**आह**' इति सङ्गतिः। '**तदानीम्**' इत्यनेन हि वर्तमानता बाह्यनिष्ठैव,—इति दर्शितम्। '**बुद्धिमयः**' इति ग्राहक इति शेषः। ग्राहकरूपानावेशे हि ह्लादाद्ययोग इति उक्तम्। ननु आभासश्चेदस्ति, किमत्र वर्तमानतया। आह '**नियति**' इति। '**अन्यदा**' इति बाह्यत्वेन अतीतत्वे। तदात्वं वर्तमानता ॥३॥

वर्तमानाभासादर्थक्रियेत्येतदेव दर्शयति सूत्रेण

गाढमुल्लिख्यमाने तु विकल्पेन सुखादिके।
तथा स्थितिस्तथैव स्यात् स्फुटमस्योपलक्षणात् ॥ ४ ॥

निरन्तरोत्प्रेक्ष्यमाणे सुखादावतीतेऽपि या पर्यन्ते तथा स्थितिः अत्यन्ताह्लादादिरूपतया, सा तेन प्रकारेण हेतुना भवति। हेतुहेतुमतोर्लिङ्। नहि तदा असौ स्मर्यमाणः, अपितु वर्तमान एव सुखाद्याभासः। स्मर्यमाणस्य विकल्प्यत्वेन अस्फुटाभासत्वं हि उचितम्। यथाह

'तत्र विप्लवोऽन्यो विकल्पं स्फुटयति ······।'

इति। अयं च तदा स्फुटाभास एव। '**कुतश्चित्**' इति व्यधिकरणतया पञ्चम्यर्थं व्याचष्टे '**उपदेश**' इत्यादिना '**आहितम्**' इत्यन्तेन। कन्दसौपुष्पपदाद्यनुप्रवेशः उपदेशविशेषः, आसङ्गोऽनुरागः, अन्यो हेतुरदृष्टादिः। '**प्रत्युपस्थाप्यते**' इति वर्तमानाभासीक्रियते न स्मरणादिना। स्वतन्त्रग्रहणं स्मरणनिराकरणाय, विकल्पतायामपि स्फुटान्धस्य अविरोधो विमर्शसारत्वात् संवेदनस्थितेरिति उक्तमेव। ननु एवं किं तत्र स्मरणेन। उच्यते '**केवलम्**' इति। '**अतीत**' इति सुखविकल्पनं, तत् न पूर्वकम्, अत एव आह '**अनुभूत**' इत्यादि। तस्य सुखवि-

कल्पस्य प्राच्यं तत् सुखं न विषयः इत्यर्थः । ननु स्मरणविकल्पेन विषयोऽस्य चेत् दत्तः, तर्हि कथं न अतीतविषयता,—इत्याह **'तदानीं च'** इति । सुखाभासलक्षणं यत् सामान्यस्मरणेन उपस्थापितं, तदेव यतः स्फुटीकरोति निरन्तरो विकल्पः, प्राच्यांस्तु देशकालप्रमात्रन्तरसाचिव्यादीन् न आद्रियते; ततः पूर्वरूपताप्रमुखीकारेऽपि तदपहस्तनं जातमेव । **'तच्च'** इति सुखादि उल्लिख्यमानं कार्यकारि न वेति तावदास्ताम्, अभूतस्य अपि पृथिवीकुल्याशुभादेः, भावितस्य अपि अस्तु तावदसत्यत्वं, सुखादेस्तु यावती अर्थक्रिया विवक्षिता, सा पूर्णैव,—इति न अत्र असत्यधिया अपि भ्रमितव्यम् ॥ ४ ॥

यदुक्तं **'सर्वदान्तः सन्तः'** इति, तत्र दूषणं परकीयमर्थक्रियाकारित्वैव सत्त्वमित्याशयेन यत्; तदाशङ्क्य अभ्युपगम्य परिहर्तुं सूत्रमवतारयति

भावाभावावभासानां बाह्यतोपाधिरिष्यते ।
नात्मा सत्ता ततस्तेषामान्तराणां सतां सदा ॥ ५ ॥

**'यद्यपि'** इति । **'तथैवच'** इति अर्थक्रियाकारित्वेन । **'स्युः'** इति लोकप्रसिद्ध्या संभाव्यमानमेतत्, अस्माकमपि न अत्यन्तमसंमतमित्यभ्युपगमं सूचयति । प्रमातृरूपतया सद्भावे यद्यपि न अर्थक्रियाकारिणः इति अपिशब्दः । भावरूपाणामभावात्मनां च आभासानां **'बाह्यता'** नाम **'न आत्मा'**[१] स्वरूपम्, अपितु आभासान्तरस्वभावा असौ **'उपाधिः'** उपरागनिमित्तं विशेषणम्, यत एवं, **'ततस्तेषाम्'**आभासानामान्तरत्वेन सदातनी **'सत्ता'** इति । ननु आभासाः सन्तु अतः, अर्थास्तु तथा कथम् । अत्र ब्रूते **'आभासा एव'** इति विच्छेदवन्तो बाह्यताभूमौ, अन्तस्तु न

१ 'आत्मानमपि तु' ग. ।

तथा ये ते एव आभासा अर्थाः। अत्र हेतुर्बोधादभिन्ना यतः। ततो भेदे हि न प्रकाशेरन्,–इति निरूपितम्। ननु एवं धृता-याभासाना भावाभावा विषयत्वेन कथमुक्ताः। उच्यते **'केवलम्'** इति। अत्यन्ताभेदे सत्यं नास्ति विषयविषयिता, स तु इह नास्ति मायाशक्तिकृतस्य बोधात् व्यतिरेकस्य निर्भासात्। ननु भावेषु इयमस्तु चिन्ता, अभावे तु तुच्छरूपे कथं, इमौ बोधात् व्यति-रेकाव्यतिरेकौ कथंच न स्याताम्। ननु तुच्छरूपत्वादेव, नैव स्वरूपेण अभावस्तुच्छरूपः, घटस्य हि असौ तुच्छता–घटो[1] नेति, तत् घट एव तथाभूतः, अत एव न पटो घटस्य भावः। नहि पटो घटस्ये[2] किञ्चित्। ननु घटस्यापि किं तुच्छता किञ्चित्। एव-मेवत्। न किञ्चित् चेत् तत् घटस्य कथं[3], तर्हि घटस्तुच्छः। प्राग-भावात्यन्ताभावप्रध्वंसाभावेषु च लोकस्य धनदारपरिच्छदादि-गतेषु वैरस्यातिशयो दृश्यते। स न स्यात् नकिञ्चिद्रूपस्य अभा-वस्य विशेषायोगात्। अनेन अर्थक्रियायोगादपि सत्त्वं ब्रुवाणः कृतोत्तरो मन्तव्यः। भावो हि तत्र अर्थक्रियां न करोति,–इती-यति उक्ते स मा नाम तां कार्षीत्, दुःख तु कुतः। तदर्थक्रिया-भावादिति चेत्, तस्य अस्य सूक्तस्य स्मरामः

'तथापि स्वार्थान्धे निरवधिकर्मान्ध्यं[4] विजयते।'

इति[5]। तस्मादभावोऽपि वस्त्वेव। तथाच जनकतया प्रति-कर्मव्यवस्थावादिनामपि योगिज्ञानमतीतानागतविषयं यदुच्यते, तत्र ते विचित्राः प्रागभावाः प्रध्वसाभावाश्च जनकत्वेन मन्तव्याः–घटप्रध्वंस इतः प्रभृति उत्पन्नः, अयं पटप्रागभाव एतदवधिर्भविष्यति–इति। अर्वाग्दृशां हि ते भावाः प्रतियोगि-

---

१ 'घटेनेति' ग। २ 'घटस्तु' ग। ३ 'किं' ख। ४ 'निरवधि साक्ष्य' ग। ५ 'इति' ग.।

समुल्लेखमन्तरेण विचित्रा न भान्ति निर्गुण इव प्रथमक्षणे द्रव्यम्। सर्वज्ञानां तु यत् यत् निजेन रूपेण समस्ति, तत् तत् विज्ञानेन स्वजन्येन अन्यजन्येन वा अवभासते,—इति न अत्यन्ताद्भुतम्। अस्मन्मते तु प्रकाशनमात्रसारत्वं भावानां रूपमिति नीलसुखादेरेव न—इत्यमुना रूपेण प्रकाशनादभावात्मकमपि रूपं न नास्ति। नहि नियतं किञ्चिदस्य वपुः, अत एव

'एकैकत्रापि षट्त्रिंशदात्मता·········।'

इति उक्तम्। तदयं भावः आ वाह्यात् रूपात् सर्वरूपतां स्वीकुर्वाणः शून्यातिशून्यदशायामुपलीय संविद्रूपशिवात्मना प्रथते इति विततास्यैव। तदयं अभावाभासोऽपि पारमार्थिक एव। ननु एवं भावा एते स्युः, सत्यं स्युर्यदि भवद्रूपेण आभासेरन्। घटो न भवतीत्यादिवपुषा तु *निर्भासमाना* यदि भावाः, तर्हि नीलमपि निर्भासमानं किं न पीतं भवेत्। तस्मादभावा अपि विषया एव, केवलं घटइतिविधिरूपता प्रकाशं प्रति अनुलोमतया वर्तते,—इति भावाः सन्ति प्रकाशन्ते इति तेषां सत्ता उच्यते। घटो न भवति न प्रकाशते इति प्रकाशं प्रति अनानुलोम्यमाविष्करोति अभावः। नच अस्य तदस्ति प्रकाश एव विश्रमणादिति नवर्थात्मा अयं संविद्विलासेन आविर्भावितो न किञ्चिदिति निरूपितः इति आस्तां तावत्। शशविषाणशब्देन अपि अभावशब्दः संवन्धनीयः। शशविषाणं न भवति,—इत्येवंभूतो हि अत्यन्ताभावः, न भवतीत्येतद्रूपायोगे तु घटः पटः इतिवत् साङ्कल्पिकमेव शशविषाणं, नतु अभावः। '**ते तु**' इति अभावाः '**स्फुरन्ति**' इति प्रत्यवमर्शसारनिश्चयात्मना। एतच्च संसारिजनं प्रतीतिप्राचुर्यं च अपेक्ष्य उच्यते। तत्रैव हि देशे प्राक्प्रध्वंसात्यन्ताभावसहस्राणि न सर्वदा विमृ-

ड्यमानतया भान्ति, तथाभासनमेव सत्त्वम्। अथवा **'ते तु'** इति उभयेऽपि भावाभावाः प्रत्यवमृश्यन्ते। अभावा अपि हि भाववदेव एकगोचरत्वेऽपि क्रमिसर्वज्ञादिप्रमातृगोचरा एव। अत्र व्याख्याने तुशब्दो न समर्थितः समर्थितश्च। यो हि सौगतमुभयमविशिष्टं न इच्छति, तस्य एष विशेषो द्योतितः। यदि मन्यते–निश्चयात्मकप्रत्यवमर्शाभिधाने विकल्पमात्रसारोऽयमभावः–इति, तर्हि भावोऽपि एवमेवेति। एतदुपसहरति **'तत्'** इति तस्मात्। **'बाह्याभावेऽपि'** इति विच्छेदेन यत् बाह्यत्वं तदभावेऽपि। तदाच नीलं सुखमित्यमुना रूपेण भासनमस्ति एव। नहि उपरञ्जके नीले राजनि वा असिद्धके किञ्चिदुत्पलाभासस्य नराभासस्य वा। इदमिदानीमनेन जनितं नील सुखं वा,–इति आभासवर्गमेलनमदः। तदन्योन्यवियोगेऽपि न किञ्चिदाभासानां स्वरूपतो वृत्तमिति आभासात्मना सदा सन्तः पदार्थाः, आभासमात्रत्वं च अत्र तदवस्थौचित्यमिति मन्तव्य, नतु अहन्ताशेषत्वं, तथा सति हि **'यावत्संस्कारानुवृत्ति'** इति न ब्रूयात्। सार्वकालिकं हि तत्। **'ग्राह्यतया'** इति आवरकतामसाचभासापसारणादिति भावः। **'अन्येषां तु'** इति स्वर्तव्यव्यतिरेकिणां मनोराज्यविकल्पादौ प्रमातुर्भेदेन स्फुरतामपि बहीरूपता लोके सिद्धेति शेषः। कुतः इति चेत्, आह हेतुत्रय **'प्रसिद्ध'** इत्यादि। यद्यपि सुखादिक गवादयः कुर्वते एव, तथापि तृप्तिपित्तशमनाद्यर्थक्रियान्तरपरम्परानुबन्धि देहादिकार्यमन्यगव्यादिप्रसिद्धेन विदधति। सुखादीनां तु प्रकाशमात्रैरूपैव[2] अर्थक्रिया। ननु च आभासा विषयाः, यतो ग्राह्याः, तत् कथं तेषा वृत्तौ बहुव्रीहिणा

---

१ 'तावत्' ख.। २ 'मात्रे रूपैव' ग।

विषयित्वं दर्शितम्। तत्र आह '**मनोग्राह्याणाम्**' इति। ते हि बोधलग्ना बोधप्रतिबिम्बिता आकाराः, ततो भेदेन अपि भान्तो न बोधात् तत्त्वतोऽन्ये इति प्रमाणतया विषयित्वमेषां न उचितम्, किन्तु निजनिजरूपे बाह्याकारे नीलाभासस्य नील इव। यद्वक्ष्यते

'········सोऽपि स्वाभासोऽभिनवोदयः ।' (२।३।१)

इति, अन्यत्रापि

'भाव्यं तेनात्मना····················· ।'

इति । संस्कारचित्रे प्रमातरि तु अहन्तैकरसाः सन्तु सर्वत्र सर्वे विषयिणः

'···············नीलाभासमयोऽपिच ।
प्रमाता पीतहरितादि न न विषयं प्रति ।
विकल्पयन्नप्येकार्थं यतोऽन्यदपि पश्यति ॥'

इतिन्यायेन । ततोऽत्र अहन्तामयत्वं संस्कारपुञ्ज····विकल्प्य-नीलाभासः शुद्धविमृश्यपीताभासः पीतोऽर्थ इति पञ्च आभास-दशाः । '**अत्र**' इति वृत्तौ । अपेक्षामेव लौकिकप्रसिद्धिरूपां दर्शयति '**ततो हि**' इति। आदिपदेन प्रसिद्धिकारणं प्रमात्रन्तर-साधारण्यं च संगृहीतम् । '**संस्कार**' इति तमसाच्छादिताः । '**सर्वथा**' इति ते पृथगपि न वेद्या येन प्रमातुर्बहिर्भूता भवेयुः,इद-मित्यंशेन बाह्या एव, तथैव सर्वकालानुवृत्तिरेषां, अहन्तामात्रत्वे तु न कालकलना, नापि संस्कारता काचित् । ननु एवं स्वतन्त्रतया विकल्प्यमानेभ्यः स्मर्यमाणानां को भेदः। उच्यते '**ग्राह्यतया**' इति ····शेषाय, तेषां हि पूर्वकाल एव प्रमातृसाधारण्यादि त्रय-मवसीयते,—इति तदातनं बाह्यत्वं न न स्फुरति । '**भ्रान्तिरू-पाणां तु**' इति द्विचन्द्ररजतादीनाम्, तेषां तु बाह्यतावसाये

१ 'उचितं' ख. । २ 'भाव्यन्ते' ग. ।

सत्येव न वाह्यता, मनोराज्यादौ तु सा नास्त्येव,—इति विशेषः। **'उभयथा'** इति ग्राह्यतया वाह्यतया च। एतत् सङ्क्षेपेण आह **'तदेवम्'** इति। आन्तरत्वं द्विधा अहन्तया संस्कारतया, च, ग्राह्यत्वं द्विधा प्रमाणतया नीले प्रमेय एव नीलाभासस्य प्रमेयतयैव स्वतन्त्रविकल्पे। वाह्यत्व सत्यासत्यत्वेन कालभेदेन च षोढा, एतच्चतुष्टयं पूर्वाव्यभिचारि उत्तरोत्तरकं मन्तव्यम्। **'स्वरूपमेव च'** इति आन्तरत्वं, तत् हि प्रकाशाव्यतिरेकित्वं प्रकाशमानत्वमविकल्पितं भावानां रूपम्। **'तच्च'** इति आन्तरं स्वरूपं यथायोगं ग्राह्यतया ग्राह्यत्ववाह्यत्वाभ्या च यदा अवच्छिन्नमुपरक्त भवति, तदा अय भेदः। कोऽसौ। आह—भ्रान्तिस्वतन्त्रविकल्पनादौ ग्राह्यं भवति, न वाह्यम्। **'तत्कालैनैव योगात्'** इति असाधारण्यादिहेतुत्रयोपलक्षणमेतत्। स्मरणे आदिपदात् सुखादिगाटसङ्कल्पे च वाह्यता अपि अस्ति स्मृतौ स्वकाल इव साधारण्यादिसंभवात् सुखादेश्च तावतैव प्रकाशमात्रेण स्फुटेन वाह्यत्वात्। **'प्रत्यक्षे च'** इति नीलादौ। तत्र हि साधारण्यादिहेतुद्वयमस्त्येव। **'तत्'** इति स्वरूपम्। **'कालानवच्छेदात्'** इति सार्वकालिकत्वादकालकलितत्वाच्चेत्यर्थः। **'तथैव तत्'** इति स्वरूपतयैव अनुपहृतया शुद्धया तत्स्वरूप वर्तते इत्यर्थः। एवं वाह्यत्वेन प्रमेयता, ग्राह्यत्वेन प्रमाणतयापि संस्कारतया आन्तरत्वे प्रमातृता मायीया, अहन्तया शुद्धया आन्तरत्वे परमेश्वरता, ततस्तथैव प्रसरः इत्येवमाभासात्मकविश्वशरीरं सवेदनम्। तत्र बुद्धिपदे तमसाच्छादितत्वेन अवस्थान तस्य आन्तरत्वम्, यस्य उत्तरकालं स्फुटतया स्मरण भविष्यति प्रकृतिपदे, यस्य इदमित्येव अस्फुटतया मायापदे, यस्य तया

१ 'सद्भावात्' ग.।

विनापितु संस्कारपरिपाके सति कालान्तरव्यवधिना वृत्तिला-भात्, मन्त्रादिभूमौ तु सदाशिवान्तायामहन्तासामानाधिकरण्येन समविषमताविचित्रेण,श्रीशिवभट्टारकपदे तु अहन्तैकनिमग्नत्वेन,—इति आन्तरस्य विशेषा वक्ष्यन्ते आगमाधिकारे । ते तु इह सूचिताः **'तत्पदे'** इति **'तथैव'** इति च सामान्योक्त्या । एवं भेदान् विचार्य प्रकृतमुपसंहरति **'तदेवम्'** इति **'शङ्कनीयः'** इति ननु असावस्ति अनिषेध्यत्वात् स्वरूपस्येति भावः । अत्र परो बाह्यत्वं न उपाधिः, अपितु स्वरूपमेव,—इति उपपादयितु-मुपक्रमते **'ननु'** इति । असत्तावैपरीत्येन सत्ता उपपादनीयेति दर्शयति **'प्रख्या'** इति । **'तच्च'** इति प्रख्यादिविषयत्वम् । **'सर्वे-षाम्'** इति, ननु बाह्यानामेवेति आकूतम् । ननु एवं कथं बाह्य एव घटे लोकस्य सत्त्वव्यवहारः, न आन्तरग्राह्ययोः संस्कार-विकल्पात्मनोः । अत्र आह **'बाह्यता च'** इति । **'अत एव'** इति यतो लोकस्य अर्थक्रियापरम्परानुबन्धिकार्यविशेषकारि-त्वमेव सत्त्वमिति संमतम्, पुत्रेऽपि अकार्यकृति अपुत्रव्यव-हारस्य अवास्तवस्य अपि प्रवर्तनादन्यैरङ्गीकरणाच्च । ततो हेतो-रभावाभासो यो घटादेः, स लौकिकोदकाहरणादिकारिबाह्ये-न्द्रियसंवेद्यरूपनिषेधस्ततो बाह्यो घटो न भवति,—इत्यनेन रूपेण स घटाभास एव घटस्य अभावः इति उक्तः । ननु अस्ति एवं प्राक्प्रध्वंसेतरेतराभावेषु निषेध्यभावात्, अत्यन्ताभावे तु कथम् । तत्र अपि संभवत्येव अयं प्रकारः इति वक्तुं क्रमेण अत्यन्ताभावा-नुदाहरति **'शशविषाणादेः'** इत्यादिना । अत्र हि खपुष्पा-दिविलक्षणं बुद्धौ शशविषाणं भात्येव । उदाहरणान्तरमाह **'बाह्यत्व'** इत्यादि । **'सत्ता स्यादेव'** इति तत्र अपि शुद्धमिव

१ 'रपाके' ग. । २ 'अत्यनिषे' ख. ।

पर्यन्ते संवेदनमहमिति यत्, तदेव विकल्प्यमानतया समस्तभेदावभासनात्मकसृष्टिमूलभूतं भावव्यतिरिक्तं मायया पृथक् सृष्टं सर्वात्मना ग्राह्यादिभी रूपैरभावः इत्येवं बुद्धौ विकल्प्यतां प्रतिपद्यते एव । **'अत एव'** इति यतः प्रख्योपाख्यायोनित्योपयोगि पारमार्थिकमान्तरं रूपं सर्वात्मना निषेद्धुं न शक्यम् । अन्यमुदाहरति **'पष्ठेऽपि'** इति । **'कथञ्चित्'** इति यथा पञ्चभ्योऽक्षेभ्यो व्यतिरिक्तं षष्ठमिन्द्रियं मनः, तथा शब्दादिबाह्यविषयपञ्चकातिरिक्तो बाह्यः षष्ठो विकल्पः । अत एव **'रूपमिति'** इति स्पर्शगन्धरसशब्दातिरिक्तं किमपि अस्तीति। अत एव आगमे भाव एव अयमभाव इति दर्शितं

'योऽशून्यः शून्य इत्युक्तः·············· ।'

इत्यादिना ॥ ५ ॥

ननु एषामबान्तरान्तरत्वग्राह्यत्वबाह्यत्वावस्थासु स्वसमुचिता काचिदर्थक्रिया दृश्यते भावानां स्मृतिहर्षालिङ्गनादिका इव कान्ताभासस्य, प्रमातृतादात्म्यलक्षणे पुनरान्तरत्वे केव अर्थक्रिया । अत्र उत्तरमाह सूत्रेण

आन्तरत्वात्प्रमात्रैक्ये नैषां भेदनिबन्धना ।
अर्थक्रियापि बाह्यत्वे सा भिन्नाभासभेदतः ॥ ६ ॥

प्रमात्रैक्यनिमित्तकं यदान्तरत्वं, ततो हेतोरेषां भावानां न काचिदर्थक्रिया। सा हि प्रमातुरन्योन्यतश्च भेदे सति भवन्ती कारणविरुद्धे तस्मादभेदे सति कथं स्यात् । तैथाहि सा अर्थक्रिया नियतैव आभासविशेषे । बाह्यापि हि कान्ता न हर्षाय आलिङ्ग्यमानताद्याभासान्तरसंभेदवन्ध्यतायामाभासनिष्ठत्वादेव च अर्थक्रियायाः, आभास एव वस्तु,—इति परस्यापि युक्तमुप-

१ 'तथापि' ख. ।

गन्तुम्, न मृदः संस्थानं, न कुलालात् मृद्रूपता,—इति अन्वयव्यतिरेकसिद्धं कार्यकारणभावसाचक्षाणानामाभासानामाभासा एव वस्तुतया उपगम्याः कल्पितव्यावृत्तिनिष्ठत्वादन्वयव्यतिरेकयोरिति अलमवान्तरेण। **'तदा च'** इति संसारिणामन्तरवस्थाने। परमेशस्य च संसारिणामन्तरवस्थाने निदर्शनद्वारेण हेतुर्दर्शितः **'मायाप्रमातरि'** इत्यादिना। तत्र भगवद्दशायां तदैक्यात् तस्य यत् सर्वकर्तृत्वं, तदेव तेषां; मायाप्रमातृतासंस्काररूपतावस्थितौ तु मायाप्रमातुर्यावत्कर्तव्यं, तावदेव सर्वमिति उच्यते। तावत्संस्कारवैचित्र्यचित्रितो हि ब्रह्मादिक्रिमिपर्यन्तः प्रमाता तावत्संस्कारोचितमेव विचित्रं चेष्टते। **'स्वस्मात्'** इति आत्मनः प्रमातुः। कार्यादभिन्नं सत् यत् कारणमुच्यते, तदेव आत्मा स्वभावो येषाम्। एवं भेदनिबन्धदर्शनापि अर्थक्रिया या शङ्किता, सा न भवति भेदाभाववत्यामान्तरदशायामित्येवमपिशब्दं व्याख्याय **'अपि बाह्यत्वे सा भिन्ना'** इति व्याचष्टे **'यदापि'** इति **'सति तस्याः'** इति च अर्थक्रियापरामर्शः। चो भिन्नक्रमः। न केवलं ग्राह्यत्वबाह्यत्वादिना आभासस्य भेदः, यावत् देशादिभिरपि। देशमुदाहरति **'देश'** इत्यादिना, कालं **'स्मृतौ'** इत्यादिना। अत्र विद्यमान एव बाह्ये इति मन्तव्यम्। कालस्यैव उक्तस्य अतीतस्य व्यतिरेकमुदाहरन् वर्तमानकालस्य अर्थक्रियान्तरेण अन्वयं दर्शयति, तत्रैवच आकारभेदमपि उपक्षिप्तमुदाहरति **'स्फुटावभासः'** इत्युक्त्या। आभासभेदस्य अभावाशङ्कया अभावसंभावनया परस्य या विमतिरस्ति, सा रूपादावुक्ते न अवतरतीति तदुपादानम्। ननु आशङ्कामात्रं तत् कस्मात् सुखादीनामाभासभेदाभावः इति, वस्तु एव इदं न कस्मात्, तेषां हि बुद्धिमात्रं प्रति विप-

यता, न बाह्यार्थं प्रति; तत् कथं स्फुटास्फुटादिभेदः । एतदाशङ्क्य प्रतिसमाधत्ते '**तेषामपितु**' इति । '**तथैव**' इति भेदेनेत्यर्थः ॥ ६ ॥

अत्र यदि कश्चित् ब्रूयात् बाह्यत्वाभासेन भावस्य उपाधीयमानस्य तत् विरुद्धमान्तरत्वं कथं स्यात्, तत् कथमुक्तं

'··· सत्ता ततस्तेषामान्तराणां सतां सदा ।' (१।८।५)

इति; तदा असौ प्रत्याय्यते सूत्रेण

चिन्मयत्वेऽवभासानामन्तरेव स्थितिः सदा ।
माययाभासमानानां बाह्यत्वाद्बहिरप्यसौ ॥ ७ ॥

नीलं भासते इति पूर्वसृष्टस्य अस्य भासनं न स्वरूपमपितु ज्ञानमेव, तच्च ज्ञातरीति आभासनद्वारेण अर्थानामान्तरता,—इति तात्पर्यम् । '**सदा**' इति बाह्यत्वोन्मुखताभासे, तदभावे च आभासानामन्तरेव स्थितिर्यतश्च चिन्मया एते नीलप्रकाशादिरूपाः, अन्यथाहि न प्रकाशेरन् विच्छेदावभासने । स्वातन्त्र्यलक्षणया तु मायाशक्त्या बाह्यत्वं यदेषामाभास्यते, तदाभासनात्मकं ज्ञानरूपमालम्ब्य या स्थितिरर्थतया, सा बहिरपि अन्तरपि । तदन्तरवभासोऽयं बहिरवभासनात्मविज्ञानचित्रस्य प्रत्युत भित्तिकल्पः कथं विरुद्धः स्यात् नीलत्वमिव अक्षणिकरूपमपि क्षणिकत्वस्य । अत्र हि कल्पितव्यावृत्तिमात्रतः कल्पितान्योन्यपरिहारो न पारमार्थिक इति सूत्रार्थः । '**आन्तरत्व**' इति विरोधसंभावनास्पदमिति आकूतम् । '**अनुभव**' इति बाह्या इव सत्कारात्मानोऽपितु उपाहृता आन्तरा एव बोद्धृमया एव अन्यथा निःस्वरूपत्वापत्तिरेषामिति हि उक्तम् । '**अर्थाः**' इति प्रमेयरूपत्वेन अर्थ्यमाना भवन्तीति यावत् । '**आभासोऽपि**'.

१ 'उपधीयमानस्य' ग ।

इति प्रमात्रभेदसारोऽपि वस्तुतस्तदर्थभेदोपरागात् भेदमिव प्रतिपद्यमानः प्रमातुर्धर्मो ज्ञानं बोध इति व्यवह्रियते। आभासनं यत् विच्छिद्यते तस्य व्यापारभागो यः, स ज्ञानमिति विभक्तः; यस्तु सिद्धताभागः, स किं जायते इत्याह **'भेदाभासाः'** इति। चकारेण ज्ञानता अर्थता च युगपदुन्मिषति,—इत्याह **'तेषाम्'** इति ये पूर्वं प्रमातरि अभेदेन पृथक् न केचिदाभासिषत, तेषां नीलादीनां स्वोपाधिभूतानामाभासादेव वस्तुतोऽस्वतन्त्राणामपि ते नीलाद्याभासा अभिमानमात्रसारं स्वातन्त्र्यमापादयन्ति उत्थापयन्ति उपगमयन्ति च। तथाहि व्यवहरति—बहिर्येदिदं नीलं, तदेव आभासते इति। तत एव सौगतैरपि

'सारूप्यस्य सारूप्यता अनुमानादेव अन्यथानुपपत्तिवशेन स्थाप्यते, नतु प्रत्यक्षेण, नीलं ज्ञानमत्तः सारूप्यरूपतया भाति।' इति उक्तम्। जैमिनीयाश्च प्रकटतां तत एव अर्थधर्ममाहुः। **'अत एव'** इति यतोऽभिमानमात्रसारं मायीयमाभासते स्वातन्त्र्यमेषां नीलादीनाम्, ततो वृत्तौ पारतन्त्र्यमेषां निरूपितम्, स्वातन्त्र्यं तु न स्पृष्टमिति दर्शयति **'अन्तर्नीत'** इति स्वतन्त्रस्यैव हि प्रधानक्रियायां तन्निष्ठविघ्नसंभावनानिरासोपयोगिप्रैषादिक्रियान्तरविषयं पारतन्त्र्यं विषयेऽपि प्रसरतीव मुख्यक्रियारूपे, नतु परमार्थतः प्रधानक्रियायामसंभवत्स्वातन्त्र्यः प्रैषादिभिरभिसंबध्येत। ननु सूत्रानुसारेण वृत्तौ 'आभास्यमानेषु' इति वक्तव्ये **'प्रकाशमानेषु'** इति का वाचोयुक्तिः। आह **'प्रकाशशब्देन'** इति। आभासनं न प्रकाशरूपादधिकं किञ्चिदिति अनेन प्रकाशनक्रियाभिधायिधातुप्रकृतिकेन स्पष्टीकृतमिति तात्पर्यम्। ननु स्वतन्त्रविकल्पेषु अपि नीलादयो विच्छेदेन प्रकाशन्ते,

तत्रापि च मायाशक्तिव्यापारः, वस्तुतश्च चिन्मात्रत्वं समर्थनीयं, प्रत्युत तत्परिवर्जनं किमर्थं कृतं वृत्तौ प्रत्यक्षपदेन,–इति हृदये गृहीत्वा निरूपयति **'स्वतन्त्र'** इति प्रकाशने संभवतीति सप्तमीपाठः स्पष्टः। **'प्रकाशनम्'** इति तु **'संभवति'**इत्यत्रैव च्छेदः, **'तथापि'** इति च उत्तरवाक्यशेषाध्याहारः । प्रत्यक्षीकृतानां नीलादीनामप्रसिद्धं यत् आन्तरत्वं, ततो **'मुख्यतया'** इति प्रयत्नेन तेषामेव तत् साध्यं, न तु अयत्नसिद्धसंवित्तादात्म्यानां विकल्पाभासानाम् । एतदेव दर्शयति **'विकल्पेषु पुनः'** इति । **'केऽपि'** इति ये इयत्तारूपमेव विकल्प्यमिच्छन्ति, न बाह्यं, नापि अनन्तर्बहीरूपम् । **'अभिनिवेश'** इति आन्तरत्वसाधनायेति शेषः। **'साधयिष्यते'** इति यत् एषामान्तरत्वं प्रसिद्धं, ततो बाह्यता प्रत्युत प्रयत्नेन साधयिष्यते

'विकल्पे योऽयमुल्लेख ··············।' (१।८।८)

इति सूत्रेण। **'अथवा'** इति पूर्वत्र व्याख्याने बाह्येन्द्रियसाक्षात्कारविषय एव आभासः प्रत्यक्षशब्देन उक्तः, अत्र तु सर्व एव अन्तर्बहिष्करणगोचरा आभासा निजनिजेन वपुषा साक्षादेव अवभासमाना नवनवरूपाश्च यथायथं प्रत्यक्षा एव,–इति प्रत्यक्षत्वस्य अव्यभिचारेऽपि यः केषांचिदसत्यतां तत एव अप्रत्यक्षतां मन्यते, तस्य व्यामोहक्रियैव प्रत्यक्षशब्देन दर्शिता। ननु आभासमात्रमेव प्रकाश्यमानानां रूपं, तत् ते कथं भेदमर्हंयुर्येन सप्तम्या निर्दिष्टा,–इत्याशङ्कां परिहरति **'चिन्मयस्य'** इति। **'भेदेन'** इति व्यापाररूपतोद्रेचनेन भावविषयेण आभासव्यापार इति यावत्। ननु एवमाभास आन्तर एव युक्तः, तत् कथं वृत्तिः **'बहिराभासः'** इति। अत्र आह **'नीलादीनाम्'** इति

१ 'आभास' क. ।

तन्निष्ठोऽसावाभासस्तथा उच्यते। '**विच्छेदात्**' इति मायाग्राहकापेक्षात्। एतदेव हेतुना स्पष्टयति '**वस्तुस्थित्या**' इति। '**तेषाम्**' इति प्रकाशाव्यतिरेकभाजामपि '**अवसायात्**' इति मायाशक्तिकृतात् मायाप्रमातृमुख्यव्यापारात्मकापोहनपरमार्थादभिमानमात्रात् ग्रहणं, न तु प्रकाशव्यतिरिक्ततया ततोऽवसायबलात्। अध्यर्थ्यते इति, विशेषेण सिन्वन्ति वध्नन्ति हृदयमिति, प्रमीयन्ते इति, आलम्ब्यन्ते इत्यादिनिर्वचनयोगादर्थादिशब्दैर्व्यपदिश्यन्ते। अपिशब्दं व्याख्यातुं या वृत्तिः '**तदपि**' इत्यादिका, तां व्याख्यातुमाह '**प्रत्यक्षत्वेऽपि**' इति। अप्यर्थः परस्परापेक्षया निर्वहति,—इत्याशयेन बाह्यताव्यवहारमनुवदन्नन्तःस्थिततामाचष्टे, तदनुवादेऽपिच प्रत्यक्षतया प्रकाशाभेदेन प्रकाशमानत्वमवान्तरानुवादेन आह। उभयत्रापि च पूर्वोक्तहेतूपजीवनं '**तदेवम्**' इत्यनेन करोतीति योजना। '**नीलादिसंलग्नः**' इति मायाग्रहणेन तथाभासमानो बोधो विवेकोदये तन्मय एवेत्यर्थः। '**समर्थितम्**' इति अर्थभेदेन ज्ञानरूपतायां भेदप्राधान्यात् युक्तं बहुवचनमिति मन्यते। ननु आभासनद्वारेण अर्था अन्तःस्थिताश्चेत्, तदा गञ्जगृहमिव नीलादिभावसहस्रसङ्कुलं हृदयमुपलभ्यते, किमुच्यते उपलभ्येत यावता उपलभ्यते एवेत्याह '**अन्तःसताम्**' इति। अशेष एव हि विश्वावभासस्तदा अहमिति अविशेषेण एकात्मतामुपगतो भाति। ननु बाह्यतावसरे तर्हि नीलतादिविचित्रभावः कुतः। इत इत्याह '**बहिष्क्रिया**' इति। '**यत्**' इति प्रथनं परामृश्यते, कर्तृवाचिनि अपि आख्याते क्रियाया एव प्राधान्यात् यत् तथा प्रथनं तेषां, तदेव कर्मनिष्ठं बहिष्क्रियमाणत्वमिति यावत्। '**चिन्म-**

१ 'तन्निर्दिष्टः' ग.। २ 'प्रकाशयाव्यति' ग.।

**यस्य'** इति प्रकाशैकरूपस्य अर्थस्य इयमेव नीलादिरूपता परस्परविविक्ताकारता या ग्राहकात् भिन्नता। अत्रैव प्रसङ्गात् **'सिसृक्षादौ'** इत्यपि विमृशति। एतस्य उक्तस्य प्रमेयस्य हेतुरूपतया उपजीवनाय **'अत एव'** इति। ननु एवं प्रकाशतायां यदि अधिका नीलता, सा तर्हि अप्रकाशरूपा, न चेत्, का नीलता नाम, अत्र स्वसिद्धेनैव दृष्टान्तेन परं प्रत्याययति **'प्रकाशस्य'** इति। **'ते'** इति नीलादयः। दृष्टान्तमेव व्याचष्टे **'परमाणु'** इत्यादिना। **'येषाम्'** इति वैभाषिकसौत्रान्तिकानाम्। **'ततः'** इति परमाणुसञ्चयात्। **'अर्थे'** इति सन्निवेशो घटशरावादेरर्थस्य भेदमवभासयति, ततः परमाणवस्तथाभासमानाः सन्ति अवभासे सन्निवेशधर्माणः प्रतीयन्ते,—इति प्रतिभासधर्मतया उक्तो वैभाषिकैः। काणादमते तु यद्यपि महत्त्वपरिमाणातिरिक्तो न कश्चिदर्थधर्मः सन्निवेशो दिग्भेदस्य अपारमार्थिकस्य औपाधिकत्वेन अन्योन्याश्रयचक्रकानवस्थोपहतस्य सन्निवेशोत्थापकत्वायोगात्, तथापि अवयविद्रव्यं तथाभूतमेव जातमित्येतावानस्ति पलायनप्रकारः इत्याशयेन परमाणुपुञ्जवादी न उपन्यस्तः। येऽपि सौत्रान्तिका विज्ञानाकारे प्रतिभासात्मनि निविष्टं सन्निवेशधर्ममाहुः, तेषां स प्रतिभासस्यैव धर्मः, नतु सप्रतिभासे अर्थे असौ कश्चित् यतः

'एकसंवेदनवादात्म्यबलादनन्यभागशक्यदर्शनः।'

इति नयेन परमाणुपृथक्त्वावभासने सन्तानवैकल्यात् प्रतिभास एव विततं इति युक्तम्। एतदाह **'प्रतिभास'** इति। प्रतिभासो हि चिद्रूपादनधिक इति चिन्मय एव। ननु असौ भ्रान्तो वा सांवृतो वा,—इत्याशङ्क्य उभयमपि निराकरोति **'न चापि'**

१ 'सद्गता' ग।

इति । प्रतिभासस्य यो धर्मः, स न भ्रान्तो; न सांवृतो यतः प्रतिभासश्चिद्रूपः, संविच्च अभ्रान्ता, स च आकारस्तत्तादात्म्येनैव सन् विद्यमानः । यो यदात्मा, स तत्परमार्थत्वे न भ्रान्तादिरूपो घट इव लौहित्यम्, तथाच संविदात्मा सन्निवेशः। भ्रान्तादिरूपस्य यत् विरुद्धं, तेन तत् व्याप्तं परमार्थतादात्म्यं नाम; अपरथा तादात्म्यमेव हीयते, तस्य अत्र उपलब्ध्या व्यापकविरुद्धं भ्रान्तादिरूपं निषिध्यते । यदिवा **'असन्'** इति विशेषेण त्रयं निषिध्यते। एतदेव प्रसिद्धेन निदर्शनेन स्फुटयति **'स्वच्छ'** इत्यादिना । योऽप्यर्थे । जडानामपि स्वच्छतामहिम्ना एवमुपपद्यते, किमुत संवेदनरूपस्य स्वतन्त्रस्य,-इत्याशयः । **'व्याख्यातम्'** इति अत्र अस्य व्याख्यानावसरं प्रतिदर्शयितुमेवमुक्तम् ॥ ७ ॥

ननु उक्तम्

'आन्तरत्वात् प्रमात्रैक्ये नैषां भेदनिबन्धना ।
अर्थक्रिया······················॥' (१।८।६)

इति । तत्र विकल्पितस्य गरुडपिशाचादेर्बाह्येन्द्रियवेद्यसाधारणरूपाभावादबाह्यस्य कथमिव विषशमनसन्त्रासप्रभृत्यर्थक्रियाविशेषावेशः इत्याशङ्क्य सूत्रं

**विकल्पे योऽयमुल्लेखः सोऽपि बाह्यः पृथक्प्रथः ।**
**प्रमात्रैकात्म्यमान्तर्यं ततो भेदोऽपि बाह्यता ॥ ८ ॥**

स्वतन्त्रे अनुभवोपजीविनि वा 'विकल्पे य उल्लेखः' उत्प्रेक्षया लिख्यमान आकारः 'सोऽपि बाह्य' एव, न केवलं बाह्येन्द्रियगम्य एव बाह्यः। तथाहि[1] स प्रमातृरूपात् व्यतिरिक्त एव भाति अयमिति इदन्तया । ननु ततः किम्। आह 'ततः' प्रमात्रैक्यात्

१ 'तथापि' ख.।

स्थितादपि अनन्तर यो भेदोऽवभासते ततः इति वा प्रमातुरेव सोऽवभासमानो 'भेदो' बाह्य उच्यते । आन्तरत्वविपरीततैव बाह्यत्वं, आन्तरत्वं च प्रमात्रा सह ऐक्यम्। अन्तरिति अहङ्कारास्पदं स्वैकसंमुखरूपमुच्यते, तत्र भवमान्तर्यं, तद्विपरीततैव बाह्यता। सा च दृश्ये च विकल्प्ये च अर्थे सुखादौ साधारण्येनेति सूत्रार्थः। तमवतारयति **'विकल्पावभासमानानाम्'** इत्यादिना। अत्र आशङ्कयैव अवतरणं कृतं, नतु सक्षिप्य सूत्रार्थ उक्तो विस्पष्टत्वात्। **'उपपन्नम्'** इति अनुयन्त्र्यर्थक्रियार्थिसकललोकापेक्षयेति आकूतम्। **'तत्र'** इति च्छेदः। **'अनुभूयते'** इति परेण ग्रन्थेन संबध्यते। प्राच्यचक्षुरादिव्यापारबलेन बहिष्करणवेद्यतया बाह्यत्वं समर्थितमपि न सार्वत्रिकमिति दर्शयति **'एवंहि'** इति। **'अहंविमर्शः'** इत्युक्तिं शोधयति **'शरीर'** इत्यादिना। **'बाह्यता'** इति बाह्यताया अभावमात्रतात्पर्येण आन्तरव्यवहारहेतुता शुद्धचित्तत्त्वे अहंविमर्शस्य **'बाह्यत्वमेव'** इति। एवकारेण पूर्णैव अत्र बाह्यता,-इत्याह। **'तस्यापि'** इति शरीरस्य। **'व्यवह्रियते'** इति अहं गौरो घटं पश्यामीति। **'अन्तः'** इति बुभुक्षात्कृत्यादावान्तरेण स्पर्शेन तथा बाह्यता यथा आन्तरत्व व्यवह्रियते। बुद्ध्यादौ ग्राह्यत्वादिदन्ताविमर्शविषयेऽपि आन्तरत्वम्। अत्र हेतुः **'प्रमातृव्यापारमयत्वात्'** इति। तत्र अपि प्रमातृत्वादिर्हेतुः। द्वितीयो हेतुः **'बाह्यप्रतियोगित्वात्'** इति। अत्र हेतुः **'परिमितत्वेन'** इति। ननु बुद्धिर्निश्चयनलक्षणा ज्ञानशक्तेः प्रसरः, प्राणोऽपि प्राणनात्मा क्रियाशक्तेः, इच्छाशक्तिरुभयत्रापि जीवितम्; तदेतत् शक्तित्रयं शक्तिमतो न भिन्नं शक्तित्वादेव, तत् कथं प्रमातृव्यापारमयत्वहेतुना परिमितत्वेनेति

न विरुध्यते। अत्र उच्यते–परिमिते हि निश्चयनव्यापारो हि प्रादेशिकसुखदुःखमोहनीलपीतादिविषयसङ्कुचित एव, प्राणना क्रियाशक्तिरपि च अर्धचतुर्थहस्ततत्परिमाणशरीरक्रियानिबन्धन- भूतदिग्भेदगमनोपकल्पितप्राणादिपञ्चकविभागयोगिपवनविषया प्रेरणारूपा,–इति ज्ञानक्रियाशक्तिरूपत्वेऽपि पारिमित्यमनयोः। 'अत एव' इति यतो विषयकृत एव अनयोः संकोचः, ततस्तत्सङ्कोचमनादृत्य ये वर्तन्ते तत्र अहंभावं न गृह्णन्ति, यतो बाह्यं शरीरादि यत् प्राणापानप्रमुखभेदस्य वायोः सङ्कोचकम्, बाह्यं च देशादि यत् भित्तिपर्वतादिसंवित्प्रसरस्य सङ्कोचक- मुपधानं, तत् न आद्रियन्ते; ततो हेतोः प्राणापानसुखदुःखशरी- राद्यस्तेषां घटादिपदे वा अवभान्तः प्रकाशपरमार्थास्तेषां संविदो विश्वावभासतामेव पूरयन्ति। तत एव उक्तमागमे

'निर्वृक्षगिरिभित्त्यादिदेशे दृष्टिं विनिक्षिपेत्।' (वि०भै०६०)

इति,

'अपेक्षां स्वशरीरस्य त्यक्त्वा व्यापी दिनैर्भवेत्।' (१०७)

इत्यादि च। यतश्च उपधानत्यागे सङ्कोचाभावोऽत एव एवं निश्चीयते–स्वभावत एते ज्ञानक्रियाशक्ती अपरिमिते एवेति पारि- मिते एव च बुद्धिप्राणव्यपदेश्ये भवतः, उभयं रूपं संविद्रूपता संवेद्यसङ्कोचश्च। 'तस्यापि' इति विकल्पोल्लेखसुखादेः। 'एक' इत्यत्र हेतुः 'द्वितीया बाह्यता नास्ति' इति कथ्यते 'तदानीम्' इत्यादिना। 'एकैव' इति सदैवेति यावत्। 'उभयगतत्वे' इति अन्तःकरणबहिष्करणवेद्यत्वेऽपि न अत्यन्तं

'दूरान्तिकतया··················।' (२।३।१०)

इत्यादिवाक्ययुक्त्या। ननु घटस्य अन्तःकरणवेद्यतायामेका, चक्षु- र्वेद्यतायां द्वितीयाऽपि; तेन इयमुभयरूपा बाह्यता,–इति यदुक्तं,

तत् कथं; यावता एक एव असौ घटाभासो विमर्शैक्यादिति अधुनैव उक्तमित्याशङ्क्य परिहरति '**यद्यपि च**' इति आभासान्तरव्यामिश्रणादुपपन्नं द्वित्वं बाह्यताया घटाभासभित्तेरेकताया-मपि,–इति तात्पर्यम्। '**तथापि**' इत्यस्य अनन्तरं '**प्रतिपत्त्युत्पादकाले**' इति योज्यं येन सर्वशेषतायामस्य ते आभासाः सविदिता भवन्ति,–इति मन्यन्ते। '**द्वयम्**' इति द्वयं स्मरणे अनुभवे च यथाक्रमं योजनीयम्। अर्थक्रियायोगित्वेन भवनमभवनं च समानपदमन्ये पठन्ति। बाह्यान्तःकरणवेद्यता अनुभवे, एकान्तःकरणापेक्षया तु अद्वयवेद्यता स्मरणे, बाह्यकरणे अन्तःकरणाविनाभावात् न अन्तःकरणं पृथगुपाधेयमनुभवे इत्येवं मन्यमानाः '**करणद्वयवेद्यतया**' इति अन्ये पठन्ति। अथ पूर्वदृष्ट एव अर्थः स्मृतो भासते, स च अनुभूयमानरूप एवेति कथं तस्य असाधारणत्वादिना भेदोऽभिमतः,–इति परमतमाशङ्क्य आह '**स्मृतिकाले**' इति स्मरणकालापेक्षया, तत्स्मरणकालवर्तिषु प्रमात्रन्तरेषु यतो न भासते, अपितु पूर्वप्रमात्रन्तरैरेव तु सह भाति, ततोऽसाधारणत्वमस्य उक्तम्, तदा च न अर्थक्रियां करोति, नच बाह्येन्द्रियमत्र व्याप्रियते, ततोऽस्फुटत्वम्। अत्रैव समुच्चयद्वारेण दृष्टान्तमाह '**तथैव**'[3] इति। तात्कालिकादिरूपमेव आकारतो दर्शयति '**इदं पश्यामि**' इति। सत्यं च बाह्यतया उल्लेखं ग्राहकसमानकक्ष्यतया स्फुटयितुमयमहमिति उक्तम्। यत्र हि शान्तिकादौ पुरोवर्तिनः साध्यस्य उल्लिखितस्य वा मूर्धसरसीरुहनालान्तरालेन गरुडादिदेवताविशेषकरयुगलकुसमकालावर्ज्यमानस्फटिकमहाकलशनिःसृतपरमामृतधारामन्तःसमस्तनाडीचक्रसचयाप्यायचतुरां विशन्तीं ध्यायति, तत्र स्फुटमेव अर्थक्रिया दृश्यते। तत् कथं तत्र न बाह्यता,–इत्या-

१ 'समास' ख। २ 'बाह्यता' ख। ३ 'तथेति' ख.।

शङ्क्य परिहरति '**तथापि**' इति । '**अन्यथैव**' इति । बाह्यतापि उल्लिखितैव तत्र । तथाहि एवं ध्यायामीति, स्फुटमिदं मया ध्यातमिति मम साक्षात्कारमिव प्राप्तमिति मन्यते । '**बाह्य**' इत्यत्र च्छेदः । '**इति**' इत्यादिना प्रागुक्तमुपसंहरति । '**इति**' इति यत् पूर्वमुक्तम्, ततो हेतोरिदमेवस्थितम्—यदनुभूयमानस्य स्मर्यमाणस्य समुल्लिख्यमानस्य च घटाभासस्य वास्तवमेकत्वं, योग्यतया च द्वितयी बाह्यता अस्त्येव बाह्यतया बाह्येन्द्रियवेद्यतया चेति । यस्तु व्यामोहात् न ऐक्यमत्र प्रतीयादनुभूतस्मर्यमाणयोर्हि युक्तमिव ऐक्यं, न तु उल्लिखितस्येति; तं प्रति उल्लिखितेऽपि अन्यथा द्वयीं बाह्यतां प्रसाधयति '**अथवा**' इति । अपूर्वोल्लिखितमपि हि न रूपादिभ्योऽन्यदुल्लिख्यते,—इति सामान्यद्वारेण तत्रापि बाह्येन्द्रियगम्यतालक्षणा द्वितीया अपि बाह्यता सुवचैव । ननु यदि अत्र न अभिनिवेशः, तर्हि किमियता प्रबन्धेन उच्यते । उच्यते '**अवस्तुत्वम्**' इति । ननु बाह्यताद्वित्वनिवेदने सूत्रोक्तबाह्यताविभागप्रख्यापनया अवश्यवक्तव्ये घटादीनामिति विशेषणस्य किं व्यावर्त्यमित्याशङ्क्य या वृत्तिः '**सुखादेस्तु**' इत्यादिका, तां विवृणोति '**सुखादेः पुनः**' इति । अविशेषपदपृष्ठे मात्रग्रहणं ध्यानोल्लिखितगरुडादौ प्रमात्रन्तरासाधारण्याविशेषेऽपि यदुल्लिखितमपरं बाह्यत्वमस्ति, तदपि नास्ति सुखादाविति प्रकटीकर्तुम् ॥ ८ ॥

ननु कुम्भादेः कुम्भकारादिनिर्वर्तनया भवतु बाह्यत्वम्, उल्लेखानां तु किंकृतं तत्,—इति आशङ्क्य सूत्रम्

> उल्लेखस्य सुखादेश्च प्रकाशो बहिरात्मना ।
> इच्छातो भर्तुरध्यक्षरूपोऽक्ष्यादिभुवां यथा ॥ ९ ॥

अन्तर्बुद्धिभूमौ प्रतिबिम्बितस्य नीलादेः 'सुखादेश्च' समस्तस्य

---

१ 'इव स्थितं' ख. ।

भरताद्युक्तस्य स्थायिव्यभिचारिचित्तवृत्तिगणस्य प्रमातुर्विच्छिन्नेन वपुषा यत् प्रकाशनं, तत् 'भर्तुः' अन्तराभासान् धारयतस्तद्बहिष्करणस्वातन्त्र्येण च बाह्यां सृष्टिं पुष्णतो महेश्वरस्य इच्छया स्वातन्त्र्यलक्षणया, यथा अक्ष्यादिभूमिकादिरूपाणां बाह्येन्द्रियगोचराणा नीलादीनां बाह्यतया प्रत्यक्षज्ञानशब्दवाच्यमपूर्विकया तत्प्रथसिकया वा यत् प्रकाशनं, तदपि महेश्वरेच्छयैव । कुम्भकारेऽपि परैव संवित् तदिच्छावभासितविशिष्टबुद्धिप्राणकायस्पन्दादिप्रमुखमृत्पिण्डदण्डचक्राद्याभासरूपा, न पुनरन्यः कश्चिदसाविति वक्ष्यते

'तथाहि कुम्भकारोऽसौ''''' '''''''' ।' (२।४।९)

इत्यत्र । एतदुक्तं भवति–क्षेत्रज्ञे अनिच्छति स्वरसबलादेव य उल्लेखाद्यास्तत्र तावत् भगवतः स्वातन्त्र्यं, यत्रापि पशोरिच्छा स्वप्यते, तत्रापि तदिच्छोदये भगवत एव स्वातन्त्र्यमुपजीव्यं निमित्तान्तराभावात् भगवत्सृष्टितन्त्रोपजीवनाचेति सूत्रार्थः । **'अतद्रूपाच'** इति लज्जा हि न सुखं, न दुःखं, चित्तवृत्तिविशेषश्च । एवमुत्कण्ठादौ वाच्यम् । **'ईश्वरत्वात्'** इति तावति ऐश्वर्यानुप्रवेशात् । **'तयैव'** इति ईश्वरेच्छयैवेत्यर्थः । **'उक्तम्'** इति

'अत एव यथाभीष्टसमुल्लेखा''''''''' ।' (१।६।११)

सूत्रे । **'अन्तः'** इति अगलितस्वभाव एव अहन्तायां संस्काररूपतया स्थित इत्यर्थः । दृष्टान्तं व्याचष्टे **'चक्षुरादि'** इति । ननु तेषां सुखोल्लेखादीनां ग्राहकं मनः, बुद्धिस्तन्निश्चायिका, ततश्च मानसः प्रकाशः,–इति वक्तव्ये कथमुक्तं बौद्धः इति । इमां शङ्कां न्यक्करोति **'ग्राह्य'** इत्यादिना । निश्चयपर्यन्तो हि

---

१ 'इति इत्याशङ्का' ख ।

प्रकाशः, तत् निश्चये बौद्धे तद्विश्रान्तशरीरः प्रकाशो बौद्ध इत्युक्तोऽपि न विशेषमन्यथाभावमपेक्षते प्रसञ्जयतीत्यर्थः। एतत्प्रसङ्गेन अन्यदपि अत्र विचार्यते '**बुद्ध्यादेश्च**' इति नैयायिकभाष्यटीकाकारैः प्रत्यक्षमानसयोगिप्रातिभैन्द्रियकादिभेदेन विभक्तं सूत्रकारश्च ऐन्द्रियकमेव अवादीत्

'इन्द्रियार्थसन्निकर्षोत्पन्नम्……।' (न्या०सू० १।१।४)

इति सूत्रेण। साङ्ख्यादिदर्शने तु पृथगेव अन्तःकरणमिति मानसत्वमस्तु, बौद्धत्वं वा; सौगतनयेन वा स्वप्रकाशज्ञानाव्यतिरिक्तास्ते उल्लेखाः स्वसंवेदनप्रत्यक्षव्यपदेश्या भवन्तु, किमनेन अस्थाने व्यपदेशसमर्थनमात्रनिर्बन्धेनेत्याशयः। ननु अनेन न्यायेन स्मृतिरपि प्रमाणं स्यात्। स्यात् यदि अभिनवमर्थमवभासयेत्, नच तथेति दर्शयति '**स्मृतौ च**' इति। ननु स्फुटोऽर्थप्रतिभासो नव एव, तत् कथं गृहीतस्य ग्रहणमिदम्। अत्र उच्यते '**प्रतिभास**' इति। विमर्शवशादेव व्यवस्था,—इति दृढयति '**यदा पुनः**' इति अर्थमनाद्रियमाणो यदा बोधगतमाकारमेव प्रधानतया विमृशति—मम इदानीमित्थं प्रकाशरूपतया स्थितिरिति, तदा बोधदर्पणप्रतिबिम्बकरूपे बोधादव्यतिरेकिणि आभासे बोधे स्वसंवेदनात्मना प्रत्यक्षतैव। पूर्वं हि अर्थः प्रत्यक्षेण गृहीतः इति विमृष्टम्, अधुना तु अर्थस्य यत् वर्ततां, तत् वर्ततामहमित्थमाभासमयः प्रकाशो,—इति अपूर्वतयैव विमर्शः। '**एवंविवक्षायाम्**' इति बाह्यरूपतानादरेण बोधाभासतामेव यदा विवक्षति परामृष्टुमिच्छति बोधाभासपरामर्शमेव आद्रियते प्राधान्येन। दृष्टान्तमाह '**यथा**' इति। द्विचन्द्रानुभवो हि बाह्यरूपताध्यवसायापेक्षया भ्रान्तः, बोधाभासे तु अभ्रान्तमेव स्वसंवे-

१ 'इयम्' ख.।

दनं, तत एव निश्चये सत्यपि बाह्ये अर्थे स्वसंवेदनानुसारेण इष्टोऽयम्, अनिष्टोऽयमिति अर्थः स्वयमविचित्रोऽपि विचित्रतया यतोऽवस्थाप्यते, ततः स्वसंवेदनमेव अर्थसंवेदनताध्यवसायपर्यन्तीकृतं प्रमाणफलतया प्रकारान्तरेण उक्तम् । एवं प्रसङ्गात् घटानुभववृत्तान्तं निर्वर्ण्य प्रकृतविचारां स्मृतिमेव अनुसन्धत्ते '**पूर्वगृहीतत्व**' इति । इत्थमत्र अवतरणम्—ननु तदेव स्मृतिज्ञानं गृहीतग्राहि च, अभिनवविषयं चेति कथं सङ्गमयितव्यमिति । अत्र उच्यते—भिन्नविषयत्वादयमदोषः, यदा तावत् तस्य आभासस्य पूर्वानुभवं प्रति या विषयता, सा अपेक्ष्यते, तदा गृहीतग्राहित्वम्, सत्यपि च अस्मिन् गृहीतग्राहित्वे अर्थावभासोपहितपूर्वानुभवसद्भावे स्मृतिस्वरूपे च परस्पराव्यतिरेकिणि स्मृतिस्वसंवेदनमेव प्रमाणमित्युक्तं पूर्वं

'स्मृतौ यैव" ·· ..................... ।' (१।७।५)

इति सूत्रे । यदिवा इत्थमवतार्य योजना—यदुक्तं 'पूर्वगृहीतमेव स्मृतिर्गृह्णाति' इति 'पूर्वानुभवं विषयीकुर्वती तथा करोति' इति 'पूर्वानुभवश्च स्मृतिरूपतायामनुवेधकोऽस्ति' इति च, तदत्र अंशत्रये किं प्रमाणमिति, तत्र आह '**पूर्वं**' इति । अपिशब्दः प्राच्यप्रमेयेण सह अस्य प्रमेयस्य समुच्चयार्थः । अंशत्रयसमुच्चयस्तु एकेनैव चकारेण ॥ ९ ॥

अथ यदुक्तम् '**एको महेश्वरः**' इति, तत्र ऐक्यं तावत् निगमयति सूत्रेण

तदैक्येन विना न स्यात्संविदां लोकपद्धतिः ।
प्रकाशैक्यात् तदेकत्वं मातैकः स इति स्थितम् ॥१०॥

तस्मादुक्तरूपात् प्रमेयात् हेतोरिदं जातम्—यत् किल 'संविदां'

---

१ 'घटाभावे वृत्तान्त' ग. । २ 'तत्र' ग ।

ज्ञानानामैक्येन विना लोकमार्गः सर्वो व्यवहारो न भवेत्, अस्ति च अयं, तस्मादवश्यं संविदामैक्यम्। नच तत् दुरुपपादम्। प्रकाश एव हि संविदां परमार्थः, स च एको भेदाभावात्। यश्च असावेकः, स एव परमार्थतः प्रमाता,–इति यदिह उपदेश्यं, तदधुना स्थिरं निष्कम्पं जातम्। वृत्तौ **'परमात्म'** इत्यनेन परमार्थप्रमातृतामस्य आह। तथाहि अजडप्रमातृसिद्धिः

'यद्यप्यर्थस्थितिः·····················।' (२०)

इति। **'इत्यादिनाच'** इति। आकारतो भवन्मुख्यो भेदः, स नास्ति,–इति स्वरूपग्रहणेन उक्तम्। तत्रैव हेतुः **'चिन्मात्ररूपत्वात्'** इति। देशकालाभ्यामपि न भेद इत्याह **'देश'** इति। यद्यपि विचित्रभेदो व्यवहार उक्तः, तथापि व्यापकत्वात् सर्वसङ्ग्राही प्रतिपाद्यप्रतिपादकभाव इह उक्तः, स हि स्वात्मनि अपि संशयवितर्कनिर्णयादौ, परत्र च उपदेशक्रयविक्रयादौ संभवत्येव, तेन विना हि व्यवहारस्य अपि अव्यवहार्यत्वम्। ननु ज्ञानानां स्वसंवेदने स्वे स्वे योजनालक्षणा विश्रान्तिरिति किमेतदपूर्वमित्याशङ्कायामाह **'यदिच'** इति। **'संवेद्यात्मनाम्'** इति संवेद्यस्य नीलादेरात्मभूतानाम्। नीलादेर्हि प्रकाश एव परमार्थो रूपम्। अनेनैव न वास्तवमैक्यमेव उचितमिति उक्तम्। ननु एवं नीलादिना अपि कथमुपरागः क्रियते येन उक्तं **'तत्तत्संवेद्योपहितानाम्'** इति। उच्यते–मायाशक्त्या कृतभेदः प्रकाशात् व्यतिरेचित इव, तत एव भिन्नः, परस्परतोऽपि व्यतिरिच्यमानो यः संवेद्यलक्षणो भागः प्रकाशस्यैव अंशः, तेन ता भेदितास्तासाम्। **'प्रकाशः'**

इति साङ्ख्यजैमिनीयानां स्वप्रकाशा संविदिति स्थितम्। चिरन्तनवैशेषिकाणामपि चित्स्वभाव एव आत्मेति उक्त

'ज्ञानं च चित्स्वरूपं च············· ।' (१।२।७)

इत्येतत्सूत्रविवृतौ। बौद्धैरपि

'बुद्धेश्च ग्राहिका बुद्धिः ·· ············ ····।'

इत्यादि दर्शितमेव। **'सर्वप्रमिति'** इति

'यद्यप्यर्थस्थितिः······ ।' (अ०प्र०सि० २०)

इति हि उक्तम्। ननु मायाशक्त्या यो भेदोऽवभासितः, स किं न भेदः, ततश्च सवेद्यात्मना सविदामिति अयुक्तोक्तिः। आह– 'संवेद्यात्मनां च' इति यदि, तथापि अद्वयम्। तर्हि भ्रान्ता नीलादयः स्युः। अत्र अपि आह **'नापि'** इति। द्वैतानापत्तौ हेतुः **'यतः'** इति। अन्यतः शरीरादेर्वेद्यादेव भेदः, न प्रकाशात्; तयोऽपि हि भेदे भिन्नं भासितमित्येतदेव हीयेत। अत्र आन्तरत्वे हेतुमाह **'यच्च'** इति। ननु एतत् कथं सङ्गच्छतां–नीलादयो भिन्नाः, अभिन्नाश्च–इति। इत्थमित्याह **'ग्राह्य'** इति। ग्राहकोऽत्र मायीयः शरीरादिः। **'प्रकाशात्मा'** इति परमार्थप्रमाता। **'तयोः'** इति ग्राह्यग्राहकयोः। एतच्च निर्णीतं

'तन्मया दृश्यते··············· ।' (१।४।८)

इति सूत्रे। **'तथा च'** इति प्रतिबिम्बकल्पतयैव। ननु एवं शुक्तिकारजतमपि प्रतिबिम्बकल्पमिति उत्सन्नास्त्रिभुवने भ्रान्तिवृत्तान्ताः। सत्यं परप्रकाशापेक्षया। तर्हि क्व भ्रान्तिव्यवहारः। आह **'माया'** इति। **'या काचित्'** इति। सर्वा लोकप्रसिद्धा भ्रान्तिः सत्यमुक्ता बाधचिन्तायां, वक्ष्यते च प्रमाणलक्षणे, किन्तु मायाप्रमातारमपेक्ष्य, यतस्तस्यैव अर्थक्रियाविषयौ संवादविसंवादौ संभवतः॥ १०॥

एवमैक्यं निगमय्य माहेश्वर्यं निगमयति सूत्रेण

स एव विमृशत्त्वेन नियतेन महेश्वरः ।
विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः ॥ ११ ॥

अविच्छिन्नविमर्शत्वं नाम यत् विमृशद्रूपत्वं तत एव नियतम् । नहि अस्य प्रकाशलक्षणं रूपं नीलसुखाद्युपरागरूपं वा गल्वर्कमणेरिव अविमृष्टं जातुचित् भवति, तेन अनन्योन्मुखतात्मना आनन्दरूपेण अहमितिचमत्कारात्मना महानीश्वरः, यतो देवस्य एते एव ज्ञानक्रिये शुद्धे पारमार्थिक्यौ योऽयं विमर्शो नाम 'उक्तन्यायात्' इति

'स्वभावमवभासस्य............।' (१।५।११)

इत्यत्र अन्तरे । स्यादेतत् । भवतु नाम प्रकृतौ संवेदनलक्षणः प्रकाशः, प्रत्यये तु किपि भाव एव अभिधेयो, नतु विमर्शः, तत् कथमुक्तम् 'प्रकृतिप्रत्ययाभ्याम्' इति । एवं मन्यते-धातुना तावत् संवेदनं ज्ञानलक्षणमुक्तं, घञादयस्तु क्रियायामेव विधीयन्ते, सा तु क्रिया धर्मान्तरेण सिद्धताख्येन भेदितैव भावप्रत्ययवाच्या सिद्धताप्रत्यवमर्शयोग्यतैव–अयं पाकः इति । अत्र केवलं प्रत्यवमर्शो भवन् न पाकक्रियास्वात्मरूपनिवेशी प्रमातुस्तथाप्रत्यवमर्शोदयात्, संवेदने तु प्रकाशवपुषि प्रत्यवमृश्यता भवन्ती न अन्यापेक्षया युक्ता,–इति संवेदनतादात्म्यवृत्ति यत् प्रत्यवमृश्यमानत्वं, तदेव सिद्धतारूपप्रत्यवमर्शस्वभावे स्वातन्त्र्ये विश्राम्यतीति । अतश्च संमेलितौ प्रकृतिप्रत्ययौ ज्ञानक्रियाविमर्शलक्षणं जडवैलक्षण्यापादकं रूपं यस्यास्तादृशीं परिपूर्णलक्षणामभिव्यङ्क्तः । 'अनुसन्धानात्मनः' इति प्रमातुः स्वातन्त्र्यं दर्शितम् । 'अस्य' इति परमात्मनः । ननु एवं 'चित्'

१ 'रूपं प्रत्य' ग. । २ 'त्मकं' ख. ।

इत्यत्र यदि ज्ञानक्रिये प्रविष्टे, तर्हि ज्ञानमित्यत्रापि प्रकृति-प्रत्ययसद्भावात् ते प्रविष्टे एव, तत् किं पुनः **'क्रिया'** इति अधिकमभिधीयते। अत्र उच्यते **'ज्ञानमित्यपि'** इति। सत्यमेव-मेकाकिनि अपि अत्र शब्दे इति अपिशब्दः । **'उच्यते'** इति प्रकृतिप्रत्ययभागद्वयेन । **'प्राधान्येन'** इति यद्यपि 'प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति, तथापि तस्य प्रत्ययार्थस्य प्रकृत्यर्थधर्मत्वेन स्फुरणात् धर्मस्य धर्मिणमुद्रेचयतः एव धर्म-त्वात् धर्मिणि प्रत्ययलक्षणे बोधभागे स धर्मः प्राधान्यमुन्मज्ज-यति क्रियेति। **'अपिच'** इति चः समुच्चये। यत्रापि बोधभा-गाभिधायकं भागान्तरं नास्ति, तत्रापि एवमिति अपिशब्दः। अत एव पूर्वत्र **'उच्यते'** इति उक्तम्, इह तु **'आक्षिप्त'** इति। आ-क्षेपहेतुमाह **'अनवबोधस्य'** इति। एतदेवच युक्तमिति दर्श-यति **'वस्तु एकमेव'** इति। ननु विमर्शः कस्मात् माहेश्वर्यम्। आह **'आज्ञस्येन'** इति। अनन्यापेक्षता हि विमर्शः, सैवच स्वतन्त्रता। ननु बोधस्य विमर्शो व्यापकः स्वामी, बोधो हि विमर्शं न व्यभिचरति न त्यजति कदाचित्, ततस्तस्य अव्यभि-चरणे कर्मतायां वाच्यायां कथं कर्तृता उक्ता,–इत्याशङ्क्य सम-व्याप्तिकयोरित्थमभिधानेऽपि न दोषः,–इति ब्रूते **'बोधस्य अव्यभिचरणीयोऽपि विमर्शः सदा'**इति। बोधस्य विम-र्शोऽव्यभिचरणीयः, स चापि बोधोऽव्यभिचरणीयः सामर्थ्यात् विमर्शस्य, तस्मादस्य अव्यभिचारिणो विमर्शस्य अपि कर्तृता न न युक्ता । समव्याप्तिकत्वे हेतुमाह **'अव्यभिचारवत्त्वात्'** इति परस्परेणेति यावत्। एवं कर्तृतामुपपाद्य हेतूक्तिमसङ्गस्मृ-तेन व्युत्पत्त्यन्तरेण योजयति **'तदापि'** इति अव्यभिचारवत्वं यदुक्तं, ततोऽपि हेतोर्मत्वर्थीयप्रत्ययोपपत्तेर्युज्यते एव इत्थमभि-

धानम्। ननु आत्ममात्रविमर्शोऽसावहमिति, तत्र भावनिर्भरता न विमृष्टैव। नैवमित्याह **'तदा च'** इति। ननु असन्तोऽपि इच्छया उन्मिषेयुरित्याशङ्क्य आह **'इष्यमाण'** इति। नभवने हेतुर्निर्विषयत्वमेव। अवश्यंभाविकर्मपरिग्रहा क्रिया तत्कर्माभावे न भवति जीवनमिव प्राणाभावे, तथाच इषिक्रियेति स्वभावविरुद्धोपलब्धिः। ननु एवं भावाभासानवस्थितानपेक्षमाणो विमर्शः कथं शुद्धः। इत्थमिति उच्यते **'एवं च'** इति। अनेन प्रकारेण अहमितिरूपेण यत् भावानामवस्थानं तत् नित्यं परमात्मनो न भिन्नं, तदेवच अहमितिरूपमिति न अस्य अशुद्धिः काचित्। नहि व्यतिरिक्तं तदा किञ्चिदपेक्षितव्यमस्ति। अथ शुद्धग्रहणस्य व्यावर्त्यं व्याख्यातुमुपक्रमते **'सैव'** इति। शुद्धिमशुद्धिं च विभजति **'शुद्धत्वेऽपि'** इति **'अशुद्धिहेतुत्वात्'** इति च। आरोपितमेतदशुद्धत्वं, न स्वाभाविकमहन्तैकान्तविश्रान्तेः। एवमहन्तायाः शुद्धाशुद्धत्वं व्याख्याय, अशुद्धत्वं व्याचष्टे **'सैव'** इति। न असावहन्ता अन्या, अपितु स्वशक्तिवैचित्र्यात् सैव अनेन रूपान्तरेण भाति तत्त्वभुवनभावभूतप्रभृतिषु अवभासभागेषु। आभासभेदेषु तावत् वस्तुतोऽसावहन्ता व्यापकत्वेन अनुप्राणकत्वेन तावदाभासान्तर्भावनेन अवतिष्ठते। तत् तथाभूतं यदहन्तया अवस्थानं तत् यदा इदन्तावमर्शयोग्यतया तेषामाभासने मायाशक्तिकृतया तिरोहितं, तदा सा अहन्तादशा संसारिणामुचिता योग्या; तस्यां दशायामहंविमर्शनं यत्, तदशुद्धमुक्तमिति दूरेण सम्बन्धः। अहंविमर्शनस्य स्वरूपं दर्शयति प्रकाशरूपं, क्रियारूपं च भवदपि तथा शक्ति-

१ 'अहन्तैकार्थ' ख.।

रूपत्वात् प्रच्युतं, ततो ज्ञानं सत्त्वव्यपदेश्यं, क्रिया रजोव्यपदेश्या तत्र च मध्ये नियामकं तमः प्रविष्टं, तेन गुणत्रयमयमहमिति-विमर्शनं जातं स्वरूपप्रच्युतौ हेतुः। भिन्नमिदंभागावस्थितं यत् बुद्धिप्राणादि, तच्छरीरतया तद्धर्मतया तदहंविमर्शनमुत्पन्नम्, तत उत्पत्तिहेतोः प्रच्युतस्वरूपं तत्। तथोत्पत्तिरस्य कुतः। आह–भिन्नं ग्राह्यमपेक्षमाणं ततो ग्राह्यात् भिन्नं यत् ग्राहकमात्रं स एव भागांशस्तमवगाहते यतः, तस्मादेवमुत्पन्नम्। एवंभूतस्य अहंविमर्शस्य आकारं दर्शयति '**अहमयम्**' इत्यादिना '**करोमि च**' इत्यन्तेन। ननु अत्र ग्राह्यग्राहकयोः कथं भिन्नता। आह '**वैयधिकरण्येन**' इति। ननु पुरुषस्य सत्त्वरजोवृत्तिरूपे ज्ञानक्रिये बुद्धितत्त्वगते अहमिति व्यवह्रियेते,—इति कापिला मन्यन्ते, त्वया का इयमपूर्वा प्रक्रिया उत्थापिता। न अपूर्वा काचित्। नहि पुरुषो नाम अन्यः, अपितु ऐश्वर्यस्य निजस्य यदप्रत्यभिज्ञानं, तदेव प्रकृतं रूपं यस्य सङ्कुचितसविल्लक्षणस्य, स पुरुषः। तत्सम्बन्धिन्यौ ये ज्ञानक्रिये, तत्स्वभावं तदहं-विमर्शनम्। एतच्च

'स स्वरूपापरिज्ञानमयोऽनेकः पुमान् ··· ।' (४।१।३)

इत्यस्मिन् प्रकरणे वितनिष्यते। '**अनूदितम्**' इति वृत्तौ। अनु-वदनं च अत्र भित्तिकल्पत्वेन, नतु 'यत्र यत्र धूमः' इत्यनेन न्यायेन। एवंहि सति धूमवत्त्व यथा अग्निमत्त्वस्य विधेयस्य व्यापकं, तथा अहंविमर्शनमपि शुद्धव्यामिश्राशुद्धानां दशानां स्यात्, भित्तिकल्पतया तु यत् पूर्वसिद्धत्वेन यदनुवदनम्, तद-नुवदनीयस्य व्यापकतामाचष्टे। एतदर्थद्योतकश्च एवकारो-ऽग्निमानेव धूमवानिति यथा। ननु त्रिविधं तदहंविमर्शन-

मुक्तं शुद्धादिभेदेन, तत्र आगमसिद्धं परव्यामिश्रापरलक्षणं दशान्तरत्रितयं किं त्यक्तमेव । न त्यक्तं, सङ्गृहीतमेव,–इत्याह **'एता एवच'** इति । **'वक्ष्यन्ते'** इति

'अत्रापरत्वं भावानाम्............ ।' ( ३।१।५ )

इति सूत्रेण ॥ ११ ॥

इति श्रीमहामाहेश्वरश्रीमदाचार्याभिनवगुप्तपादविरचितायामीश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यां शक्तिवर्गैकाश्रयगतमाहेश्वर्यविमर्शोऽष्टमः ॥ ८ ॥

समाप्तश्च अयं ज्ञानाधिकारः प्रथमः ॥

